# सागरिका

त्रैमासिकी

दशमवर्षे प्रथमाङ्कः
२०२८

प्रकाशिका
संस्कृतपरिषद्, सागरविश्वविद्यालयः
सागरम् [ म. प्र. ]

# सागरिका

त्रैमासिकी




दशमवर्षे प्रथमाङ्कः

२०२८

संपादकः
डॉ० रामजी उपाध्यायः
सागरविश्वविद्यालये
संस्कृतविभागस्य प्राध्यापकाध्यक्षः

मूल्यं रु० ८.०० वार्षिकम् ]　　[ मू० प्रत्यङ्कं रु० २-००

प्रकाशिका
संस्कृतपरिषद्
सागरविश्वविद्यालयः,
सागरम् [ म० प्र० ]

देयम्

| | |
|---|---|
| प्रत्यङ्कम् | २ रूपकौ: |
| वार्षिकम् | ८ रूपकाः |
| वस्त्रावरणसंहितवार्षिकचतुरङ्काणाम् | १० रूपकाः |
| आजीवनग्राहकस्य | १०० रूपकाः |
| अङ्कनिर्गमनम् | आषाढ-आश्विन-पौष-चैत्रमासेषु ( जून-सितम्बर-दिसम्बर-मार्च ) |

मुद्रकः
श्री शिवनारायण उपाध्यायः
नयासंसारमुद्रणालयः
भदैनी
वाराणसी–५

# विषयसूची





# आत्मनो विभुत्ववादो गौतमसम्मतः

डॉ० गजाननशास्त्री मुसलगाँवकरः

'जीवात्मा विभुर्वा अणुर्वा ? यद्यपि प्राचीनोऽयं विवादः किन्तु अद्युनापि विवदन्ते बहवः शास्त्रपारावारपारीणा विद्वाँसस्तथापि निश्चयं नाधिगच्छन्ति।

माध्वादयश्चत्वारोऽपि साम्प्रदायिका अणुवादिनः, दयानन्दसरस्वतीमहोदयानामणुत्वपक्ष एवाभिमतः, महामहोपाध्याय श्रीराखालदासन्यायरत्नमहाभागैर्जीवतत्त्वनिरूपणाख्ये ग्रंथे अणुत्ववाद एव समर्थितः। वेदान्तशास्त्रस्य बोधायनवृत्तौ बोधायनाचार्येण जीवात्मनः अणुत्वमेव सिद्धान्तितम्, श्वेताश्वतरोपनिषदि "बालाग्रशतभागस्य शतधा कल्पितस्य च" इत्यनेन जीवात्मनः अणुत्वं सुस्पष्टं दृढीकृतम्।

किन्तु गोतमप्रभृतयः सर्वे एव दार्शनिकाः स्वे स्वे शास्त्रे जीवस्य विभुत्वमेव अभ्युपगच्छन्तो दृष्टिपथमवतरन्ति।

## विभुत्ववादिनां नैयायिकानां

**तावदेष सिद्धान्तः**—'विषयतासम्बन्धेन प्रत्यक्षत्वावच्छिन्नम्प्रति समवायादिसम्बन्धेन महत्त्वस्य महत्त्ववद्वृत्तेर्वा कारणत्वम् विषयतासम्बन्धेन यत्र' ( घटादौ ) प्रत्यक्षं जायते तत्र समवायादिसम्बन्धेन महत्त्वस्य कारणत्वम्। अर्थात् यद्वस्तुविषयकं प्रत्यक्षमुत्पद्यते तेन वस्तुना महता भवितव्यम्। महत एव वस्तुनः प्रत्यक्षं भवति, महत्त्ववद्वृत्तेर्वा। नहि पारिमाण्डल्यपरिमाणवतः अणोर्द्व्यणुकस्य वा, बहिरिन्द्रियजन्यं प्रत्यक्षं कस्यापि भवति, गुणादेरपि प्रत्यक्षं महत्त्ववद्वृत्तेरेव भवति, तत्संग्रहार्थमेव कारणतावच्छेदकसम्बन्धकोटौ समवायादीत्यादिपदोपादानम्। तेन स्वाश्रयसमवायादौ संगृहीते रूपादिप्रत्यक्षोपपत्तिः।

आत्मा च नित्य इति सर्वतन्त्रसिद्धान्तः, अन्यथा बाल्ये दृष्टस्य यौवने स्मरणानुपपत्तेः। जीवात्मनो नित्यत्वमभ्युपेत्यैव विभुत्वाऽणुत्वविचारः।

**नित्यस्य वस्तुनस्तावद् द्वयी गतिः**—विभुत्वमणुत्वं वा। तत्र जीवात्मनः अणुत्व न संभवति सुखदुःखादीनामप्रत्यक्षत्वापत्तेः अतएव सुखादीनां न मनोवृत्तित्वं, मनसोऽणुत्वेन तेषां प्रत्यक्षत्वानुपपत्तेः, प्रत्यक्षम्प्रति महत्त्वस्य कारणत्वमित्युक्तम्।

परिशेषात् जीवात्मनो विभुत्वं बलाद् गलेपतितम्। तच्च प्रतिव्यक्तिविलक्षण-सुखदुःखोपलब्धेः प्रतिशरीरं जीवस्य भिन्नत्वात् प्रत्येकं जीवात्मनो बोध्यम्। एवं च नित्या नानाजीवास्ते च सर्वे विभव इति सिद्धं भवति। न्यायभाष्ये बहुधा यत्र तत्र आत्मनो विभुत्वं समादिष्टमिति नाऽदृष्टचरं शास्त्रानुशीलन-कर्तृणाम्, तथापि न्यायसूत्रेषु न क्वापि जीवात्मनो विभुत्वं समुपात्तम् प्रत्युत अणुत्वमेवेति व्यवहर्तृणां हठादाकृष्टचेतसां केषाञ्चित् सूत्रार्थान्यथाकरणे प्रवृत्तानामवबोधनार्थं कानिचित्सूत्राणि प्रदर्श्यन्ते—

"युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्"—न्या० सू० १।१।१६ युगपज्ज्ञानानुत्पत्तिरूपहेतुना मनोऽनुमीयते, इति सूत्रार्थः। अयमभिप्रायः—यदि मनो न स्यात् तर्हि आत्मसन्निकर्षेन्द्रियाणां स्वस्वविषयै रूपादिभिः सन्निकर्षस्य सत्वात् युगपत्स्पार्शनचाक्षुषादीनि ज्ञानानि उत्पद्येरन्। न च एककालावच्छेदेन ज्ञानानि उत्पद्यन्ते। तस्मादस्ति कारणान्तरं, यत्सम्बन्धाधीनयुगपज्ज्ञानानुत्पत्तिः। तच्चाणु मन एव। तदेतत्सर्वं विभुवादे एव संगच्छते। विभोरेवात्मनः नानेन्द्रियैः सन्निकर्षः सम्भवति, नाणोः। विभुपक्षे एव मनसोऽभावे युगपज्ज्ञानोत्पत्तिः सम्भवति, नाणुपक्षे। जीवात्मनोऽणुत्वे सूत्रकाराभिप्रेते युगपज्ज्ञानानुत्पत्तिः स्वतः सिद्धा, अणोरात्मनो नानेन्द्रियैः सह एकदा सन्निकर्षस्य असम्भवात्, आत्मसन्निकृष्टानामेव इन्द्रियाणां विषयैः सन्निकर्षे सति ज्ञानोत्पत्तिजनकत्वनियमात्। तत्किमर्थः मनःस्वीकारः? कया वा व्याप्त्या मनोऽनुमानम्? किंच—

"युगपज्ज्ञेयानुपलब्धेश्च न मनसः"—न्या० सू० ३।२।१६ एकदा रूपादिसकलज्ञेयानुपलब्धेर्न मनसो बुद्धिर्गुणः। गुणत्वेनावस्थितायास्तस्या आत्मगुणत्वमेवोचितं भवेत्, धर्मग्राहकमानेन बुद्धिम्प्रति असमवायिकारणत्वेन क्लृप्तस्य मनसः समवायिकारणत्वासंभवाच्चेति सूत्राभिप्रायः।

"तदात्मगुणत्वेऽपि तुल्यम्"—न्या० सू० ३।२।२० बुद्धेः आत्मगुणत्वेऽपि युगपज्ज्ञेयोपलब्धिरूपदोषस्तदवस्थ एव। आत्मनो विभुत्वात् सर्वैरिन्द्रियैरेकदैव संयोगात् युगपज्ज्ञानोत्पत्तिसंभवात्। तच्चैतत् विभुपक्षे संभवति, नाणुपक्षे।

"इन्द्रियैर्मनसः सन्निकर्षाभावात् तदनुत्पत्तिः"—न्या० सू० ३।२।२१ मनसोऽणुत्वेन एकदा इन्द्रियैः सन्निकर्षासंभवात् न युगपज्ज्ञानोत्पत्तिः संभवति। इत्थं शंकासमाधानतः आत्मनो विभुत्वे सूत्रकाराभिप्रायः स्पष्ट एव। न हि आत्मनः अणुत्वपक्षे एकदा इन्द्रियैः सन्निकर्षसंभवः, यत्कृता युगपज्ज्ञानोत्पत्तिः शंकनीया भवेत्, न वा मनसः सन्निकर्षाभाव आत्ममनःसन्निकर्षाभावो चोद्यः स्यात्। मनसः सन्निकर्षाभावञ्च ब्रुवतो भगवतः

सूत्रकारस्य अवश्यमेकदा तैरिन्द्रियैरात्मसन्निकर्षोऽभिप्रेत इति नाज्ञातमधिगतशास्त्रधियाम् ।

अत्र अणुत्ववादं समर्थयितुकामेन श्रीहरिप्रसादस्वामिना स्ववैदिकवृत्तौ किमपि अपूर्वं बुद्धिकौशलं समुद्भावितं, तदवश्यं वादिकथासागरे निमज्जनशीलै र्विद्वद्भिरवलोकनीयम्—

तदात्मेति सूत्रं विवृण्वता तेनोक्तम्—"अस्ति आत्मनः अणुत्वेऽपि सर्वेन्द्रियैः सन्निकर्षः। मनसो मध्यमपरिमाणत्वेन आत्मनो मनसा, मनसश्चेन्द्रियैरिति तत्क्रमाभ्युपगमात् । न हि यो मनसा संयुज्यते तत्संयुक्तैरिन्द्रियैर्न संयुज्यते, नचाङ्गुलितरुसंयोगे हस्ततरुसंयोगो न भवति, इन्द्रियैर्मनस इत्यत्र च" वयमात्ममनसोर्मन—इन्द्रियाणां च सन्निकर्षमात्रं न ज्ञानोत्पत्तिकारणमभ्युपगच्छामो येनोक्तदोषःस्यात् ।

अपिच अदृष्टवदात्मनो मनसा तादृगात्मप्रयत्नेन तत्तदिन्द्रियप्रदेशे लब्धवृत्तिकस्य मनसश्च इन्द्रियैः सन्निकर्षस्तत्कारणमिति स्वीकुर्मः । न चेदृक् सन्निकर्षो युगपत्सर्वेन्द्रियैरात्मनो विद्यते" ।

तदेतत्सर्वं ग्रन्थस्य पूर्वाऽपराननुसन्धानप्रयुक्तमज्ञानविजृम्भितमिति स्पष्टं प्रतीयते । भाष्ये तु—"तदात्मेतिसूत्रे विभुरात्मा सर्वेन्द्रियैः संयुक्त इति युगपज्ज्ञानोत्पत्तिप्रसंग" इत्युक्तम् । एतत्पूर्वसूत्रेऽपि—"योगी खलु ऋद्धौ प्रादुर्भूतायां विकरणधर्मान्निर्माय सेन्द्रियाणि शरीरान्तराणि तेषु तेषु युगपज्ज्ञेयानि उपलभते, तच्चैतद् विभौ ज्ञातरि उपपद्यते, न अणौ मनसि ।"

परन्तु भाष्यमप्रमाणीकुर्वता स्वामिना सूत्रकारमतमेव युक्तिभिः समुपपादनीयम् । भगवतः सूत्रकारस्य मते युगपज्ज्ञानानुत्पत्त्यर्थं मनसः स्वीकारः, मनसः अस्वीकारे युगपज्ज्ञानोत्पत्तिः । परन्तु स्वामिनो मते आत्मनः इन्द्रियैः एकदा सन्निकर्षासंभवः, मनसः अस्वीकारपक्षे । मनः सत्त्वे च तस्य मध्यमपरिमाणत्वेन सर्वेन्द्रियसन्निकर्षसंभवः, अर्थात् युगपज्ज्ञानोत्पत्त्यर्थं मनःस्वीकारः, तेन सूत्रकारसिद्धान्तेन सह विरोधः स्पष्ट एव ।

किञ्च दृष्टवदात्मसन्निकर्षं कारणत्वेन स्वीकुर्वन्ति स्वामिनः । तदेव खलु कारणं वक्तव्यं भवति यत् साधारणं नाम । अदृष्टस्य तु कार्यमात्रम्प्रति हेतुत्वात् साधारण्यम् । अदृष्टेनैव कार्यसंपादने अलं मनसापि, अदृष्टेनैव युगपज्ज्ञानोत्पत्तिवारणसंभवात् । सर्वमेव कार्यजातं यद्यपि अदृष्टाधीनं तथापि स्वनियतकारणमवश्यमपेक्षते । नहि शालीनामदृष्टादुपचयसंभवेऽपि

वृष्टिर्नापेक्ष्यते । नहि अदृष्टरूपाधिष्ठातरि अपेक्षिते बाष्पयानं बाष्पन्नापेक्षते । तदवश्यं तत्तत्कार्यम्प्रति अदृष्टातिरिक्तं नियतकारणमिव कार्यसंपादनक्षमं किमपि कारणं वक्तव्यम् ।

आत्मविभुत्ववादिनां मते तु मनसोऽणुत्वेन इन्द्रियैः सन्निकर्षाभावात् न नानाज्ञानोत्पत्तिरिति यथासूत्रमेवोपपन्नम् ।

किन्तु अणुत्ववादिनां मते यथासूत्रं कार्यानिष्पत्तेः दोषतादवस्थ्यात् कारणान्तरकल्पनम् । सूत्रकारस्य सूत्रप्रणयनाज्ञानञ्च अदृष्टवदात्मनः सन्निकर्षाभावात् इति वक्तव्ये यदन्यथा प्रणयतीति नैके दोषाः ।

"अयस्कान्ताभिकर्षणमदृष्टकारितम्" इति वैशेषिकसूत्रे अदृष्टस्य अतीन्द्रियार्थत्वकल्पनं व्यर्थमिति दृष्ट्वा महदाश्चर्यं भवति ।

अथ दृष्टस्य हेतुत्वस्वीकारेऽपि कुतो नेच्छावशात्सत्यपि कारणसमवधाने सकलज्ञानोत्पत्तिः ? यदा खलु अयं द्रष्टुमिच्छति तदा पश्यति, यदा श्रोतुमिच्छति तदा शृणोति । नहि अविकलेन्द्रियेषु सत्त्वेषु इच्छा, सत्त्वे च क्वापि दर्शनाभावः श्रवणाभावो वा दृष्टचरः । नापि सर्वेषामेव अदृष्टा एतादृशा अपकृष्टा येन विशालायां खलु अस्यां सृष्टौ न कस्यापि सकलज्ञानोत्पत्तिः संभवेत् ।

अथ योगिनस्तु विशिष्टाऽदृष्टोत्पत्तेरतीन्द्रिय-मानसज्ञानमिव कथं न बहिरिन्द्रियजन्यं सकलज्ञानमुत्पद्यते ?

किञ्च मनसो मध्यमपरिमाणत्वेन सकलेन्द्रियसन्निकर्षयोग्यदेशकत्वाद् एकेन्द्रियेण संयुक्ते कथं न अपरेन्द्रियैः संयोगो जायते ? जाते वा ज्ञानं केन वार्यते ? नहि नित्यवस्तुनः अदृष्टवशात् केनचिन्मूर्त्तपदार्थेन संयोगः केनचिन्नेति-संभवति ।

तस्मात् सूत्रकाराऽनभिप्रेतं बुद्धिविरुद्धञ्चैतत् स्वामिव्याख्यानं सर्वथा हेयम् । तथाच—जीवात्मा विभुः, मनश्च अणु, न तु मध्यमपरिमाणं सूत्रकाराऽभिप्रेतमिति सुस्पष्टं भवति ।

अथ बुद्धेरात्मगुणत्वे एकदैव नानास्मृतयः कथं नोत्पद्यन्ते ? आत्मनो मनसा सह सन्निकर्षस्य सत्वात् इत्याशंकायाम् "अज्ञानसमवेतात्मप्रदेशासन्निकर्षाद् मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः"—३।२।२५ इति समाधानम्प्राह । विभुः खल्वयमात्मा । यदा अयं शरीरी गृहे भवति तदा गृहदेशावच्छिन्नात्मप्रदेशावच्छेदेन ज्ञानानि उत्पद्यन्ते संस्काराश्च । यदा च अयमुपवने भवति तदा तद्देशा-

वच्छेदेन आत्मप्रदेशे ज्ञानादीनां संभवः। उपवनादिदेशावच्छिन्नसंस्काराविष्टात्मप्रदेशेन मनसः सन्निकर्षे सति स्मृत्युक्तिः, नान्यथा। नचैकदा नानाताद्दशात्मप्रदेशेन मनसः सन्निकर्षसंभवः। तस्मान्न युगपत् स्मरणोत्पत्तिरिति समाधातुराशयः। एतच्च स्मरणकाले शरीरधारणदर्शनात् मनसः अन्तःशरीरवृत्तित्वमिति हेतुना प्रत्याख्यातं, न पुनः जीवात्मनो विभुत्वाऽभावेन। वादिना मनसः आशुगतित्वात् दोषोद्धारे कृते स्मरणकालस्य इयत्ताभावात् दोषतादवस्थ्यमुपपादितम्, न विभुवादः प्रत्याख्यातः। एकदेशिना प्रकारान्तरेणैव पूर्वोक्तमतोपपादने कृते, प्रकारान्तरेणैव एकदेशिमतं दूषितम्, न पुनर्विभुपक्षे कुठाराघातः कृतः; येन मूलस्यैवोच्छेदः स्यात्। एकदा उद्बोधकानुपस्थितेर्न युगपत् स्मरणोत्पत्तिरिति सिद्धान्तितम्।

अथ चेदात्मनो विभुत्वं सूत्रकारानभिप्रेतं स्यात् अवश्यं तत्प्रत्याख्यानेन भवितव्यम्। तस्मात् विभुत्ववादः सूत्रकाराणामसम्मत इति नायाति।

**"ज्ञानाऽयौगपद्यादेकं मनः"**—२।३।५६।

प्रतिशरीरम् एकं मनः, एकदा नानाज्ञानानुत्पत्तेः, अन्यथा यावदिन्द्रियं मनःसत्वे युगपज्ज्ञानोत्पत्तिरनिवार्या स्यात्।

अणुवादे तु मनसो नानात्वेऽपि प्रतिमन एकदा आत्मनः सन्निकर्षाभावात् न युगपज्ज्ञानोत्पत्तिः संभवति।

**"यथोक्तहेतुत्वाच्चाणु"**—२।३।५९।

ज्ञानायौगपद्यादेव मनः अणु अपि, विभौ मध्यमपरिमाणे वा मनसि ज्ञानयौगपद्यमनिवार्यम् आत्मनो विभुत्वात्। आत्मनो विभुत्वं यथा सूत्रकाराभिप्रेतं तथा उपपादितम्। अणुवादे च मनसो मध्यमपरिमाणत्वे ज्ञानयौगपद्यं यथा अनिवार्यं तदपि पूर्वमेवोक्तम्। मनसो विभुत्वं च दीर्घशष्कुल्याः स्पार्शनचाक्षुषरासनज्ञानानां मनस आशुसंचारात् युगपदुपलब्धेर्भ्रमत्वोपपादनात् न संगच्छते, प्रत्युत अणुवादिमते आत्मन आशुसंचारित्वं संगच्छते; न मनसः; मनसो विभुत्वेन सर्वेन्द्रियसंयोगस्य सत्वात्। मनस आशुसंचारित्वेन प्रतीन्द्रियं झटिति संयोगमुपपादयतो महर्षेर्गोतमस्य 'अणुमनः' न तु महत् (विभु) इति स्पष्ट एवाशयः।

मनसो मध्यमपरिमाणत्वं साधयता स्वामिना मनसः उत्पत्तिरपि **'पूर्वकृतफलानुबन्धात्तदुत्पत्तिः"**—२।३।६४। अनेन सूत्रेण वर्णिता। अदृष्टाधीनजन्मसाधकपरसूत्राणां मनोमात्रोत्पत्तिपरव्याख्यानेन स्वामिनः साहसमेव दृष्टिपथमायाति।

केचित् खलु पूर्वकर्मनिरपेक्षं प्रकृतिस्वाभाव्यादेव शरीरमुत्पद्यत इत्याहु :—

"भूतेभ्यो मूर्त्युत्पादनवत्तदुपादानम्—२।३।६५ यथा स्वभावादेव पाषाण-पर्वतादीनामुत्पत्तिस्तथा शरीरस्यापि उत्पत्तिः न पुनरदृष्टनिमित्तिका। तन्मते यथा अदृष्टाधीनशरीरस्य ( मूर्त्तेः ) उत्पत्तिस्तथैव मनसोऽपीति सूत्रार्थः। तत् पूर्वापरसूत्राननुसन्धादनापव्याख्यानम्प्रतिभाति। अदृष्टाधीनत्वं हि असहमानो वादी भूतेभ्य इत्याक्षिपति अत एव "न साध्यसमत्वात्" इत्यग्रिमसूत्रे केवलभूतेभ्यः पाषाणाद्युत्पत्तेः साध्यकोटिप्रविष्टत्वमुक्तम्, परन्तु अपव्याख्यातुर्मते तु दृष्टान्तस्य साध्यत्वं तथासति अग्रिमसूत्रद्वयस्य वैयर्थ्यं स्यात्—

"नोत्पत्तिनिमित्तत्वान्मातापित्रोः तथाहारस्य"

"प्राप्तौ चानियमात्"

इत्यस्य। सिद्धान्तिमते तु पाषाणादिभ्यः वैलक्षण्योपपादनार्थं सूत्रद्वयम्। तृतीय सूत्रं तु शरीरस्य अदृष्टाधीनत्व–प्रतिपादनार्थम्। अपव्याख्यातुर्मतेतु अदृष्टाधीनत्व मेव साध्यं, तत्र न सूत्रद्वयस्योपयोगः, किन्तु तृतीयस्यैव। तच्च मातापितृसंयोगे च अनियमात् इत्येवं सूत्रयितव्यम्। सत्यपि सर्वत्र मातापितृसंयोगे क्वचित् पुत्राद्युत्पत्तिर्दृश्यते क्वचिन्न। स एष नियमोऽदृष्टाधीन इति सूत्रार्थः।

"शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्तं कर्म"

३।२।६६

यथा अदृष्टाधीना शरीरोत्पत्तिस्तथैव आत्मनो विभुत्वेन सर्वेषां सर्वशरीरैः सम्बन्धस्य सामान्येऽपि अदृष्टादेव कस्यचिदात्मनः केनचित् संयोगविशेषः, न तु अपरेण न वा अपरस्य। अत्रापि स्वामिना संयोगपदेन मनोग्रहणं कृतं तदपि न शोभनम्। तन्मते तु भूतेभ्य इति सूत्रेणैव गतार्थत्वात् अस्योपयोगश्चिन्तनीयः। संयोगपदस्य मनोवाचकत्वे प्रमाणञ्चान्वेषणीयम्। मुख्यार्थत्यागे हेतुर्वाच्यः। तदेतेनापि विभुवाद एव समर्थितो भवतीति किं पल्लवितेन। एतावता आत्मनो विभुत्वं न्यायशास्त्रसम्मतमिति स्पष्टं भवतीति शम्।

———

# जयपुरे संस्कृतसाहित्यसंवर्धनम्*

[ १८३५ ई० तः—१९६५ ई० यावत् ]

श्रीराधावल्लभत्रिपाठी

जयपुरनगरं स्वसौन्दर्येण भव्यकलात्मकतया तु जगत्प्रख्यातमस्त्येव, संस्कृतपाण्डित्यस्यापि वाराणसीवदिदं केन्द्रमासीत्, अस्ति च। नगरस्यास्य सवाई-जयसिंह-माधवसिंह-पृथ्वीसिंह-जगतसिंह-प्रभृतयः प्रशासका भारतीयसंस्कृते-र्जीवातुभूतस्य संस्कृतसाहित्यस्य संरक्षणे बद्धादराः संस्कृतपण्डितानां चाश्रय-दातार आसन्। एभिः शासकैर्बहवः संस्कृतमहाविद्यालया विद्यालयाश्च जयपुरनगरे स्थापिताः संस्कृतभाषायां ग्रन्थादीनां सर्जनाय विद्वांसः सुकवयश्च प्रोत्साहिताः। विगतशतकेषु जयपुरनगरस्य महान् योगो वर्त्तते संस्कृतसाहित्य-संवर्धन इति निश्चप्रचम्।

## संस्कृतपत्रकारताया विकासः

संस्कृतपत्रकारतायाः क्षेत्रे जयपुरस्य महत्त्वपूर्णं स्थानम्। अस्मान्नगरात् प्रकाश्यमाने द्वे संस्कृतपत्रे उल्लेखमर्हतः—संस्कृतरत्नाकरो भारती च। संस्कृतरत्नाकरस्य प्रकाशनं १९६१ तमे विक्रमाब्दे प्रारभ्यत। पत्रस्यास्य जन्मदाता प्रथितो विद्वान् म० म० गिरिधरशर्मा आसीत्। अर्थकार्श्यमचिन्त्यायं महाभागः स्वकुशलसम्पादकत्वे पत्रमेनं बहुकालं प्रकाशयामास। रत्नाकरोऽयं मध्ये मध्येऽवरुद्धः भारतस्य तेभ्यस्तेभ्यो नगरेभ्यो यथाक्रमं प्रकाशितः सम्प्रत्यपि दिल्लीतः प्रकाशमेति। १९०४ ई० तः १९१४ वर्षं यावदस्य प्रकाशनं जयपुरे जातम्, १९३३ ई० तः १९४४ वर्षं यावत्पुनरपि जयपुरादेव प्रकाशितः।

भारत्याः प्रकाशनं १९५० तमे वर्षे प्रारभ्यत। इयं पत्रिका सम्प्रति जयपुरादेव नियमितं प्रकाश्यते, संस्कृतपत्रिकासु चाग्रगण्यास्ति। अस्याः केचन विशेषांका अपि काले काले प्रकाश्यतां याताः। अस्यां मासिकपत्रिकायां भारतस्य मूर्धन्या विपश्चिदपश्चिमा स्वलेखादिकान् प्रकाशनार्थं प्रेषयन्ति। कानिचित् काव्यान्यत्र क्रमशः प्रकाशितानि, यथा—वेदस्य सर्वविद्यानिधानत्वम्

* डा० प्रभाकरशास्त्रिणः शोधप्रबन्धस्य सारम्।

( पं० मोतीलालशास्त्री ) जीवनस्य पृष्ठद्वयम् ( श्रीकलानाथशास्त्री ), शिवराज्योदयमहाकाव्यम् ( श्रीधरभास्करवर्णेकरः ) इत्यादीनि । भारत्यां युगानुरूपा सरलसुबोधा भाषा; सामायिकविषयानवलम्ब्य महत्त्वपूर्णा सामग्री, भारतीयसंस्कृतेः संरक्षकाणां विदुषां जीवनस्य विवरणानि च विलसन्ति । इत्थं पत्रिकेयमुच्चस्तरीया वर्त्तते संस्कृतपत्रजगति च विशिष्टं स्थानमर्हति ।

## जयपुरस्य संस्कृतविद्वांसः कवयश्च

ऊनविंशशतकात् परःशतं विद्वांसः संस्कृतपाण्डित्यस्य परम्परां जयपुरे संवर्धयाम्बभूवुः । प्रमुखाणां विदुषां परिचयः प्रस्तूयते—

### सरयूप्रसादद्विवेदी

महाभागोऽयं १८९२ विक्रमाब्दे समुत्पन्नः । अनेन तेषु तेषु स्थानेषु पर्यटनं विधाय ज्यौतिषधर्मशास्त्रादिविषयेषु प्रगाढपाण्डित्यमर्जितम् । अस्यैकादश ग्रन्थानामुल्लेखा उपलभ्यन्ते । तत्र सङ्ग्रहशिरोमणिः, सदाचारप्रकाशः वर्णबीजप्रकाशः, मातृकास्तुतिश्चोल्लेखार्हाः ।

**कृष्णरामभट्टः**

श्रीकृष्णरामभट्टो राजवैद्यकुन्दनरामभट्टस्य गेहे १९०५ विक्रमाब्दे जातः संस्कृतमहाविद्यालये चायुर्वेदव्याख्यातृपदमलमकरोत् । अनेन सुललितपद्येषु 'विद्वद्वैद्यतरङ्गिणीति' ग्रन्थो निरमायि । अस्य 'त्रिशतीवैद्यजीवनप्रतिनिधि' नाम ग्रन्थोऽपूर्ण एवोपलभ्यते । विदुषाऽनेन बहूनि खण्डकाव्यानि, महाकाव्यमेकं गीतिकाव्यानि अन्यानि पुस्तकानि लिखितानि ।

**काशीनाथद्राविडः**

जयपुरनगरस्य संस्कृतविद्वत्सु महाभागः काशीनाथः सुप्रथितः । ऊनविंशशतकस्योत्तरार्धे द्राविडमहाभागः संस्कृतविद्यालये व्याकरणाध्यापकपदं तथा च दिगम्बरजैनसंस्कृतमहाविद्यालये प्राचार्यपदमलमकरोत् । अस्य शिष्येषु भट्टमथुरानाथशास्त्रि—म०म०-गिरिधरशर्मचतुर्वेदि--सूर्यनारायण--चन्द्रदत्तराजगुरुप्रभृतयो भारतविख्याता विद्वांसो बभूवुः । श्रीनारायणभट्टपर्वणीकरेण सङ्कलिते 'स्वमित्रश्लोकसङ्ग्रहेऽपि' अस्य पद्यानि प्राप्यन्ते तथैव 'स्फुटश्लोकसङ्ग्रहेऽपि ।' अस्य कानिचन पद्यानि बहवः समस्यापूर्त्तयश्च संस्कृतरत्नाकरे प्रकाशिताः ।

**हरिवल्लभभट्टः**

श्री हरिवल्लभभट्टः १९२३ विक्रमाब्दे जातः । अयं महाभागः कुलक्रमागतमायुर्वेदविज्ञानमधीत्य न्याय-दर्शन-साहित्य-व्याकरण-शास्त्राणां मार्मिको

बभूव । अस्य रचनासु खण्ड-काव्यमेकं, सप्तलघुकाव्यानि, देवीस्तोत्रं चोल्लेखमर्हन्ति । संस्कृतरत्नाकरेऽस्य काव्यानि प्रकाशितानि ।

### म. म. दुर्गाप्रसादद्विवेदी

द्विवेदिमहाभागः १९२० विक्रमाब्दे जातः । अस्य पाण्डित्यं सर्वाङ्गीणं प्रतिभा चाद्वितीया आसीत् । अष्टादशवर्षदेशीयोऽयं 'प्रसन्नचण्डीपत्यष्टकं' रचयामास । वाराणस्यां बापूदेवशास्त्रि-गङ्गाधरशास्त्रिप्रभृति-प्रख्यातविपश्चिद्भ्योऽयं विद्यामधीतवान् । जयपुर-मागत्यायं दशकण्ठवधचम्पूकाव्यं रचयामास, अत्रैव च संस्कृतमहाविद्यालये ज्योतिषाध्यापको जातः । उर्दूभाषायामेवोपलभ्यां 'यूक्लिड'-ज्यामितिं संस्कृतेऽनूद्यानेन छात्रा भृशमुपकृताः । कालान्तरेणायं प्राध्यापकत्वेन प्राचार्यत्वेन च तस्मिन्नेव महाविद्यालये पदोन्नतिं लब्धवान् । अस्य बहवो ज्योतिर्धर्मशास्त्र-दर्शनविषयका ग्रन्थाः प्रकीर्णपद्यानि काव्यानि चोपलभ्यन्ते ।

### गोपीनाथदाधीचः

दाधीचस्य शिष्येष्वन्यतमो—म०म०-गिरिधरशर्मा चतुर्वेदी बहुश एनं प्राशंसत । दाधीचमहाभागो राजकीयसंस्कृतपाठशालायामध्यापयत् । संस्कृतभाषायामनेनैकविंशतिर्ग्रन्था विरचिताः । हिन्दीभाषायामस्य केचन ग्रन्थाः सन्ति । विंशशतकस्य पण्डितेष्वयमग्रगण्यः ।

### म.म.गिरिधरशर्माचतुर्वेदः

संस्कृतपण्डितेषु मूर्धन्यः म.म. गिरिधरशर्मा चतुर्वेदी जयपुरे १९३८ विक्रमाब्देऽजायत । अनेन प्रवेशिकोपाध्याय-शास्त्र्याचार्य-न्यायशास्त्रि-वेदान्ताचार्यादिपरीक्षाः प्रथमश्रेण्यां प्रथमस्थानं प्राप्योत्तीर्णाः । १९०१ तमे खिस्ताब्दे महाभागेनानेन संस्कृतोपयोगिनी सभा स्थापिता । अस्य संस्कृतसेवाकार्येषु संस्कृतरत्नाकरस्य प्रकाशनं तथा चाखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य संस्थापना सर्वङ्कषं महत्त्वमावहतः । अयं महाभागः सहारनपुर-हरिद्वार-लाहौरादिनगरेषु संस्कृतशिक्षणाय संस्कृतसेवार्थं च वसतिं चक्रे, विंशतिवर्षाणि च जयपुरसंस्कृतमहाविद्यालयेऽध्यापयामास । संस्कृतशिक्षायाः समुन्नतये श्लाघ्योऽनेन यत्नोऽकारि । वाराणस्यामपि चत्वारि वर्षाणि हिन्दूविश्वविद्यालयच्छात्रानध्यापयत् । तत्र केचन छात्रा अस्य निर्देशने शोधकर्मणि प्रवृत्ता बभूवुः । विविधविद्याविशारदः शास्त्रविचक्षणः सनातनधर्मसमुद्धारकोऽयं संस्कृते

हिन्द्यां च विपुलं साहित्यं रचयामास। संस्कृतरत्नाकरेऽस्य बहवो लेखाः समीक्षाः कथादयश्च प्रकाशिताः। अस्य केचन ग्रन्थाः पुस्तकाकारं प्रकाशिताः। तत्र चतुर्वेदिसंस्कृतरचनावलिः, वैदिकविज्ञानं भारतीयसंस्कृतिश्च, साहित्यनिबन्धाः, गीताव्याख्यानमाला दर्शनानुचिन्तनं चेत्यादय उल्लेखार्हाः।

## गिरिजाप्रसादद्विवेदी

१८८३ खिस्ताब्दे जन्म लब्ध्वा गिरिजाप्रसादद्विवेदिमहाभागो जयपुरसंस्कृत-महाविद्यालये विद्यामधीतवान्, तत्रैव च प्राध्यापकपदे नियुक्तो बभूव। अस्य बहवो लेखाः संस्कृतरत्नाकरे प्रकाशिताः, सिद्धान्तशिरोमणि-लीलावतीबीजगणित-क्षेत्रमिति-मेघदूत-बृहत्संहितालङ्कारसर्वस्व- -मनुस्मृति--लघुपाराशरीशिवमहिम्नस्तोत्रादि-ग्रन्थानां टीका अनुवादश्च पुस्तकाकारं प्रकाशिताः।

## चन्द्रधरशर्मा 'गुलेरी'—

गुलेरीमहोदयः हिन्दीभाषायाः प्रख्यातकथाकारः, समालोचकपत्रस्य नागरीप्रचारिणीपत्रिकायाश्च सम्पादक आसीत्। अस्य वैदुष्येणावर्जितो मालवीयमहोदय एनं हिन्दूविश्वविद्यालये प्राध्यापकपदे नियोजयाञ्चकार। संस्कृतभाषायामस्य गवेषणात्मका लेखा संस्कृतरत्नाकरादिपत्रिकासु बहुशः प्रकाशं गताः। बहूनि पद्यरत्नान्यनेन सृष्टानि। अस्य पञ्चनदस्तवो नाम पद्यसंग्रहोऽद्वितीयः। तत्र बहूनि वैदिकाख्यानानि उपस्थापितानिः।

## इन्द्रलालशास्त्री

शास्त्रिमहाभागो जैनसमाजे सम्मानितः प्रतिष्ठितश्च विद्वान् वर्त्तते। १८९७ वर्षे जनिं लब्ध्वाऽयं बाल्यादेव कष्टततिं बहुविधां सहमानः सुरभारत्याः सेवायै स्वजीवनं समर्पयाम्बभूव। दिगम्बरजैनसंस्कृत-महाविद्यालयेऽध्यापकपदं तदनु च प्राचार्यपदमयमलमकरोत्। अयं महाभागो भारतस्य तास्ताभिः संस्थाभिर्विद्यालङ्कार-धर्मवीरधर्मदिवाकरादिविरुदैर्विभूषितः पञ्चविंशतिग्रन्थान् व्यरचयत्, 'खण्डेलवाल जैन', 'हितेच्छु', जैनगजट', 'सन्मार्ग', 'अहिंसा' इत्यादिपत्राणि सम्पादयामास, बहून संस्कृत-ग्रन्थान् हिन्द्यामनूद्य रत्नाकर-भारत्योः प्रकाशं प्रापयत्।

## भट्टमथुरानाथशास्त्री

भट्टमथुरानाथो जयपुरे १९४६ विक्रमाब्दे जातः। जयपुर एवास्य बाल्यकालो व्यतीयाय। पञ्जाबविश्वविद्यालयस्य साहित्यशास्त्रिपरीक्षायामयं

प्रथमश्रेण्यां सर्वप्रथम आसीत् । व्याकरणशास्त्रिसाहित्याचार्यपरीक्षेऽप्यनेनोत्तीर्णे । १९२२ खिस्ताब्देऽयं महाराजसंस्कृतमहाविद्यालयेऽध्यापकपदं प्राप्तवान् । कालान्तरेणास्मिन्नेव महाविद्यालयेऽयं साहित्यविभागाध्यक्षोऽभवत् । महाभागोऽयं संस्कृतरत्नाकरस्य सहायकसम्पादकत्वेन तदनु च प्रधानसम्पादकत्वेन सुरसरस्वत्या महतीं सेवां समपादयत् । एकवर्षमनेन भारतीपत्रिकायाः प्रधानसम्पादकत्वं दक्षतया निर्वर्त्तितम् । 'जयपुरवैभवम्' 'गोविन्दवैभवम्' चास्यामरां कीर्तिं प्रथयन्ति । अस्य 'संस्कृतसुबोधिनी' शिक्षाविभागेन पाठ्यपुस्तकं निर्धारिता । अस्य प्रकाशितग्रन्थेषु साहित्यवैभम्, रसगङ्गाधरटीका, गाथारत्नसमुच्चयः, संस्कृतसुधा, ईश्वरविलासकाव्यम्, पद्यमुक्तावलिः, वृत्तमुक्तावलिः, आदर्शरमणी ( लघूपन्यासः ) सुलभं संस्कृतमित्यादयोऽप्युल्लेखमर्हन्ति । अस्य द्वादश ग्रन्था अप्रकाशिताः सन्ति । संस्कृतरत्नाकरेऽस्य चत्वारिंशल्लघुकथाः चतुर्विंशतिलेखाः भारत्यामपि च बहवो लेखाः पद्यानि च प्रकाशितानि ।

## वृद्धिचन्द्रशास्त्री

श्रीवृद्धिचन्द्रशास्त्रिमहाभागः १९६१ विक्रमाब्दे जनिमलभत । अनेन वाराणसीतो व्याकरणोपाध्याय-शास्त्र्याचार्यपरीक्षा उत्तीर्णाः । ज्योतिष-दर्शन वैदिकसाहित्य-खगोलविज्ञानेष्वयं निष्णातोऽभवत् । १९३१ तमे खिस्ताब्देऽयं चर्मरिकासंस्कृतमहाविद्यालये सीकरमण्डले प्राचार्यपदे नियुक्तः किन्तु ज्ञानपिपासाशमनाय पदमेतत् त्यक्त्वा १९३३ खिस्ताब्दे जयपुरसंस्कृतमहाविद्यालये संस्कृतपण्डितपदं स्वीचकार । १९४० खिस्ताब्देऽयं धर्मशास्त्रस्य प्राध्यापकपदे नियुक्तः । अस्य रचनासु 'आदर्शदम्पती, उपन्यासः उमा आख्यायिका च प्रकाशिते । अस्य बहवो लेखा संस्कृतरत्नाकरभारत्यादिषु पत्रिकासु प्रकाशिताः काश्चन वार्त्ताश्चाकाशवाण्याः प्रसारिताः ।

## गोपालनारायणबहुरा

बहुरामहाभागस्य शोधकार्याणि महत्त्वमावहन्ति । १९११ खिस्ताब्दे जनिं लब्ध्वा जयपुरस्य महाराजमहाविद्यालयेऽयमधीतवान् । सम्प्रत्ययं जयपुरनरेशस्य पुस्तकालयेऽध्यक्षपद आसीनः । अनेन राजस्थानप्राच्यविद्याप्रतिष्ठाने वरिष्ठशोधसहायकस्योपनिर्देशकस्य च पदं सप्तदशवर्षाण्यलङ्कृतम् । तत्र राजविनोदकाव्यं कर्णकुतूहलनाटकं श्रीकृष्णलीलामृतं रसदीर्घिका भुवनेश्वरीमहास्तोत्रं चण्डीशतकमित्यादयो बहवो ग्रन्था बहुरामहाशयेन सम्पादिताः ।

राजस्थानप्राच्यविद्याप्रतिष्ठानस्य सूचीपत्रमनेन संकलितम् । संस्कृते हिन्द्यां चास्य केचन लेखाः प्रकाशिताः सन्ति ।

## दीनानाथत्रिवेदी 'मधुपः'

श्री दीनानाथत्रिवेदी जयपुरराज्यान्तर्गतं गुहालाग्रामं १९१४ खिस्ताब्दे स्वजनुषाऽलमकरोत् । साहित्योपाध्यायपरीक्षां समुत्तीर्य जयपुर एवायं कविशिरोमणिमथुरानाथशास्त्रिणो राजपण्डितपुरुषोत्तमचतुर्वेदिनश्च सविधे साहित्यस्य विशिष्टमध्ययनं प्रारभत । १९३७ तमे खिस्ताब्दे च काव्यतीर्थपरीक्षां समुदतरत् । तस्मिन्नेव वर्षेऽयं खाण्डलविप्रविद्यालये प्रधानाध्यापकपदे नियुक्तो बभूव । कालान्तरे शासकीयसेवायां प्रविष्टो महाराजसंस्कृतमहाविद्यालयेऽध्यापकस्तदनु च तत्रैव न्यायशास्त्रस्य व्याख्यातृपदं व्यभूषयत् । तेषु तेषु पदेषु दक्षतया कार्यं सम्पादयन्नप्ययं साहित्याचार्य-दर्शन-न्यायाचार्यपरीक्षा उदतरत् । स्ववैदुष्येणायं साहित्यालंकारपदवीं निबन्धप्रतियोगितासु च सुवर्णपदकानि रजतपदकानि प्राप्तवान् । वर्तमानसंस्कृतसाहित्यकारेष्वयमग्रगण्यः । संस्कृतरत्नाकरभारत्यादिषु पत्रिकासु बहुशोऽस्य निबन्ध-लघुकथा-खण्डकाव्यानि प्रकाशितानि । सम्प्रत्ययं महाभागः सेवानिवृत्तः भारतीपत्रिकां स्वकुशलसम्पादकत्वे सम्यक् सञ्चालयति ।

## गङ्गाधरद्विवेदी

श्रीगङ्गाधरद्विवेदी १९२१ खिस्तवर्षे प्रादुरभवत् । अस्य प्रपितामहः सरयूप्रसादद्विवेदी; पितामहो म० म० दुर्गाप्रसादद्विवेदी पिता च गिरिजाप्रसादद्विवेदी प्रकाण्डपण्डिता लेखकाश्चाभूवन् । गङ्गाधरो महाराजसंस्कृतमहाविद्यालयेऽधीयानो व्याकरणोपाध्याय-व्याकरणतीर्थ-साहित्याचार्य-परीक्षा-समुदतरत् तस्मिन्नेव च महाविद्यालये व्याख्यातृपदे नियुक्तः । तदनु 'साहित्यशास्त्रेऽलङ्काराणां विवेचनमि' ति विषयमवलम्ब्य शोधकार्यार्थं वाराणसीमयं जगाम । सम्प्रत्ययं महाराजसंस्कृतमहाविद्यालय एव व्याख्यातृपदं विभूषयति । संस्कृतहिन्दीभाषयोर्बहवोऽस्य लेखाः संस्कृतरत्नाकरे, संस्कृतपत्रे, माधुर्यां सरस्वत्यां च प्रकाशिताः । श्री द्विवेदिना म०म०दुर्गाप्रसादद्विवेदिरचिते दुर्गापुष्पाञ्जलिदशकण्ठवधचम्पूकाव्ये, श्रीसरयूप्रसादद्विवेदिकृतम् 'आगमरहस्यम्' सम्पादितानि, म० म० दुर्गाप्रसादद्विवेदिनो भारतालोकः भारतशुद्धिश्च सम्पादनाय स्वीकृतौ । जयपुरस्थाकाशवाणीकेन्द्रात् शताधिका वार्त्ता अस्य प्रसारिताः कानिचिदाकाशवाणीरूपकाण्यप्यनेन रचितानि ।

## नारायणशास्त्रिकाङ्करः

श्रीकाङ्करः १९८४ विक्रमाब्दे जातः। अनेन व्याकरणाचार्य-साहित्याचार्य-सांख्ययोग-दर्शनाचार्य-एम०ए०-साहित्यरत्न-प्रभाकर-प्रभृतयः परीक्षाः प्रथम-श्रेण्यां समुत्तीर्णाः। सम्प्रत्ययं राजस्थानविश्वविद्यालये तैत्तिरीयसंहितामवलम्ब्य शोधकर्मणि व्यापृतो वर्त्तते। अनेनाखिलभारतीयसंस्कृतनिबन्धलघुकथादि-प्रतियोगितासु प्रथमपुरस्कारा असकृदुपलब्धाः। अस्य प्रकाशितग्रन्थेषु व्याकरण-साहित्यप्रकाशः आदर्शसंस्कृतप्रवेशिका, छन्दोलङ्कारप्रवेशः, अभिनवसंस्कृत-माधुरी, शुकनासोपदेशटीका, संक्षिप्तकादम्बरीटीका, द्विजदशाप्रकाशः, (व्याख्या) विनायकाभिनन्दनं चोल्लेखमर्हन्ति। अस्य पद्य-निबन्ध-रूपक-समस्यादयो बहुशः पत्रपत्रिकासु प्रकाशिताः।

## गिरिराजशास्त्री

श्रीगिरिराजशास्त्री भारतीयसंस्कृतमासिकस्य प्रबन्धसम्पादकोऽस्ति। अस्य प्रबन्धपाटवेन भारत्या आर्थिकी स्थितिः सर्वथा निरापदा वर्त्तते पत्रिका चेयं नियमितं प्रकाश्यते। भारत्यामस्य षोडश लेखाः प्रकाशिताः।

## कलानाथशास्त्री

प्रथितविदुषः कविशिरोमणेर्भट्टमथुरानाथशास्त्रिणो ज्येष्ठतनयोऽयं महाभागः प्राच्यप्रतीच्यविद्यामर्मज्ञः सम्प्रति राजस्थानशासनस्य भाषानिदेशालये सह-निर्देशकपदभाग् वर्त्तते। कञ्चित् कालं स भारत्याः सहसम्पादकोऽभवत्। संस्कृत-पत्रिकासु विंशतिप्राया निबन्धाः, चतस्रो लघुकथाः, द्वौ व्यङ्ग्यलेखौ, सप्तललित-निबन्धाः चत्वारि काव्यानि चास्य प्रकाशं गतानि। 'जीवनस्य पृष्ठद्वयम्' इत्याख्या आख्यायिकाऽस्य कृतिषु विशेषाल्लेखमर्हति। अनेनाकाशवाण्या जयपुर-केन्द्रात् पञ्चाशदधिका वार्त्ताः विविधविषयानधिकृत्य प्रकाशिताः। अस्य पञ्चमौलिकरूपकाण्यपि आकाशवाणीतः प्रसारितानि। सम्प्रत्ययं महाभागः स्वपितृचरणस्य रचनानां सम्पादने निरतोऽस्ति।

## हरिनारायणशास्त्री

श्री हरिनारायणशास्त्री जयपुरस्य जीवितविद्वत्सु मूर्धन्यो वर्त्तते। संस्कृत-महाविद्यालये शिक्षितोऽयमुपाध्याय–शास्त्र्यचार्य–साहित्यमहोपाध्यायपरीक्षा उत्तीर्णः। बाल्यादेवानेन संस्कृते काव्यरचना समारब्धा। अस्य बहूनि स्तोत्राणि, लघुकाव्यानि, अलङ्कारशास्त्रग्रन्था अनुवादश्च प्रकाशितानि। संस्कृतरत्नाकर-भारत्योरस्य रचना बहुशः प्रकाशिताः।

## महाकाव्य-साहित्यम्

१८३५ खिस्ताब्दात् १९६५ खिस्तवर्षं यावद् द्वे एव महाकाव्ये जयपुर-संस्कृतकाव्येषु समुपलभ्येते। तत्राद्यं कच्छवंशमहाकाव्यमप्रकाशितं मानवंशमहाकाव्यं चापूर्णमेव प्रकाशितम्।

कच्छवंशमहाकाव्ये कति सर्गा आसन्निति निश्चेतुं न पार्यते। महाकाव्यमिदमूनविंशशतकस्योत्तरार्धे श्रीकृष्णरामभट्टेन राज्ञो रामसिंहस्य शासनसमये विरचितम्।

महाकाव्यस्यास्यादिमद्विसर्गयोः कच्छवंशीयानां राज्ञां पौराणिकी काल्पनिकी च वंशावलिरुपस्थापिता। तृतीयसर्गात् प्रामाणिकी वंशावलिरारभ्यते। इत्थमस्मिन् महाकाव्ये आदशमशतकादाविंशशतकं जयपुरशासकानां विवरणं प्रामाणिकमैतिहासिकदृष्ट्या महत्त्वपूर्णं च।

काव्येऽस्मिन् सप्तदशसर्गा २७१६ श्लोकाश्चोपनिबद्धाः। अलङ्काराणामत्र मनोहारिसंयोजनं कविनाऽकारि। काव्येऽस्मिन् कवि-प्रयिभाया अनुत्तमो विलासो विजृम्भते। ऐतिहासिकमहाकाव्येषु कच्छवंशं विशिष्टं खलु स्थानमर्हति।

श्री सूर्यनारायणशास्त्रिरचितं 'मानवंश'-महाकाव्यं संस्कृतरत्नाकरस्य सप्तदशाङ्केषु प्रकाशितम्। अत्र कच्छवंशीयराजानामितिहासो वर्ण्यविषयः। तिथिनां प्रामाणिक उल्लेखो विहितः कविना। काव्यमिदं सरलसुबोधभाषया गुम्फितमुत्कृष्टकाव्यतत्त्वसमुन्नतमभिनवच्छन्दोभिः सुनिबद्धं चास्ति।

## लघुकाव्यानि

**आर्यालङ्कारशतम्**

काव्येऽस्मिन् श्रीकृष्णरामभट्टेन ८३ पद्येषु त्रिपुरसुन्दर्याः स्तोत्राणि गुम्फितानि, बहुविधानां चालङ्काराणां निदर्शनान्यपि समुपस्थापितानि। कविप्रतिभायाः प्रगल्भो विलासोऽत्र राजते। तथा हि—

**आर्या जयतितरां या सितपद्मगता विशिष्य गौराङ्गी।**
**स्फटिकालवालरूढा वहति कनकवल्लरीव रुचिम्॥**

**जयपुरविलासकाव्यम्**

'जयपुरविलासं' श्रीकृष्णरामभट्टस्यैतिहासिकं काव्यं वर्त्तते। अत्र पञ्चोल्लासेषु महाराजमाधवसिंहस्य प्रशस्तिः, जयपुरवर्णनं, महाराजसिंहस्य यशोगानं, जयपुरस्य वरेण्यपुरुषाणां प्रशस्तयश्च गुम्फिताः।

**सारशतकम्**

कविश्रीकृष्णरामभट्टेन कालिदासभारविमाघहर्षकृतमहाकाव्यानां सारं शतपद्येषूपस्थापितं सारशतके । प्रायश एकसर्गस्य सारमेकस्मिन्नेव श्लोक उपनिबद्धम् । यथा रघुवंशद्वितीयसर्गस्य सारम्—

मायाकेसरिणं प्रदर्श्य नृपतेर्भावं विदित्वा मुने
र्धेनुः सूनुमवाप्नुहीति मुदिता तस्मै वरं सा ददौ ॥
सोऽपि प्राप्य मनोरथं मुनिमुपामन्त्र्य प्रजावत्सलो
देव्या सार्धमुपाजगाम पवनप्रेंखत्पताकं पुरम् ॥

**पलाण्डुराजशतकम्**

पलाण्डुराजशतकं श्रीकृष्णरामभट्टेन स्वगुरोः श्री आदित्यरामशर्मण आज्ञया निर्मितम् । अत्र पलाण्डुं नायकं विषूचिकादिव्याधीन् प्रतिनायकांश्च मत्वा कविः पलाण्डोर्माहात्म्यं प्रथयति । लशुनं पलाण्डोः सेनापतिर्यस्य साह्येन तेन सर्वत्र विजयश्रीः सम्प्राप्ता । काव्यारम्भे कविर्वक्ति—

प्रतापखर्वीकृतसर्वकन्दो यशो विपाकेन विशिष्य पाण्डुः ।
स्वमन्त्रिभिश्चभटगृञ्जनाद्यैर्जगाम जेतुं जगतीं पलाण्डुः ॥१॥
रसोनसेनापतिदर्शिताध्वा कृत्वा कलिङ्गान् स्ववशे प्रसह्य ।
विलोलतैलङ्गविलासिनीनां प्रसङ्गमासाद्य स किं न रेमे ॥२॥

**मुक्तकमुक्तावली**

श्रीकृष्णरामभट्टविरचितायां मुक्तकमुक्तावल्यां सप्तसराः समुल्लसन्ति । तत्राद्ये देवतास्तवनसरे गणपति-शङ्कर-श्रीकृष्णादीनां ४१ पद्येषु स्तुतयः प्रस्तुताः । द्वितीये समस्यापूर्त्तिसरे ३२ समस्यापूर्त्तयो ग्रथिताः । तृतीये उद्दीपनवर्णनसरे षड् ऋतवः प्रातर्मध्याह्नादयश्च वर्णिताः । शृङ्गारवर्णनसरे शृङ्गारितपद्यानि सङ्कलितानि । पञ्चमे काव्यमालाप्रशंसासरे काव्यमालाप्रकाशनरूपं श्रीदुर्गाप्रसादशास्त्रिणः कृतित्वं शंसितम् । षष्ठे हास्यवर्णनसरे होलोत्सव-पण्डितोपहास-बीभत्सरसास्त्रयो विभागा विद्यन्ते । सप्तमे सङ्कीर्णवस्तुवर्णनसरे वापी-पक्वान्न-वैद्य-दाडिमादया वर्ण्यविषयाः सन्ति ।

**मुक्तकसूक्तानि**

काव्यमिदं कविमल्लहरिवल्लभस्य १३० प्रारम्भिक पद्यानां सङ्कलनमस्ति । अत्र वक्रोक्तिसभङ्गश्लेषाद्यलङ्कारा बाहुल्येन सन्निवेशिताः । क्वचिद्रचना अस्फुटार्था दृश्यते ।

**ललनालोचनोल्लासः**

इयमपि कृतिः कविमल्लविरचिता शतकपरम्परायां विशिष्टं स्थानमर्हति ।[१] अत्र शृङ्गारिता उक्तयः समुल्लसन्ति । ललनालोचनयोश्चमत्कृतिपूर्णं वर्णनं कविना प्रस्तुतम् । तथाहि—

नूतनयौवनवत्याः स्फुरत उभौ पक्ष्मलौ दृशोर्भागौ ।
धारालौ क्रकचाविव मन्मानसदुःखदारुदाराय ॥

**वसन्तशतकम्**

श्रीसदाशिवशास्त्रिविरचितमिदं काव्यं शतककाव्येषूल्लेखार्हम् ।[२] अत्र शिशुपालवधमहाकाव्यस्य साक्षात् प्रभावो वर्तते । छन्दसां वैविध्यं क्लिष्टानामप्रचलितशब्दानां च प्रयोगोऽत्र दरीदृश्यते । यमकश्लेषानुप्रासादीनां संयोजनेन कविकर्मपाटवं प्रत्यक्षीभवति । तथाहि—

जुष्टा त्वया विपुलकृष्टा दशा विचरताष्टासु दिक्षु सततम् ।
कृष्टा यमेन न तु दृष्टासियष्टिरतिसृष्टातिभीतिरहिवत् ॥

**दशकुमारदशा**

अस्मिन् काव्ये कविमल्लहरिवल्लभेनैकस्मिन्नेव सर्गे दशकुमारचरितस्य संक्षिप्तं पद्यरूपान्तरं प्रस्तुतम् । अत्र ११३ श्लोका गुम्फिताः । दण्डिनः सरण्याः कविमल्लस्य कवित्वशक्तेश्च चमत्कारो युगपदत्र दृश्यते । तद्यथा—

**पुरी पुरीणां निकषः परासां रत्नाकरश्रीस्ततपण्यरत्नैः ।**
**अस्ति स्म काचिन्मगधाख्यदेशावतंसिता पुष्पपुरीति नाम्ना ॥**

**शृङ्गारलहरी**

शृङ्गारलहर्यां कविमल्लेन गोपीकृष्णयोः शृङ्गारो निरूपितः । अत्र १०२ पद्यानि ग्रथितानि । अभिनवकल्पनानां प्राचुर्यं छन्दसां वैविध्यं चास्य कृतेर्वैशिष्ट्यम् । शृङ्गारितवर्णनेषु सविशेषं कवेर्मनो रमते । अङ्गनानां स्वभावं वर्णयन् कविर्वक्ति—

---

१. मुम्बय्यां निर्णयसागरतः १८९४ वर्षे मुद्रितः ।

२. मुम्बय्यां वेङ्कटेश्वरस्टीममुद्रणालयतः १८९८ वर्षे प्रकाशितम् ।

काँश्चिद् दर्शनतो हि काँश्चन पुनः संलापमात्रादयो।
काँश्चित् कार्यनिदेशतः सकृदपि स्मृत्यैव कांश्चित्पुनः॥
कांश्चित्सन्निहितस्थितेरपि पुनः कांश्चित्तु मन्दस्मितात्।
प्रीणन्त्यन्यदृशः परन्तु विरलान् धन्यान् दृढालिङ्गनैः॥

**जयनगरपञ्चरङ्गम्**

कविमल्लहरिवल्लभविरचितेऽस्मिन् काव्ये पञ्च रङ्गा विलसन्ति। प्रथमरङ्गे मङ्गलाचरणं स्फुटसुभाषितपद्यानि सन्ति। द्वितीयरङ्गे जयपुरनगरवर्णनं समुल्लसति। तथाहि—

गायन्ति यद्वर्त्मसु हिण्डमाना गीतानि शृङ्गारमयानि नार्यः।
नूनं तदा वाद्यगतां स्वसत्तां धत्ते ध्वनिस्तत्तदलङ्कृतीनाम्॥

तृतीये रङ्गे जयपुरस्य दर्शनीयस्थलानि वर्णितानि, चतुर्थे च कच्छवंशीय-शासकानां विवरणं विद्यते।

**विद्याविलासिनीचरित्रम्**

कविमल्लहरिवल्लभविरचितं सप्तसर्गात्मकमिदं काव्यं वस्तुना पौराणिक-कथामनुहरति।[1] अत्र सोमवतीनगर्याः श्रेष्ठिन ऋषभदत्तस्य तनयः श्रीचन्द्रो नायकः राज्ञः शुभसेनस्य दुहिता विद्याविलासिनी च नायिका। विद्याविलासिनी सचिवपुत्रं चन्द्रबुद्धं मनसा पतिं वृणुते किन्तु भ्रमवशाद् वणिक्पुत्रस्य श्रीचन्द्रस्य कण्ठे वरमालां विमुञ्चति। वणिक्पुत्राज्जुगुप्समानापि सा अष्टवर्षेषु व्यतीतेषु तस्य वैदुष्येण चारित्र्येण चावर्जिता तं वरयति। श्रीचन्द्रो हेमपुरराजकुमार्या लीलावत्या सहापि संयोगवशादूढो भवति मणिमञ्जरी नाम काचिद् वेश्यापि तं पतिं कामयत इति रमणीया कथा अत्र वर्णिता।

**विश्वनाथविज्ञप्तिपञ्चाशिका**

अत्र गोपीनाथदाधीचेन विश्वनाथं प्रति स्वोद्गारा उपनिबद्धाः।[2] इदानीन्तना विद्वांसः कथं परस्परं द्विषन्ति परवर्त्तिलोकैस्त एव कथं सम्मानिता जायन्त इति विषयोऽप्यत्र विवेचितः। श्रीकृष्णरामभट्टविषये कविः कथयति—

१. संस्कृतरत्नाकरस्य पञ्चमषष्ठवर्षाङ्केषु प्रकाशितम्।
२. राजस्थान प्राच्यविद्याप्रतिष्ठानस्य जयपुरशाखायामुपलभ्यते।

विद्वांसं स्वदृशा विलोक्य कलुषोऽयं कृष्णभट्टाह्वयो
वैद्योऽश्लीलकविः स्वकीयमुखतः स्वश्लाघने तत्परः ।
आशास्ते भवदीयपादयुगले वासं मदीयं यत-
स्तिष्ठेयं कविरेक एव न परोऽस्त्यत्रापि मे सम्मतिः ॥

श्रीकृष्णदूतम्

श्री सूर्यनारायणशर्मणा दूतकाव्यपरम्परायां मेघदूतमनुसृत्य श्रीकृष्णदूतं रचितम् ।[1] अत्र पूर्वोत्तरकृष्णौ द्वौ भागौ स्तः पञ्चभिर्ग्रामैर्दुर्योधनेन सन्धित्सो-र्युधिष्ठिरस्य दौत्यं कृष्णः प्रपद्यत इति कथावस्तु । युधिष्ठिरस्य शान्तिनीतिरत्र सम्यग् वर्णिता—

पञ्चग्रामानपि स वितरेद्राज्यलुब्धोऽस्मदर्थं
सन्तोषं स्याद् यदिहं कुशलं वर्त्ततेऽस्मत्कुलस्य ।
शाठ्ये शाठ्यं यदपि बिबुधैर्नीतिरेव प्रदिष्टा
नो धर्मज्ञास्तदनुगमने धर्ममेकान्तमाहुः ॥

श्रीललितासहस्रं काव्यम्

काव्यमिदं कविभूषण श्रीहरिशास्त्री दाधीचस्यासामान्यवैदुष्यं प्रकटयति । अत्र त्रिपुरसुन्दर्याः ललिताया प्रत्येकनाम्ना एकैकः श्लोको ग्रथितः । अत्र पादपूरणार्थप्रयुक्तानां पदानां च-तु-हीत्यादीनामभावः द्विरुक्तित्रिरुक्ति-दोषराहित्यं च कविपाटवं सूचयति । अत्र तान्त्रिकता कवित्वशक्तिश्च युगपत् स्फुरतः । यथा—

लक्ष्मीं या प्रकटीचकार कलया कल्पादिकालेऽम्बिका
स्थित्यै चास्य जगत्त्रयस्य कृपया प्रादात्स्वयं विष्णवे ।
विश्वोद्भावनकारिणीमपि च यां सर्वाः श्रयन्ति श्रियः
'श्रीमाता' ललिताम्बिका भगवती साऽऽस्तां मम श्रेयसे ॥

श्रीहरिभक्तचरितम्

अत्र पण्डितरामचन्द्रशर्मणा गोपालगढस्य स्वामिनः श्रीहरिभक्तस्य जीवनचरित्रं गुम्फितम् । अत्र भक्तिभावनाया भूयान् विलासो विलोक्यते । स्वगुरोः श्रीहरिभक्तस्य महिमानं वर्णयन् कविराह—

---

१. संस्कृतरत्नाकरस्य पञ्चमषष्ठवर्षयोः प्रकाशितम् ।

वैद्यैराङ्ग्लचिकित्सकैरपि न ये रोगा विनाशं गता—
स्तैरेवातितरां विषण्णमनसो रुग्णा अनेके जनाः ।
आयाता गुरुसन्निधौ सपदि ते स्वस्वास्थ्यलाभान्विता—
स्तुन्वन्ति स्म यशोऽस्य नित्यममितं काष्ठासु सर्वास्वपि ॥

**परीक्षापञ्चदशी**

परीक्षापञ्चदश्यां कविः श्रीदीनानाथत्रिवेदी वर्त्तमानशिक्षाप्रणाल्याः परीक्षापद्धतिं व्यङ्ग्यविषयीकरोति । परीक्षामहिमानं विवृण्वन् कविः कथयति—

अस्मिन् युगे देवि विभो परीक्षे,
नूनं त्रिलोकीं त्वमनु प्रविष्टा ।
विमुच्य मातर्भवतीं शरण्यां
ब्रूहि व्रजेयं शरणं कमद्य ॥

**नवीनश्लोकरत्नमञ्जूषा**

श्रीनारायणभट्टपर्वणीकरकृतेयं रचना अप्रकाशिता अपूर्णैव चोपलभ्यते । अत्र १३६ पद्यानि विलसन्ति । अत्र बहवोऽभिनवकल्पना समन्विताः श्लोका दृश्यन्ते । मङ्गलाचरणे कविर्लिखति—

हेरम्बं प्रियया प्रियाननदृशं ह्यालिङ्गितं लज्जया
तिर्यग्भूतमुखेन खेन च नहीत्येवं वदन्त्या प्रियम् ।
ग्लोर्भालर्न शशाङ्क एष इति तद् वाक्यं धिया चिन्तयन्
चुम्बन्तं रभसास्मितं प्रविदधत् ध्यायेत्स्थितं स्वासने ॥

**अन्योक्तिमुक्तावली**

कविभूषणश्रीहरिशास्त्रिदाधीचविरचितमिदं काव्यं सम्पूर्णं नास्ति प्रकाशितम् ।[1] काव्यस्यास्यान्योक्तयो रुचिकरा रमणीयाश्च । कुठारं सम्बोधयन् कविर्वक्ति—

वृक्षेण येन विटपं निजकं प्रदाय कर्मक्षमं प्रकटितं हि तव स्वरूपम् ।
तस्यैव दुष्ट खरधार कुठार पादांश्छेत्तुं व्यवस्यति न वा गुरुदक्षिणेयम् ॥

कपोतान्योक्तिरपि हृदयावर्जनक्षमा वर्त्तते—

मिष्टान्नलोभाद्दशपञ्चवासरान् कपोत ! किं वायसतां व्रजस्यहो ।
अतः परं दृक्पथमागतो नृणां लोष्टैरलं ताडनमेव लप्स्यसे ॥

१. काव्यस्यास्य केचनांशाः संस्कृतरत्नाकरे प्रकाशिताः ।

### आनन्दनन्दनकाव्यम्

आनन्दनन्दनकाव्यस्य गोपीनाथदाधीचकृतिषूल्लेखार्हं स्थानम् ।[१] अत्र पञ्च वाटिकाः सङ्कलिताः । प्रथमायां मन्दारवाटिकायां भगवतः श्रीकृष्णस्य तेषां तेषां रूपाणां मनोहारि वर्णनं गुम्फितम् । श्रीकृष्णं प्रति प्रगाढभक्तिभावना कविना प्रकटिता । तद्यथा—जगत्यस्मिन् बहवो नद्यो विद्यन्ते किन्तु द्वे एव तासु प्रामुख्यमर्हतः श्रीकृष्णसम्पर्कात्—

धुन्यः सन्ति सहस्रशोऽत्र यदपि द्वे एव धन्ये तयो—
रेका कृष्णकरग्रहेण पदयोः स्पर्शेन धन्याऽपरा ।
यत्रेमे मिलिते नमामि तमहं देशप्रयागाह्वयं
यन्मृत्स्नासु लुठंस्त्यजंस्तनुमिमां नो जन्मने कल्प्यते ॥

एवमेव पारिजात–सन्तान–कल्पवृक्ष–हरिचन्दनवाटिकास्वपि हृदयग्राहि काव्यं विलसति ।

### उद्योगलहरी

श्रीसूर्यनारायणशास्त्रिकृतायामुद्योगलहर्यां ५४ शिखरिणीषु उद्योगमहिमा गीतः ।[२] संसारेऽस्मिन्नभ्युदयार्थमुद्योगपरायणैः पुरुषैर्भवितव्यमिति कवेराशयः । कवेः सरणिर्मनोहारिणी भाषा च प्रभविष्णुः वर्त्तते । तद्यथा—

**समृद्धेर्विद्यायाः सततसुखशान्तेश्च सुमतेः**
**सुकल्याणस्याथो सकलपरिवारादरविधेः ।**
**समस्तोत्कर्षाणां सुकाववचनानां सुमहतां**
**विलासानां हेतुर्भवति भुवि नोद्योगसदृशः ॥**

### काशीलहरी

काशीलहर्यां श्रीगोपीनाथद्राविडेन वाराणस्याः स्वानुभूतं यथातथ्यं चित्रणमकारि ।[३] स्वभावोक्तेर्मनोरमसौन्दर्यमत्र दरीदृश्यते । कवेः सूक्ष्मपर्यवेक्षणमपि चमत्करोति मानसम् । तथाहि—

---

१. अस्याः कृतेर्द्वे प्रती राजस्थानप्राच्यविद्याप्रतिष्ठान उपलभ्येते ।
२. संस्कृतरत्नाकरगतायां द्वितीयवर्षस्याष्टमसङ्ख्यायां प्रकाशिता ।
३. संस्कृतरत्नाकरेऽपूर्णं प्रकाशिता ।

गाङ्गे स्रोतसि दर्पणद्युतिमुषि स्वं वीक्षमाणा मुखम्
बालादित्यमरीचिकाञ्चनशलाकाग्रेण या कुङ्कुमम् ।
प्रातः सद्गृहिणीव मञ्जुतिलकं भाले विधत्तेऽन्वहं
श्रीविश्वेश्वरराजधान्यतितरां वाराणसी राजते ॥

काशिवासिनां दिनचर्यापि सम्यङ् निरूपिता कविना-

उत्थायोषसि भानुमत्यनुदिते व्यायामसेवा सदा
तैलेनाखिलकायमर्दनविधिर्गङ्गाप्रवाहस्ततः ।
श्रीविश्वेश्वरदर्शनानुगनिजोद्योगेऽप्यमोघः श्रमः
क्षीराज्यप्रचुरं च भोजनमहो वाराणसीवासिनाम् ॥

### गोविन्दवैभवम्

भट्टमथुरानाथशास्त्रिणो 'गोविन्दवैभवं' भक्तिकाव्येषु श्रेष्ठम् । अत्र श्रीकृष्णस्य यशो गायन् कविर्हयग्रीवधन्वन्तरि-शङ्कर-गङ्गा-यमुना-लक्ष्मी-प्रभृति-देवान् स्तौति । श्रीकृष्णस्य रूपमाधुरी, मुरलीवादनं रासलीला चात्र सुन्दरं वर्णितानि । समसामयिकविषयानप्यवलम्ब्य स्वमनोभावाः कविना प्रकटिताः । व्रजभाषायाश्छन्दांस्यङ्गीकृत्याद्वितीया प्रतिभा कविना प्रादर्शि । कवे 'र्जीवनसन्ध्ये' ति गीतिरतीव भावसान्द्रा मर्मस्पर्शिनी चास्ति—

ज्ञानमक्षराणां किञ्चिदासीद्दयया ते पुरा
जीवनप्रभाते यतो ज्योतिरुद्भवेद्विभो ।
तदनु कवित्वकलाप्रौढिर्ग्रन्थनिर्माणादि
यस्मात्साधुसम्मानादि सर्वं सम्भवेद्विभो ।
साम्प्रतं त्वजानन्नुपरामसमयं मे जनाः
किं मे लोकरञ्जनादिदम्भैः सम्भवेद् विभो
केवलं पदाब्जे तव नित्यमिदं सन्ध्यायामि
जीवनस्य सन्ध्या मम वन्ध्या न भवेद् विभो ॥



### जयपुरवैभवम्

'जयपुरवैभवं' भट्टमथुरानाथशास्त्रिणोऽनुपमा कृतिः । ग्रन्थारम्भे मङ्गलाचरणमनु कृतिकारः प्रख्यातकवीन् स्मरन् तेषु यस्मिन् यस्मिन् यो यो विशेषस्तं स्वविचारानुसारं निरूपयति । तदनु नागरिकवीथ्यां जयपुरस्य विशिष्टनागरिकाणां वर्णनमुपनिबद्धम् । सुहृद्गोष्ठीनां दोषाः सम्यङ् निरूपिता नागरिकाणां वेषभूषा च रमणीयं चित्रिता । स्वगुरुजनानां प्रथितयशसां लक्ष्मीनाथशास्त्रि-

शिवदत्तशास्त्रिप्रभृतीनां जीवनचरित्राण्यपि गद्यबन्धेषु सारगर्भितेषूपस्थापितानि। उद्यानवीथ्यां जयपुरस्य स्थानविशेषाणां रमणीयं चित्राङ्कनं विहितम्। अभिनन्दन-वीथ्यां जयपुरराज्ञो द्वितीयमानसिंहस्य यशोवर्णनं विद्यते। चरमायां व्रजभाषा-वीथ्यां स्वपूर्वजानां स्वस्य च व्रजभाषाविषयकविचाराः प्रकटिताः। कवेर्हिन्दी-च्छन्दसां प्रयोगस्योपक्रमोऽपूर्वः श्लाघ्यश्च। तद्यथा 'चौपाई'=चछन्दस उदाहरणम्--

भगवति भूरिभारमहमादाम्। यदभिनवे पथि पदमिदमाधाम्॥
सपदि विधेहि मह्यमनुकम्पाम्। देहि देवि मतिमनिशमकम्पाम्॥

चित्रबन्धानां संयोजनेऽपि कविना महत्पाटवं प्रादर्शि। अत्राष्टकोणबन्ध-नारिकेलबन्ध-लाकेटबन्धादयः केचन नवा नवबन्धा अपि सन्निवेशिताः। भाषा-चित्राण्यपि काव्यमिदं विचित्रयन्ति।

**साहित्यवैभवम्**

भट्टमथुरानाथस्य बृहत्कायोऽयं ग्रन्थः षड्वीथिषु विभक्तः। आमुखवीथ्यां मङ्गलाचरणं पश्चात् प्रातः प्रकृतिवनशोभा वर्णिताः। षड्ऋतुवीथ्यां ऋतुभिः सह तेषां तेषां ऋतूनां नायिका वर्णिताः। वसन्तस्य 'मानिन्याः' वर्णनं मनोहारि। तद्यथा--

विनयवचो मे मानिनि न मानयसे
मानय वयस्यावचो याऽसौ तेऽनुगामिनी।
विन्दति न नाम विधुसुन्दरि किलानुनयं
पदपतनेनापि वद का वा कुलकामिनी ?
मञ्जुनाथ रञ्जय विहसितेन मञ्जुमुखं
घोरघनघटायामियमेतु सौदामिनी
स्वामिनि ते मानो मयि काममयं भूयो भवेद्
भामिनि ! न भूयो भवेदेषा मधुयामिनी॥

नवरसवीथ्यां नवरसा मूर्त्तिमन्त इव चित्रिताः। तत्र शृङ्गारचित्रणमति-विस्तृतं वरीवर्त्ति। अग्रिमा नीतिवीथी माया-परसेवा-सज्जनदुर्जनमैत्री-लज्जाभि-मानादीनि विषयीकरोति। अत्रान्योक्तीनां सौन्दर्यं रमणीयम्। विनोदवीथ्यां समीक्षाविनोदान्योक्तिविनोदौ प्रामुख्यमावहतः। छन्दोवीथ्यां संस्कृतभाषाया अप्रचलितच्छन्दांसि हिन्द्या उर्दूभाषायाश्च शताधिकच्छन्दांस्यपूर्वकौशलेन व्यवहृतानि। गीतिवीथ्यामुर्दूभाषाया गजलगीतयो देशजरागेषु गुम्फिताः।

नवयुगवीथ्यामाधुनिकयन्त्रोपकरणादीनां वर्णनानि सङ्कलितानि । उपसंहृतिवीथ्यां च कविताविधानामभावः, पण्डितानां द्वेषकलहौ, निर्वेद इति विषया विवेचिताः ।

## गद्य-साहित्यम्

**निबन्धाः**

संस्कृतरत्नाकरभारतीपत्रिकयोर्बहवो निबन्धाः प्रकाशिताः । तत्र केचन शोधप्रधानाः समीक्षात्मका वा, इतरे व्यङ्ग्यपूर्णाः, ललिता, विचारात्मका वर्णनात्मका वा विलसन्ति । शोधलेखेषु 'अपि नासाभूषणमिदमासां यवनजातीनां सहवासादनुगत'-मिति भट्टमथुरानाथकृतो लेखो निबन्धुः प्रगाढमैतिहासिकज्ञानं परिचाययति ।[१] गोपीनाथद्राविडस्य 'गोस्वामिनस्तुलसीदासस्य काव्यार्थ-चौर्यम्'[२] , गङ्गाधरद्विवेदिनः 'नीतिवर्मणः कीचकवधम्'[३] इत्यादयः शोधलेखा अपि समुल्लेखार्हाः । व्यङ्ग्यलेखेषु भट्टमथुरानाथस्य 'किन्तोः कुटिलता'[४] इति निबन्धे किन्तु-शब्दः कथं जीवने बाधाः समुपस्थापयति मुहुर्मुहुरिति मनोरञ्जकं वर्णनं विद्यते । विचारात्मकनिबन्धेषु भट्टमथुरानाथस्य 'वर्तमानयुगस्य परीक्षा-प्रणाली संस्कृतशिक्षा च'[५], श्रीगोपीनाथशास्त्रिणः 'संस्कृतभाषाध्येतृणां कृते समुचिताः परामर्शाः'[६] श्री पट्टाभिरामशास्त्रिणः 'विद्वत्कवयः कवयः केवल-कवयस्तु केवलं कपयः'[७], श्रीगिरिराजशास्त्रिणः 'प्राचीना अर्वाचीना च शिक्षा-प्रणाली'[८] श्रीगिरिधरशर्मणः 'कैर्गुणैः सम्प्रति संस्कृतभाषा पठनीया'[९] इत्यादयो बहवो लेखा दृष्टिपथमायान्ति ।

१. संस्कृतरत्नाकरस्य चतुरङ्केषु ( ६।६–९ ) प्रकाशितः ।
२. सं० र० ३।१–२
३. सं० र० १०।२
४. सं० र० ( १।७, ८, ९, १० )
५. सं० र० २।१–३
६. सं० र० २।२–६
७. सं० र० ११।१
८. भारतीय ३।९–१०
९. सं० र० २।३

उपन्यासाः

श्री वृद्धिचन्द्रशास्त्रिण 'आदर्शदम्पती'[१], इतिनाम्नि उपन्यासे दाम्पत्य-जीवनस्यादर्शः प्रतिष्ठापितः । अत्र सामयिकसमस्यानां कृते लेखकस्य जागरूकता यथास्थानं स्फुटति । मनोभावानां विशदचित्रांकने चरित्रचित्रणे च किमपि कौशलमाविष्कृतमौपन्यासिकेन । उपन्यासोऽयं मूलतश्चरित्रप्रधानः । नायको मोहनो दिवङ्गते पितरि यथाकथञ्चिदेकां भृतिं लभते । स्वाभिमानात् श्वशुरगृहे वस्तुं नासौ वाञ्छति पत्नीं च स्वगृहमेवानयति । एकदा मोहन आत्मसम्मान-वशाद् भृतिं परित्यजति । तस्य पत्नी किशोरी स्वालङ्करणानि विक्रयार्थं तस्मै समर्पयति । इत्थं पत्न्या अनेन साहाय्येन मोहनः स्वतन्त्रमेकमापणं चालयति । अथ कदचिद् राजा महेन्द्रसिंहः काञ्चित् सुन्दरीं हस्तगतां कर्त्तुकामो नापित-हरदेवस्य मुखेन तस्य साहाय्यं याचते । एतादृशे जुगुप्सिते कर्मणि साहाय्यं कर्त्तुमनुद्यतो मोहनः कारागारे बध्यते राज्ञा । एकस्मिन्नहनि राजा हरदेवस्य भगिन्यामेव बलाद् व्यभिचाराय प्रवृत्तो भवति, किशोरी च तं रक्षति । ततो हरदेवो ज्ञातवृत्तान्तो राज्ञो वधाय प्रवर्त्तते किन्तु किशोरी तं निवारयति । इत्थं किशोरीमोहनयोः सदाचारावर्जितो राजा स्वदुष्कृत्यानां कृते भृशं पश्चात्तप्तः किशोरीं क्षमां याचते मोहनं च कारागारान्मुक्त्वा स्वकोषाध्यक्षपदे नियो-जयति ।

उपन्यासस्य कथावस्तु सुरोचकं, भाषा सरलसरला सशक्ता च संवादाश्च पात्राणां चरित्रोद्घाटने सक्षमाः । उपन्यासकलायास्ते ते पक्षा अत्र समुन्नता वर्त्तन्ते संस्कृतसाहित्यजगति च कृतिरियं न मृतिमर्हति ।

भट्टमथुरानाथस्य 'आदर्शरमणी' त्युपन्यासः[२] चत्वारिंशत्पृष्ठात्मको दशसु परिच्छेदेषु च विभक्तोऽस्ति नायको जगदिन्दुर्बङ्गप्रदेशे धनाढ्यो भूस्वामी वर्त्तते । तस्य दिवङ्गतपितुः कनकपुरवासिघोषपरिवारेण जातीयकलह आसीत् । अभियोगे घोषवंशीयः कुमुदरञ्जनः पराजितो दरिद्रतां गतो मृतश्च । तस्य भार्या स्वाभि-मानात् कस्मादपि पुरुषात् साह्यमस्वीकुर्वाणा यथाकथञ्चित् स्वजायां मृणालिनीं संवर्धयाम्बभूव । मृणालिन्या हृद्यनिरवद्यसौन्दर्यविमुग्धो जगदिन्दुः स्वपित्रा सहाभियोगेनैव मृणालिनी तस्या माता च दारिद्र्यमुपागत इति विज्ञाय मृणालिनीमुद्वोढुं निश्चिकायेति कथात्र विद्यते ।

१. संस्कृतरत्नाकरे ( ४।७–११ ) क्रमशः ।
२. राघवेन्द्रमुद्रणालयप्रयागतः प्रकाशितः ।

उपन्यासे मृणालिन्या माता आदर्शरमणी विद्यते, या स्वभर्तुर्मृत्युकाले तस्मै दत्तं वचनं विविधकष्टततिं सहमाना सर्वथा पालयति। कारुणिकस्य भूस्वामिनो जगदिन्दोश्चरित्रमप्यत्र श्लाघनीयं विलसति। भाषा चात्र ललित-मसृणा सरणिश्च हृदयग्राहिणी। संवादानां सौष्ठवमप्यावर्जयति हृदयम्। इत्थं कृतिरियमुत्कृष्टोपन्यासेषु गणनार्हा।

संस्कृतस्योदीयमानो लेखकः कलानाथशास्त्री 'जीवनस्य पृष्ठद्वयम्' इत्युपन्यासं विरचयामास।[1] उपन्यासनायिका कल्पनात्र आत्मकथां प्रस्तौति। कल्पना स्वकीये संस्कृताध्यापके राकेशे दृढं बद्धभावास्ति। राकेशस्याध्यापनकौशलेन सा बी० ए० परीक्षायां द्वितीयश्रेणीं संस्कृतविषये चोत्कृष्टानङ्कान् लभते। किन्त्वस्मिन्नेव समये राकेश एम. ए. परीक्षां समुत्तीर्य नगराद् बहिर्गच्छति। कल्पना तद्वियोगेन सन्तप्ता सती तत्पाठितान् कालिदासीयकाव्यांशान् स्मरति मुहुर्मुहुः। अस्मिन्नेव समये तस्याः पिता तद्विवाहं निश्चिनोति। कल्पना राकेशे मम प्रीतिरस्तीति निवेदयितुं न शक्नोति सङ्कोचवशात् प्राप्ते विवाहसमये विक्षिप्ता इव जायते सा। किन्तु पाणिग्रहणकाले वरस्य मुखं वीक्ष्य राकेश एवायमिति निश्चित्य हर्षोन्मत्ताऽसौ भवति। तयोर्दाम्पत्यजीवनं सादरं व्यतीयाय। राजीवाख्यस्तनयो विवाहाद् वर्षत्रयानन्तरं जनिमलभत। कल्पना राजीवस्य सम्यक् शिक्षाग्रहणाय प्राध्यापिकापदमङ्गीचकार।

उपन्यासेऽस्मिन् घटनानां न्यूनता विद्यते किन्तु कथायां नायकयोर्मनः-स्थितिविश्लेषणे विवाहादिवर्णने च दृश्यते प्रकामं विस्तारः। कालिदासादीनां शृंगारितरचना अपि विद्यार्थिभिः पठितुं योग्या अध्यापकैश्च निःसङ्कं पाठयितुं शक्या इति प्रतिपाद्योऽत्र विषयः। भाषास्योपन्यासस्यातीव सरला हृदयावर्जिका च कतिपया नवबीनशब्दा यत्र तत्र प्रयुक्ताः।

**लघुकथाः**

जयपुरस्य कथाकारेषु भट्टमथुरानाथोऽग्रगण्योऽस्ति। संस्कृतरत्नाकरभारती-प्रभृतिपत्रपत्रिकासु अस्य पञ्चाशत्प्रायाः कथाः प्रकाशं गताः। महाभागेनानेन विविधविधाः कथाः गुम्फिताः तद्यथा—अंगुलिमालः, 'भारतध्वजः', 'पृथ्वी राजस्य पौरुषमित्यादयः कथाः ऐतिहासिक्यः, 'एकवारं दर्शनं', 'दयनीये'त्यादयः सामाजिक्यः, 'सत्यो बालचरः', 'विषमा समस्या' इत्यादयः मनोवैज्ञानिक्यः 'बालकभृत्यः' इति प्रतीकात्मिकी, 'लाला व्यायोगः' 'शिष्या' चेत्यादयः

---

१. उपन्यासोऽयं भारत्या षोडशाङ्केषु (६।३–१०।६) प्रकाशितः।

हास्यकथाः सन्ति । 'एकवारं दर्शन'मिति कथायां पत्युदर्शनमभिलषन्ती पत्नी कथं तस्य निर्दयतया असफलमनोरथैव म्रियत इति वर्णितम् । 'प्रेम्णः प्रतिदान'-मित्यत्र दम्पत्योः पारस्परिकप्रेमा मार्मिकतया चित्रितः । भट्टमथुरानाथस्य कथासु सूक्ष्मपर्यवेक्षणम्' भावोद्बोधक्षमता, रसपेशलता च विलसन्ति ।

इतरकथालेखकेषु म.म.गिरिधरशर्मा चतुर्वेदी, श्रीसूर्यनारायणशास्त्री, श्रीवृद्धिचन्द्रशास्त्री, श्रीपट्टाभिरामशास्त्री, श्रीदीनानाथशास्त्री'मधुपः' श्रीनारायण-शास्त्री काङ्करश्चोल्लेखमर्हन्ति । म०म०गिरिधरशर्मणः 'कश्चित्कवि'रिति कथा कवेः हृदयग्राहि चरित्रं प्रस्तवीति । सूर्यनारायणशास्त्रिणः 'ननान्दृप्रजा-वत्योः कलहस्य कुपरिणामः' इति कथायां गृहकलहेन कथं सर्वनाशो जायत इति चित्रितम् । वृद्धिचन्द्रशास्त्रिणः 'उमा' इति कथायां दाम्पत्यजीवनमतीव-स्वाभाविकतया चित्रितम् । पट्टाभिरामशास्त्रिणः 'बुभुक्षितः शिशु' रिति कथा शिशु-मनो-विज्ञानं विषयीकरोति । श्रीदीनानाथत्रिवेदिनो 'नारीमतिवैभव'मिति कथायां नायिकायाः शीलाया बुद्धिचातुर्यं मनोरञ्जकं निरूपितम् ।

## चम्पूकाव्यम्

जयपुरस्य संस्कृतसाहित्ये चम्पूकाव्यानां संख्या स्वल्पा एव । चम्पूकाव्येष्वेक-मेव प्रकाशितं सदुपलभ्यते । दशकण्ठवधाख्यमिदं चम्पूकाव्यं राजस्थानप्राच्यविद्या-प्रतिष्ठानेन १९६० खिस्ताब्दे प्रकाशितम् । अत्र चतुर्षु गुच्छकेषु रामायणकथा वर्णिता दार्शनिकसिद्धान्ताश्च सविस्तरं प्रतिपादिताः । दुर्गाप्रसादद्विवेदिन इयं कृतिः चम्पूकाव्यस्य लक्षणैः समन्विता विद्यते । भाषास्याः समासभूयिष्ठा ओजो-गुणमण्डितास्ति ।

## नाट्यसाहित्यम्

जयपुरीयसंस्कृतसाहित्ये द्वे नाटके एकाङ्करूपकाण्येव च प्राप्यन्ते । तत्रा-काशवाणीरूपकाणां स्थानमुल्लेखार्हम् ।

### रुक्मिणीस्वयंवरनाटकम्

रामकिशोरशर्मणो रुक्मिणीस्वयंवरनाटके[1] सप्ताङ्केषु पौराणिकं कथावस्तू-पस्थापितम् । नाटकेऽस्मिन् वीररसोऽङ्गी शृङ्गाररसस्य च गौणतास्ति । नाट्य-

---

१. नागपुरविश्वविद्यालयस्य हस्तलिखितग्रन्थालये प्राप्यते ।

शास्त्रिभिर्निरूपितानां सन्धिसन्ध्यङ्गवस्थार्थप्रकृत्यादितत्त्वानां सम्यक् समावेशो नाट्यकारेण विहितः ।

**माधवस्वातन्त्र्यं नाटकम्**

गोपीनाथशास्त्रिदाधीचविरचितं नाटकमिदं 'मुद्राराक्षस'—मनुहरति । महाराजे रामसिंहे दिवं याते तस्येच्छानुसारं कुमारः कायमसिंहो राज्येऽभिषिच्यते । एवं स्थिते सर्वे सामन्ता नूतनं राजानं बालकं मत्वा तं प्रतार्य स्वार्थसिद्धयै सयत्ना जायन्ते । किन्तु कान्तिचन्द्रबनर्जीमहाशयो राज्ञो रक्षायै बद्धपरिकरो भवति अन्ततोगत्वा राज्ञो विरोधितत्त्वानि समूलं विनाश्य साफल्यं लभत इत्यत्र कथावस्तु ।

नाटकेऽस्मिन् राजनैतिक्योऽभिसन्धयो मुद्राराक्षस इवातिकौशलेन निरूपिताः । अत्रत्या घटनाः प्रायश इतिहाससम्मताः सन्ति, क्वचिन्नूतनकल्पना अपि समुपस्थापिताः । नाटकेऽपेक्षिततत्त्वानां सन्धिसध्यङ्गावस्थार्थप्रकृत्यादीनां साङ्गोपाङ्गः समावेशोऽत्र जातः । भाषा अत्र विषयानुकूला सरलसरसा च । इत्थं 'माधवस्वातन्त्र्यं' संस्कृतभाषाया उत्कृष्टनाट्यकृतिषु गणनामर्हति ।

**स्वातन्त्र्ययज्ञाहुतिः**

श्रीनारायणशास्त्रिकाङ्करः 'स्वातन्त्र्ययज्ञाहुति' रिति रूपके कस्यचिद् यूनो मातृभूमेः कृते बलिदानं निरूपयामास ।[1] अत्र एम० ए० कक्षाच्छात्रः सतीशः स्वतन्त्रतासङ्ग्रामे स्वेच्छया कथं मृत्युमालिङ्गतीति हृदयग्राहि वस्तु विराजते । संवादानां कुशलसंयोजन, भावचित्रणपाटवं, सूक्ष्मपर्यवेक्षणं च रूपकस्यास्योत्कर्षमुन्नयन्ति ।

**बालशाकुन्तलम्**

श्री गोविन्दशर्मणोपनिबद्धमभिज्ञानशाकुन्तलस्य संक्षिप्तरूपकमिदं संस्कृतच्छात्राणां कृते रोचकं सुबोधं पठनीयं चास्ति ।[2] अत्र कालिदासीयनाटकस्य समग्रमपि कथावस्तु दृश्यद्वये समुपस्थापितम् । प्रथमदृश्ये शाकुन्तलनाटकस्याद्यचतुरङ्काणां द्वितीये च चरमत्रयाणामङ्कानां वस्तु समुपस्थापितम् । रूपकेऽस्मिन् नाटकोचितसमस्ततत्त्वानामभावो विद्यते ।

---

१. रूपकमिदं संस्कृतरत्नाकरे ( १८।१-२ ) प्रकाशितम्

२. भारत्यां ( १३।४,५,६ ) प्रकाशितम् ।

**कृष्णसुदामचरितम्**

श्रीगोविन्दशर्मणो द्वितीयरूपकमिदं कृष्णसुदाम्न आख्यायिकां विषयीकरोति।[१] अत्र पौराणिकी कथा कौशलेन नाट्ये परिवर्त्तिता। इदमपि रूपकं संस्कृताध्येतॄणां बालकानां कृते बोधगम्यं पठनीयं चास्ति।

**महाभिनिष्क्रमणम्**

कलानाथशास्त्रिकृते रूपकेऽस्मिन् सिद्धार्थस्य संवेगो विषयेष्वरुचिः, अन्तःपुरसुन्दरीणां तं लोभयितुं यत्नाः, तस्य दार्शनिकचिन्तनम्, अन्ते च निर्गमनमिति कथावस्तु विद्यते।[२] सिद्धार्थचरित्राङ्कने नाट्यकारः सूक्ष्ममनोवैज्ञानिकदृष्टिमाविष्करोति। अन्तःपुररमणीविलासानां राजकीयवैभवस्यापि चात्र स्वाभाविकं चित्रमुपस्थापितम्।

**चित्तौडसिहम्**

चित्तौडसिहमितिरूपकमपि कलानाथशास्त्रिरचितं विद्यते।[३] अत्र राणाप्रतापकृतस्वातन्त्र्यसंघर्षस्य प्रेरणाप्रदं नाट्यरूपं प्रस्तुतम्। अत्र प्रतापस्याकबरेण सङ्ग्राम ऐतिहासिकतथ्यानुसारं निरूपितः। राणाप्रतापस्य चरित्रं भृशं हृदयावर्जकम्। नाट्यशिल्पदृष्ट्योत्कृष्टा कृतिरियम्।

**कर्मक्षेत्रे**

कलानाथशास्त्रिकृते कर्मक्षेत्ररूपके वर्त्तमानसमाजे व्याप्ता परम्परावादिता सङ्कीर्णस्वार्थान्धता च यथातथ्यं चित्रिता।[४] पण्डितधर्मानन्दो नाम दाम्भिकः पाखण्डेन लोकांश्छलयति। अध्यापकः सत्यव्रतोऽन्यायिनं तं विरुणद्धि। धर्मानन्दः सत्यव्रत भृशमवमनुते किन्तु कदाचिज्ज्वालावलीढे जाते धर्मानन्दस्य गृहे सत्यव्रत एव तस्य भार्यां द्रव्यं च रक्षति। लेखकेन स्वसम्मतं धर्मस्य स्वरूपं समाजसेवायाश्च महत्त्वं सम्यङ् निरूपितम्। सत्यव्रतस्य चरित्रमत्र समुज्ज्वलमनुकरणीयं च विवृतम्।

---

१. भारत्यां प्रकाशितम्।

२. आकाशवाण्या जयपुरकेन्द्रात् प्रसारितम्।

३. " "

४. " "

### बिल्हणचरितम्

बिल्हणचरिते प्रभाकरशास्त्रिणा बिल्हणस्य रुचिरं चरित्रं चतुरङ्केषूपस्थापितम् ।[२] विविधस्थानानि पर्यटन् कविवरो बिल्हणो गुर्जरप्रदेशस्य लक्ष्मीमन्दिरनगरं प्राप । तत्र राजा वीरसिंहस्तं स्वतनयां शशिकलामध्यापयितुं न्ययोजयत् । अनन्तरं शशिकलाबिल्हणौ प्रेमपाशबद्धाविति विज्ञाय राजा चौरोऽयमितिकृत्वा बिल्हणाय मृत्युदण्डमाज्ञापयामास । बिल्हणस्तस्मिन्नेव समये चौरपञ्चाशिकामसृजत्, शशिकला चात्मघाताय तत्परा बभूव । अन्ततो राजा बिल्हणं मुक्त्वोभयोर्विवाहं सम्पादयामास । अत्र बिल्हणस्य पण्डितेभ्यः शास्त्रार्थः साधु चित्रितः । बिल्हणकृतं चन्द्रस्य शशिकलायाश्च सौन्दर्यवर्णनं लेखकस्य कवित्वशक्तिं परिचाययति ।

### श्रीशङ्कराचार्यम्

श्रीशङ्कराचार्यमिति रूपके प्रभाकरशास्त्रिणा आचार्यशङ्करस्य चरितमुपनिबद्धम् ।[३] प्रथमेऽङ्के शङ्करस्य जन्म, द्वितीये बाल्य एव तस्य संन्यासः तृतीये गोविन्दाचार्यात् संन्यासदीक्षां गृहीत्वा तस्योपनिषदादीनामध्ययनं काशीं प्राप्य चाण्डालादद्वैतमतस्योपदेशग्रहणं, चतुर्थे शङ्करकुमारिलयोः समागमः, पञ्चमे मण्डनमिश्रेण शास्त्रार्थः, षष्ठे च राज्ञोऽमरुकस्य शवे प्रविश्य शङ्करस्य कामशास्त्रज्ञानं, मण्डनमिश्रपत्न्याः पराजयः, बौद्धधर्मनिरोधः शङ्करस्य निर्वाणञ्च निरूपितानि । अत्र शङ्कराचार्यस्य मानसिकमन्तर्द्वन्द्वं शास्त्रार्थदक्षता पाण्डित्यं चाकर्षकतया चित्रितानि । संवादा अपि रुचिकराः ।

### महाकविमाघम्

महाकविमाघमितिरूपकमपि प्रभाकरशास्त्रिकृतं विद्यते ।[३] अत्र चतुर्ष्वङ्केषु माघस्य चरितं दन्तकथा अनुसृत्योपस्थापितम् । स्वपितृव्यस्य शुभङ्करस्य कथनेन माघः भारवेः प्रतिस्पर्धया शिशुपालवधमहाकाव्यं रचयति । दानशौण्डोऽसौ स्वदानकोषे रिक्ते जाते भोजस्य सविधे तन्महाकाव्यं प्रेषयति । भोजश्च महाकाव्यस्य वैशिष्ट्यं समालोच्य माघाय लक्षत्रयरूप्यकाणि प्रददाति । किन्तु माघपत्नी तद् द्रव्यमपि याचकेभ्यः प्रददाति । तथात्वे सत्यपि माघस्य गृहे याचकानां सम्मर्दो वर्त्तत एव । ततस्तेभ्यो दानाय किमपि द्रव्यमलभमानो माघः प्राणांस्त्यजति माघपत्नी च करुणं विलपतीत्यत्र कथावस्तु । रूपकेऽस्मिन् अङ्कानां दृश्येषु विभाजनं कृतम् ॥

---

१. २. ३. एतानि त्रीणि रूपकाण्यप्याकाशवाण्या जयपुरकेन्द्रात् प्रसारितानि ।

# भारते शवस्य भूमिशयनं वा दाहो वा

## श्रीशिवनारायणः शास्त्री,

गर्त-शब्दो नामाचर्म्यामयेऽष्ट-कृत्वः प्रयुक्तो दृश्यते। तत्रैष सप्तकृत्वो[1] (क) रथे, एक-दा[2] च (ख) गर्तः सभा-स्थाणुः, (सभा-स्थानं वे[3]) ति यास्कानुरोधेन सभा-स्थाने च वर्तते। तैत्तिरीय-काठक-मैत्रायणी-प्रभृतिषु याजुष-संहितासु च गर्तो (ग) निखाते, शव-संस्काराय निखाते गह्वरे च 'कब्र' इति-प्रसिद्धेऽर्थे दृश्यते। लौकिक-संस्कृते चायं शब्दो निखाते एव दृश्यते। तथा चामरो—गर्तावटौ भुविश्वभ्रे इति। आधुनिकीषु भारतीय-भाषासु चास्यार्थ-विकासः द्वि-विधो दृश्यते (क) रथ-सम्बन्धेन (ख) श्वभ्र-सम्बन्धेन च। तथाहि—(क) गड्डा, गड्डी, गाडा, गाडी, गाड़ी (ऊर्दू-भाषायाः) इति रथ-सम्बन्धात्, (ख) गड्ढा, गडही, खड्डा, खड्ड, खढा, गढा चेति श्वभ्र-सम्बन्धात्। पाश्चात्यासु प्राकृत-भाषासु. चाङ्गली प्रभृतिषु (क) प्राचीनजाँसि Kartr इति, प्राचीनाङ्गल्यां cract इति, आधुनिकाङ्गल्यां cart[4] इति, court[5] इति पदानि च रथार्थ-सम्बन्धम् अद्यापि धारयन्ति। (ख) यास्कोक्त-सभा-स्थानार्था-र्थयि च आङ्गल्यां court, courte, carte इति पदानि,

---

१. ऋग्वेद-संहिता २।३३।११; ५।६२।५, ७–८, ६८।५; ६।२०।६; ७।६४।४ इति।

२. ऋ० १।१२४।७ इत्यत्र गर्ता रुगिवेति पदे।

3. Skandaswamin and Maheshwara on the Nirukta, १९३१ ई०, लवपुरम्, ३।५, पृष्ठे १३०,

सभा-स्थानामिति पाठान्तरम्।

४. आक्सफोर्ड, इंगलिश, डिक्सनरी, १९३३ ई० सं०, पृष्ठे १३८ cart इति पदस्य तृतीयोऽर्थः 'A two whaeled vehicle of lighter or more elegant make, with springs drawn by one horse at a rapid pace.

५. तदेव, पृष्ठे १०९२, स्कन्धे २, Some kind of cart for carrying stones, bricks...the like. Hence court-lead.

लातीन्यां cortem, cohortem, इति पदे, स्पैन्यां cortes इति पदम्, आङ्गल्यां court शब्दस्य निम्नोक्तोऽर्थश्च 'The place, hall or chamber in which justice is judicially adminitaaed.+ अनु-सन्धेयानि। आङ्गल्यां courteous इति पदस्य संस्कृतस्य सभ्य इति पदस्य चार्थयोस्तुलनाऽत्र विधेलिमा। लातीनी-भाषायाः gradus इति पदं, तत्सम्बद्धानि gradin, graden, gradino, grade इति पदानि चास्मन्मतेन यास्कोक्तं सभा-स्थान-रूपसमर्थमेवानुरुन्धन्ति। भारतीय-भाषासु चायं शब्दः सभा-स्थान-रूपेऽर्थे केनापि रूपेण वर्तते, न वेति न वयं विद्मः।

(क) रथार्थको गर्त-शब्दो यास्केन स्तुति-कर्मणो गृणातेर्निरुक्तो, 'रथोऽपि गर्त उच्यते, गृणातेः स्तुति-कर्मणः, स्तुततमं यानम्।[६] ' इति।[७] डा० सिद्धेश्वर वर्मा चेमं शब्दं भारोपीयेन gurera ('शब्दे', to raise the voice इत्यर्थेन) सम्बन्धितवान्। लिथुवानी-भाषायां geras इति पदं च good इत्यर्थकं तत्सम्बद्धम् इत्याह। अस्मन्मतेन तु गृणातेरस्य धातोरर्थो वहनं वा, गतिर्वा स्यात्। आङ्गल्याः carry, निगरणे च गर इति धातू अस्यैवार्थस्य विकास इति न आकूतम्।

(ग) यस्य चापि गर्तस्यार्थो यास्केन 'श्म-शानसञ्चयोऽपि गर्त उच्यते'। ( निरुक्ते ३।५ ) इति श्म-शान-सञ्चयो निरूपितस्, तस्यापि मन्ये मूलं श्वभ्र इति स्यात्। शव-संस्कार-प्रसङ्गेन च श्वभ्रार्थो गर्तस्तत्र शवस्य निधानात्कब्र इत्यर्थे परिणतः। अयमेव च हेतुर्येन शतपथे गर्तस्य सम्बन्धः पितृभिर्योजित इति मन्महे तथाहि—गर्तवान्यूपोऽतीक्ष्णाग्रो भवति। पितृदेवत्यो वै गर्तः। पितृलोकमेवैतेनोज्जयति। अत्रार्थेऽयं शब्दो यास्केन गुरतेर्निरुक्तः—' श्मशान-सञ्चयोऽपि गर्त उच्यते, गुरतेरपगूर्णो भवति' इति। 'अधस्तात्खातो भवतीति' च तस्यार्थः।

---

+ तत्रैव, द्वादशोऽर्थः।

६. रथस्य स्तुततमता-विषये चास्मदीये हिन्दी-भाषा-निबद्धे निरुक्त-मीमांसेतिग्रन्थे 'निरुक्त में प्रति-बिम्बित समाज' इति-शीर्षकेऽध्याये पृष्ठं २८५, ३८७ इति च द्रष्टव्यम्।

७. निरुक्तम्, ३।५।

८. शतपथब्राह्मणम्, चिन्न-स्वामि-संस्करणम्, ५।१।६।७।

९. निरुक्ते ३।५।

अत्रार्थे यास्केन याजुषमेकं वाक्यं प्रमाणमुपन्यस्तम्—नोपरस्याधिष्कुर्याद्, यमदुपरस्याविष्कुर्याद्, गर्ते-ष्ठाः स्यात् प्रमायुको यजमानः इत्यपि निगमो भवतीति ।[1] अस्यायमाशयः—

य ऊर्ध्व-शाख, ऊर्ध्व-शकलोऽशुष्काग्रो, बहु-शाखो बहु-पर्णो वृक्षः, स यूप्यः तं वृश्चेत् । तत्काष्ठेन च यज्ञे पशुबन्धनाम यूपं कारयेत् । तस्य यूपस्य चैकं भागमुपराख्यं भूमौ खातेऽवटे निधाय मृदा तं भागं सम्यग् आच्छादयेत् । स भागः प्रकटितो न दृश्येत । यदि दृश्येत, तेनापराधचण्डेन यजमानो गर्ते-ष्ठाः = गर्तमित् स्यात्प्रमायुको मृतो यदा । इति ।[2]

एतेनैवमायाति शवस्य संस्कारस्तं गर्ते निधायाक्रियत इति, प्राचीनकाले च भारते वर्षे शवस्य संस्कारो दाह-रूपेण नाक्रियत, परं शवं भूमौ शाययित्वैवाक्रियतेति च ।

**गर्त-श्मशान**—शब्दयोर्निर्वचनं चापि यास्केनेममेवाशयं स्वीयाशये निधाय कृतम् । **गुरतिना सह अपेत्युपसर्ग-योगो**[3] **गर्तस्य** गह्वरतोऽति-शयं प्रकटयति । **श्म-शानं = श्म-शयनं श्म = शरीरमिति** श्म-शान-शब्दनिर्वचनमपि शवस्य तत्र गर्ते शयनमेव पुष्यति । श्म-शान-शब्दो भाषायां मसानेति मसाणेति रूपेण लभ्यमानो दृश्यते । 'श्म' इति पदं शरीरम् इति पदेन व्याख्यातम् । 'शरीरं' च श्रृणातेर्निरुक्तम्, शीर्णं हि तत्तस्मिञ्श्वभ्रे निहितं भवति । श्म-शानं च भूमेः स भागो यत्र शरीरं शेते; स च गर्त-रूपः एतेन शरीरस्य कब्रे निधानमेव सिद्धति । कानिचिदस्मन्मित्राणि ब्रूयुश्चितिकायां निधानात् प्राक् शवो भूमौ नि-धीयते । तदेव निधानमत्राभिप्रेतम्, न तु कब्रे स्थापनमिति । परमत्रास्माकं वैमत्यम्—एतद्भूमि-निधानं महत्त्वेन दाहं तथा नाति-शेते, यथा दाह-रूपं प्रधानं सस्कारमनादृत्य तत्रैव तत्थानस्य सङ्केतः स्यात् । दाह-संस्कारे दाहो यथा प्रधानं, न तथांऽशेनापि भूमौ स्थापनम् प्रधानम् । तत्तु यावच्चितिका न निर्मीयते, तावदगत्या करणीयमेव । खट्वायाश्चादाहादपि भूमौ खट्वायाः स-शवायाः स्थापनं कर्तव्यमेव । तस्मान्न तत्संस्काराङ्गम्, येन 'संस्कारस्याभिधानं तेनास्तीति कल्प्येत । अद्य क्रियमाणे शवसंस्कारे च दाहस्य यथा प्राधान्यं, तत्र तु मसाण इति पदस्य श्रवणेनैव 'दह्यमानचितिका-युक्तं स्थानमिति' बुद्धौ

---

१. तत्रैव ।

२. अत्रार्थे काठक-सं० २६।३,५ इति द्रष्टव्या ।

३. निरुक्ते ३।५

घटमानोऽर्थः प्रमाणम् । न तु भूमि-स्थापितशव-युक्तं स्थानमिति बोधो हि तेन जागर्ति । 'कन्न-गाहेति' पदेन च 'गर्भे धृत-शवा भूमिरि'त्यर्था बुद्धौ प्रस्फुटति ।

शवानां भूमि-गर्भे संस्कार-विषये चेमा ऋचोऽपि प्रमाणम् । शवस्य भूमौ निधान-समये शवं प्रत्युच्यते—

उप सर्प मातरं भूमिमेतामुरुव्यचसं, पृथिवीं सु-शेवाम् ।
आर्ग-म्रदा, युवतिर्दक्षिणावतं एषा त्वा पातु निर्ऋतेरुपस्थात् ॥

ततो भूमि प्रतिउच्यते—

उच्छ्वञ्चस्व पृथिवि, मा नि-बाधथाः, सूपायनाऽस्मै भव, सूपवञ्चना ।
माता पुत्रं यथा सिचाऽभ्येनं भूम ऊर्णुहि ॥

शवं प्रति पुनरुच्यते—

ऊच्छ्वञ्चमाना पृथिवी सु तिष्ठतु, सहस्रं मित उप हि श्रयन्ताम् ।
ते गृहासो घृत-श्चुतो भवन्तु, विश्वाहाऽस्मै शरणाः सन्त्वत्र ॥

शवे मृदं प्रक्षिपन्तो ब्रुवन्ति शवं प्रति—

उत्ते स्तभ्नामि पृथिवी, त्वत् परीमं लोगं निदधन् मो अहंरिषम् ।
एतां स्थूणां पितरो धारयन्तु, तेऽत्रायमः सादना ते मिनोतु ॥

अत्र स्पष्टं भूमि-शयन-संस्कारो वर्णित इति नितरां प्रथितम् । परमयं शयन-संस्कारः कस्येत्यत्र मतभेदः तथाहि—

अस्थ्नां भूमौ शयनं वर्णितम् इति प्राचीना परम्परा ।

पराश्चतस्रो यास्त्वत्र 'उपसर्पे'ति पार्थिवी ।
तासां प्रयोगः प्रेतस्य अस्थि-सञ्चय-कर्मणि ॥

इति ब्रुवाणेन शौनकेन शवस्य भूमि-शयनमत्र न प्रति-पादितम्, अपितु शवस्य दाहादनन्तरं शान्तेऽग्नौ तदस्थिचयस्य भूमौ स्थापनमत्र वर्णितमिति तात्पर्यमेषां मन्त्राणां वर्णितम् । 'शं वात'[१] इति यथाङ्गं कल्पयित्वेष्टकां निदधाति मध्ये तूष्णीम्[३] इति ब्रुवाणेन कात्यायनेन च शवदाहादनन्तरं चतुर्थेऽहनि दग्ध-शेषाण्यस्थीनि सङ्गृह्य, भूमौ खातं कारयित्वा, तत्र तानि मानव-शरीर-

१. ऋ० सं० १०।१८। १०।१३ । १४. बृहद्देवता ७।१८।१८। १५. वाजसनेयि-माध्यन्दिन-संहिता ३५।८ । ३. कात्यायन-श्रौत-सूत्रम् ११।४।८।

संस्थान-क्रमेण तत्तदङ्गानुसारेण कल्पयित्वा स्थाप्यानि, लोष्ट-मृत्प्रक्षेपश्च ततः कर्तव्य इति अस्थनामेव भूमि-शयनं प्रतिपादितं, न शवस्य। अनुकूलं चैतद् ब्राह्मणस्य। तथाहि शतपथम् 'अथैनं नि-वपति। इयं वै पृथिवी प्रतिष्ठा। अस्यामेवैनमेतत् प्रतिष्ठायां प्रतिष्ठापयति।'[३] इति। 'सविता ते शरीराणि मातुरुपस्थ आ-वततु'[१] इति सवितैवास्यैतच्छरीराण्यस्मै पृथिव्यै मातुरुपस्थ आ-वपति। 'तस्मै पृथिवि शम्भवेति'[१] यथैवास्मा इयं शं स्याद् एवमेतदाह।[३] अथैनं यथाऽङ्गं कल्पयति।[१] इति

एतेनैतदायाति भारतीया कर्म-काण्ड-परम्परा भूमौ शयन-संस्कारं शवस्य न मन्यते। किन्तर्हि? दग्ध-शेषाणां तदस्थनामिति। परं नेदं मतं वयमुचितं विभावयामः। तथाहि--

**अस्थि-सञ्चय-कर्मण**—इतिहासः प्राचीन-तरे काले शवस्य भूमौ शयनमेव पुष्णातीत्यस्माकं मतम्। दाह-कर्मणि च यत्किञ्चिद्धेतुभ्यः स्वीकृते आर्याः स्वीयां प्राचीनां प्रथां नैकपद एवात्यजन्। कोऽपि समाजस्तथा कर्तुं न प्रभवति। ते च मृतस्यास्थीनि भूमौ शाययित्वैवास्माभिः प्राचीन-परम्परााया निर्वाहः कृत इति मत्वा सन्तोषमावहन्। अथ कालेऽतीते अस्थीनि तु भूमा एवास्थाप्यन्त, परं भस्म (यदधुना-यावदुपेक्षितेमवासीत्) जले प्रक्षिप्येतेति प्रथा प्रचलिता। तथा चोक्तम्—

प्रेतस्यास्थीनि गृह्णाति प्रधानाङ्गोद्भवानि च॥
शिरसो, वक्षसः, पाण्योः, पार्श्वाभ्यां चैव, पादतः।
प्रक्षिप्य मृन्मये भाण्डे, नवे, साच्छादने शुभे॥
अरण्ये, वृक्ष-मूले वा शुद्धे संस्थापयत्यपि।
गृहीत्वाऽस्थीनि, तद्भस्म नीत्वा तोये विनिक्षिपेद्॥[२] इति।

अत्र तृतीये श्लोके **संस्थापयतीति'** न तत्र नि-धान-मात्रमाह, अपितु भूमिष्ठे खाते प्रक्षेपोऽभिप्रेतः। अन्यथा प्रमाणान्तर-विरोधप्रसङ्गात्।[३] एवमेव **'गृहीत्वाऽस्थीनी'** त्यस्यायमाशयः—'भस्म-चयादस्थीनि पृथक्कृत्य गृह्णीयात्। भस्म च तोये निक्षिपेत्' इति। अस्थ्नां च संस्कार उक्त एवेति च न तत्पुनः प्र-वाह्यम्।

१. श० ब्रा० १३।८।३।२। १. वा० सं० ३५।५।१६। तत्रैव। २. श० ब्रा० १३।८।३।३। ३. तत्रैव ५ कण्डिका।

२. निर्णय-सिन्धौ ३।३, (निर्णय-सागरीये, १९३६ ई०, पृष्ठे ४१३) उद्धृता अपरार्क मदन-रत्नौ। ३. कौशिकसूत्रम्।

ततोऽनन्तरं कालेऽतीते चास्थीनि चापि जले निक्षेप्तुं प्रारब्धानि। न च यादृशे तादृशे जले, अपितु तीर्थोदके पवित्रे क्वचन। तथा चोक्तम्—

ततो गत्वा क्षिपेत्तीर्थे, स्पर्श-दोषो न विद्यते।[1] इति।

कालान्तरे च तीर्थेष्वपि वरेण्यता-विचारो विधातुं प्रारब्धः। तथाहि—

गङ्गातोयेषु यस्यास्थि क्षिप्यते शुभ-कर्मणः।
न तस्य पुनरावृत्तिर्ब्रह्म-लोकात्सनातनात्॥[2] इति।

अद्य चास्थि-सञ्चय-कर्म 'दाहात्परतस्तृतीयेऽहनि श्मशाने दग्ध-शेषाण्यस्थीन्येकत्र क्रियन्त' इत्येवाभिप्रेतम्। अस्थि-सञ्चयेति पदेन भाषायां च फूल चुगना' इति व्याहरिणास्थ्नां भस्मनः पृथक्कृत्य सञ्चयन-रूपैकत्र-करण-मात्रमभिप्रेयते। तेषां यथाङ्गं सन्निवेशनम्, खाते वा निधानं, वृक्ष-मूले वा इति-प्रभृति किमपि न बुद्धिमारोहति, न च लोकेन क्रियत एव। शवस्य वा, तत्सम्बद्धस्य कस्यापि शेषस्य वा, वस्त्वन्तरस्य वा न भूमौ स्थापनमद्याभिप्रेतम् इति तु विशदमेव लोक-विदां विदाम्। तस्माद् 'भूमौ निधानस्य संस्कारो भारतीयेष्वार्येषु क्रमेणापचीयमानमाहात्म्यो दृश्यत' इति सिद्धम्। एष चास्य भूमि-स्थापन-संस्कारस्य माहात्म्यस्यापचयस्य प्रारम्भः शवस्य भूमि-स्थापन-संस्कारस्य माहात्म्यस्यापचयस्य प्रारम्भादेव अङ्कुरितोऽधुना प्रवृत्तायाः प्रथायाः प्रारम्भकाले पूर्णतामाप्तः इतितु सुवचमेव।

उपर्युद्धता ऋचश्चाप्यस्मिन्प्राचीन-परम्परा-पक्षे यथा-कथं चित्प्रयत्न-शतेन नीता अपि न समञ्जस-रूपेण नेतुं शक्या इत्यस्माकमाकूतम्। तथाहि—(क) प्रेत-मात्रे मनुष्ये तच्छरीरम्प्रति न कश्चिद्रागो यद्यपि शिष्यते, तथाऽपि यदि कश्चिच्छिष्यतेऽपि तर्हि, स तदस्थीनि प्रति तुलनामपेक्ष्य शरीरं प्रत्येवाधिको भवेदिति सु-कल्पम्। शवस्तु निर्घृणतया दग्धोऽचिरेणैव, सम्प्रत्य-स्थ्नां कृते सुख-कर आवासोऽन्वेष्यत इति विचित्रा खलु कल्पनाऽपीयम्। (ख) तत्समय-प्राये कालेऽन्य-देशानामितिहासं प्रति दृष्टि-पाते कृते शवस्यैव सुख-निवासस्यायोजनानि दृश्यन्ते। भूमि-संस्कारश्च शवस्य प्राप्यते तत्र। मिश्र-देशस्त्वत्र परां काष्ठां प्राप्तः इति तु सुविदितमेव। (ग) भारतवर्षेऽपि च कृतेषु प्राचीन-स्थानानामुत्खननेषु सत्कृत्य भूमौ संस्कृतानां शवानामेवोपलम्भो भवति।

एतेनेदमायाति प्राचीने काले भारते शवस्य भूमि-संस्कारोऽभवत्। वैदिके काले शवदाहस्य प्रथा प्रचलिता। शवस्य स्थाने च तदानीं दग्ध-शेषाण्यस्थीनि भूमौ न्यधीयन्त। कालान्तरे च तान्यपि भूमौ न न्यक्षिप्यन्त,

---

१. निर्णय-सिन्धा उक्ते स्थल उद्धृतः शौनकः। २. तत्रैवोद्धृतो यमः।

अपितु जले प्राक्षिप्यन्त। एवं क्रमेण शवस्य भूमि-संस्कारम् तथा कल्पनाया अपि बहिरभवद् यथाऽस्माभिर्निरुक्तमीमांसायामस्मिन्नर्थे प्रतिपादिते बहवः सुहृदो 'नोचितमिदं हिन्दूनां कृते प्रतिपादनमि'ति स्वीयमाक्रोशमिवात्रार्थे प्राचीकटन्। पुनरपि च मया प्रमाणान्यालोचयितव्यानीति विचार्यं सम्प्रति प्रकृते, मुद्र्यमाणेऽचरादेव प्रकाशयिष्यमाणे च **निरुक्त के पाँच अध्याय**[१] इति-नामके ग्रन्थे एतत्स्थले विचारे प्रसक्ते प्रमाण-परतन्त्रत्वात् पुनरप्यसावेवार्थो द्रढयितव्योऽभूदितिमर्षणीयोऽहमएतदर्थ-प्रतिपादनमसहमानैर्धार्मिकग्रामणीभिः ॥

---

६. अस्मिन्ग्रन्थेऽस्माभिरेवं प्रक्रियते:—

(क) आदौ निरुक्तस्य व्याख्यायमानस्य भागस्य विषयो विशदं विवेचितो भूमिकायां ७५ पृष्ठात्मिकायाम्।

(ख) निघण्टु-ग्रन्थस्य डा. लक्ष्मणसरूप-सम्पादितं पाठमादाय दुर्ग-स्कन्द-महेश्वर-टीकयोरुद्धृतेन, व्याख्यातेन च पाठेन, स्कन्द-स्वामि-सायणाभ्याम् ऋग्वेद भाष्यादिषु निघण्टोरुद्धृतानां स्थलानां पाठेन, अन्यैश्चोद्धृतेन पाठेन सन्तोल्य, संहितासु समुपलब्धिं च परीक्ष्य कतमः पाठो यास्कीय इति विस्तरेण युक्ति-प्रति-युक्ति-पूर्वकं निघण्टु-पाठः ( प्रथम-त्रयाणामध्यायानां, चतुर्थाध्यायस्य प्रथम खण्डस्य, सप्तमाध्यायस्य च प्रथम-खण्डस्य ) आलोचितः।

(ग) उपर्युक्त-दिशैव निरुक्तस्याद्यानां चतुर्णामध्यायानां सप्तमस्य चापि पाठ-शोधनं विधीयते।

(घ) उपर्युक्त-भागातमस्य निरुक्त-ग्रन्थस्य हिन्द्या शाब्दोऽनुवादो व्याख्यानं च तच्चेत्थम्—

(अ) यास्कस्य हृदयस्योद्घाटनम्। (आ) दुर्ग-स्कन्दाभ्यां कृता विशिष्टा व्याख्योहाः व्याख्याताः, मण्डिताः, खण्डिता वा। (इ) आधुनिकै राजवाडे-सिद्धेश्वर-वर्म-प्रभृतिभिर्यदुक्तम्, तस्यापि व्याख्यानं, खण्डनं वा विहिते। (उ) यास्केन निरुक्तानां पदानां निर्वचनं वैदिक-वाङ्मये समुपलब्धैर्निर्वचनैः क्व भिद्यते, क्व च तदनुकूलम् इति प्रायोवृत्त्या यथा-शक्यं प्रतिपाद्यते। (ऊ) यास्कोक्तानामर्थानामुप-बृंहणं वाङ्मय-द्वारा भवति, न वेति विशकलय्य विवेच्यते।' अत्र लेखे विहितं गर्त-श्म-शान-पदयोर्विवेचनं च प्रकृत-व्याख्यो-दाहरण-रूपेण विद्वद्भिरुपेयम्।

अत्र विदुषां विचाराः, अन्या सहायता च प्रार्थ्यते।

●

# माधवीयनामानुक्रमणीपाठविचारः

शुचिव्रतो लक्ष्मणपालः शास्त्री

वैदिकविद्वत्सु डॉ०चि०कुञ्जन्राजमहोदयस्य नामाविस्मरणीयं विद्यते। अस्मिन्निबन्धेऽहं तेन प्रसाधितायां वेङ्कटार्यसूनुना माधवभट्टेन विरचितायाम् ऋग्वेदानुक्रमण्यां सङ्कलिताया **नामानुक्रमण्याः** केषुचित् स्थलेषु पाठान् विचारयिष्यामि। डॉ०राजमहोदयेनास्याः सम्पादनं यमेकं कोशमाधृत्य कृतं स बहुदोषपूर्ण आसीत्। एतेन डॉ० राजमहोदयोऽस्याः सुप्रसाधनं कर्तुं नापारयत्।[1] डा० राजमहोदयेनेमामनुक्रमणीं प्रकाश्य विद्वज्जनानां भूयानुपकारो विहितः। न हि किञ्चित्कार्यं कदाचिदपि परिपूर्णं भवतीति वेधसः प्रवृत्तिमिमां चरितार्थयितुमेव मन्ये। डॉ०राजमहोदयेनास्याः प्रसाधने तादृशानि स्थलान्यवशेषितानि यत्रायतावध्येतारः पुनरपि परिश्रमं विदध्युः। अस्मत्सखः पण्डितशिवनारायणशास्त्रिमहोदयो निघण्टुनिरुक्तयोः पञ्चाध्याय्याः प्रसाधनव्याख्यानकर्मणि माधवीययोर्नामाख्यातानुक्रमण्योः प्रयोगं विदधदत्र पाठशोधस्य भूयसीं सम्भावनामवेक्ष्य मां नामानुक्रमण्याः पाठशोधनपरं निबन्धमेकं निबद्धुं प्रैरयत्। तत्फलरूपेण च मया नामानुक्रमण्यास्तत्तत्स्थलेषु स्थालीपुलाकन्यायेन परिष्कारायेदं प्रस्तूयते—

## १. ज्म—अज्म

'पाथो ज्म वसतिर्वास्तु' (प० १४) इति गृहनामसु पठितम्। इयं वङ्क्तिः **स्कान्दे भाष्य** (ऋ० १।३१।१५) इत्थंरूपेणोद्धृता वर्तते—'पाथो ज्मा वसतिर्वास्तु।'

एतेनेदमायाति—अनुक्रमण्यां पाथः, ज्म, वसतिः, वास्तु, इत्येतानि नामानि पठितानि। **स्कन्दस्वामिना** च—पाथः, ज्मा, वसतिः, वास्तु, इत्येतानि नामान्युद्धृतानि। अत्रायमुदेति सन्देहः—'ज्म' इति च 'ज्मा' इति चानयोः कतरः शुद्धः पाठः। यद्वोभावप्यशुद्धाविति।

**यास्कीये निघण्टौ** गृहनामसु 'अज्म' (निघ० ३।४।२२) इति पदं दृश्यते। 'ज्मा' इति **निघण्टौ चानुक्रमण्यामपि** च पृथिवी नामसु पठितम्। 'ज्म' इति च

१. भूमिकाया द्वाविंशं पृष्ठं द्रष्टव्यम्।

निघण्टौ न वर्तते। तस्मात् 'ज्म' इति 'ज्मा' इति चेत्युभे पदेऽत्र नोचिते। स्कन्दस्वामिना च (ऋ० भा० १।११२।१७) 'अज्मन्ना' इत्यस्य व्याख्यायाम् "'अज्म' इति गृहनाम" इत्युक्तम्। तस्मात्तेनोद्धृतायां नामानुक्रमण्याम्—पाथो ज्मा०' इत्यस्य स्थाने 'पाथोऽज्म०' इत्येव पाठः समीचीनः। अनुक्रमण्यां चापि 'पाथो ज्म' इत्यस्य स्थाने 'पाथोऽज्म' इत्येव पाठः साधुः।

## २. प्रापित्वे—प्रपित्वे

'आसात्प्रापित्वेऽस्तमीके' (प० ३०)। आसन्ननामानीमानि। अत्र 'प्रापित्वे' इति पाठो न क्षोदक्षमः; ऋग्वेदे 'प्रापित्वे' इति पदस्याप्रयुक्तत्वात्। निघंटौ समीपनामसु 'प्रपित्वे' (३।३१।१) इति पठ्यते। अत्रापि तदेव पदं स्यादिति मे मतिः। ऋग्वेदे चेदं पदमष्टवारं श्रूयते।

## ३. कूचश्च—कूचक्रः।

उत्सः कूचश्च उत्सधिः' (प० ८१)। कूपनामानीमानि। अत्र 'कूचश्च' इति पाठः सन्देहास्पदम्; 'कूच' इति पदस्य 'कूचश्च' इति पदस्य वा ऋग्वेद-संहितायामनुपलब्धत्वात्। तत्र 'कूचक्रे' ति पदं (ऋ० १०।१०२।११) इति मन्त्रे 'कूचक्रेणेव' इतिरूपेणोपलभ्यते। तस्मादत्र 'कूचश्च' इत्यस्य स्थाने 'कूचक्रः' इत्येव पाठः समीचीनः स्यादित्यभिप्रायः।

निघण्टौ 'कूचक्रः' इति पदमस्मिन् प्रकरणे (३।२३ खण्डे) न समाम्नातः 'कुशयः' (निघ० ३।२३।१३) इति शब्द एव कदाचिदत्र स्यादिति केचिन्मन्येरन्, परमेतद्धृदयावर्जकं न प्रतीयते।; तथा करणे कल्पनाबाहुल्यात्। अपरञ्च 'कुशयः' इति पदमृग्वेदे प्रयुक्तमपि नास्ति।

अपरञ्चेदमत्रानुध्यानीयम्—यत्कूपनामसु (प० ७९–८२) द्वाविंशतिरिति नामसङ्ख्याभिहिता, परं वस्तुतस्त्वेकविंशतिरेव नामान्यत्र समाम्नातानि सन्ति।

## ४. व्राधता—?

'वक्षणा व्राधता कुल्या' (प० ८१)। नदीनामानीमानि। अत्र 'व्राधता' इति पदं सन्देहपदम्। अत्र द्वौ दोषौ दृश्येते। प्रथमस्तु-अस्मिन् प्रकरणे सर्वाणि पदानि बहुवचनान्तानि निगदितानीति 'व्राधता' इत्यपि विसर्गान्तमेव भवेत्। द्वितीयश्चायम्—अयं पादः स्कन्दस्वामिना (ऋ० भा० १।३२।१) 'वक्षण

प्रायतः कुल्या' इतिरूपेणोद्धृतः। अस्मिन्नुद्धरणे **नामानुक्रमण्यां** मुद्रितस्य 'व्राधता' इति पदस्य स्थाने 'प्रायतः' इति पदान्तरमस्ति। तस्मादनयोः कतरन्**माधवीय**मिति सन्देह उपाजायते।

उभे अपि पदे **निघण्टा**वस्मिन्नर्थे न समाम्नाते। 'व्राधत्' इति पदं तत्र ( निघ ३।३।२१ ) महन्नामसु वर्तते। 'प्रायतः' इति च तत्र वर्तत एव न। तस्यात् कतरदत्र स्यादिति निश्चेतुमद्य न शक्यम्। **माधवेन** 'व्राधत्' पदस्य ( ऋ० भा० १।१२२।१० ) व्याख्यानं महन्नामत्वेनैव कृतम्। तस्मादत्रोभे अपीमे पदे न सम्भाव्येते।

**निघण्टु**पठितेषु ( निघ० १।१३ ) त्र्यक्षरेषु नामसु—धुनयः, हरितः, नभन्वः, रोहितः, सस्रुतः, पार्वत्यः, भास्वत्यः, अजिराः, इत्येतानि पदानि नामानुक्रमण्यां नानुक्रान्तानीत्येषामन्यतमं पदमत्र कदाचित् स्यात्। **निघण्टुसमाम्नाये**ऽसमाम्नातमेव वा पदान्तरमत्र सम्भाव्यते। तत्त्वं वेत्ति तु **माधवः**।

## ५. द्युम्नः—द्युम्नम्।

'चनो द्युम्नः पयोऽमृतम्' ( पृ० १२६ )। अन्ननामानीमानि। अत्र 'द्युम्नः' इति, 'पयः' इति पदे चिन्त्ये। 'द्युम्नः' इत्यकारान्तपुंसि सकारान्तं वा पदं वेदे नोपलभ्यते। अकारान्तं नपुंसके भूयसा प्रयुज्यते। तस्मादत्र 'द्युम्नम्' इति पठितुं युक्तम्। **माधवेन** ( ऋ० भा० १।५४।११; ७३।४ ) इत्यत्र द्युम्नमित्यस्यान्नमित्यर्थः कृतः। **स्कन्दस्वामिनापि** तत्रैव भाष्ये 'द्युम्नम् अन्नम्, हविर्लक्षणमन्नं च' इति व्याख्यातम्। ( ऋ० १।३१।१० ) इत्यत्र च भाष्ये **स्कन्देन** 'चनो द्युम्नम्' इत्युद्धृतम्। एतैः प्रमाणैरत्र 'द्युम्नम्' इत्येव पाठोऽपोषितमाम्।

## ६. पयः—वयः।

**स्कन्दस्वामिनो**पर्युक्ते १।३१।१० इति स्थले 'वयस्कृत् = अन्नकृत्' इति व्याख्याय 'चनोद्युम्नं वयोऽमृतम्' इत्युद्धृतम्। एतेन प्रतीयते—**स्कन्दस्वामि**मतेऽत्र 'पयः' इत्यस्य स्थाने 'वयः' इति पदं वर्तते इति। **अनुक्रमण्यां** (पृ० १२८) 'छद्म पाथ इह्लोर्क् पयः' इत्यत्र 'पयः' इति पदमग्रे वर्ततेचापि। तस्मा**दनुक्रमण्यामत्र** 'पयः' इत्यस्य स्थाने 'वयः' इत्येव पठितुं युक्तम्।

अन्ननामसु (पृ० १२५-१३२) चतुष्पञ्चाशतं नामसङ्ख्या निर्दिष्टास्ति। परं नामानि तु तत्र त्रिपञ्चाशदेवानुक्रान्तान्युपलभ्यन्ते। विचारणीयमेतत्।

## ७. ससः—ससम्।

'प्सरह: ससः श्रवोराधः' ( पृ० १२७ )। अन्ननामानीमानि । अत्र 'ससः' इत्युक्तं भवति। ऋग्वेदे पुंसि अस्याश्रुतत्वात्। **निघण्टौ** ( २।७। २१ ) 'ससम्' इत्येव समाम्नातम् , न तु 'ससः' इति । ऋ० १।५१।३ इति भाष्ये **स्कन्देन**—'ससमित्यन्ननाम' इत्यत्र नपुंसक एवास्य स्मरणाच्च 'ससः' इत्यस्य स्थाने 'ससम्' इत्येव सुधीभिर्निभालनीयम् ।

## ८. वृशः—व्रिशः ।

'वृशो नप्त्यः क्षिपो विपः' ( पृ० २५६ )। अङ्गुलिनामानीमानि । अत्र पठितं 'वृशः' इति पदमशुद्धं प्रतिभाति; निघण्टौ ऋग्वेदे वानुपलब्धत्वात् ।

'व्रिशः' इति पदं तु **निघण्टौ** (२।५।४। अङ्गुलिनामसूपलभ्यते । पादमिद- मृक्संहिताया—मेकदैव ( ०१।१४४।५ ) दृश्यते, **माधवेन** चास्मि-न्नेवार्थे भाषितम् । **निघण्टौ** 'ख' कोशे 'वृशः' इति दृश्यमानोऽपि पाठभेद उपरि-निर्दिष्टेनैव हेतुना निरस्यते । अतो **नामानुक्रमण्याम्**—

वृशः शुद्धोऽवबोद्धव्यो न तु वृश इति ।।

## ९. क्रीस्ताः—कीस्ताः ।

'केनिपा मतुथाः क्रीस्ताः' (पृ० २८३ । प्रज्ञनामानीमानि । अत्र 'क्रीस्ताः' इत्यपपाठः प्रतीयते; ऋग्वेदे **निघण्टौ** निरुक्ते चाप्यनुपलब्धत्वात् । 'कीस्तासः' इति पदं तु **निघण्टौ** (३।१५।२०) मेधाविनामसु पठ्यते। ऋग्वेदे (१।१२७।७; ६।६७।१० ) चास्मिन्नेवार्थे **माधवेन** भाष्यते। अतोऽ**नुक्रमण्यां** 'क्रीस्ता' इत्यस्यस्थाने 'कीस्ताः' इत्येव समुचितः पाठो ज्ञेयः ।

## १०. व्रतः—व्रतम् ।

'ब्रह्म वीर्यं क्रतुर्व्रतः' (पृ० ३५४)। कर्म नामानीमानि । अत्र 'व्रतः' इत्यत्र पुंस्त्वं चिन्त्यम् । तथाहि—

१. **मैत्रायणी**वर्जं समस्ते संहितावाङ्मयेऽस्य शब्दस्य पुंसि प्रयोगो न श्रूयते । तत्रापि च 'व्रतः' इति न कर्मनाम, अपि तु कर्मवत एव नाम तद्वर्तते 'इषोऽसि, त्वेषोऽसि, नृम्णोऽसि, व्रतोऽसि०' ( मै० सं० ४।६।६ ) अत्र 'व्रतः' इति पदेन तद्वान् देवोऽभिप्रेतः । तस्मात् संहितासु पुंस्यनुपलब्धत्वान्नपुंसके

च शतशः समुपलब्धत्वादनुक्रमण्यां 'व्रतः' इत्यस्य स्थाने 'व्रतम्' इति पठितुं युक्तम् ।

२. **माधवेन** नपुंसके व्रतस्य कर्मेत्येवार्थः कृतः । ७।५।४, ७।६।२, ७।३१।११; ७।४७।३ इत्यादिषु मन्त्रेषु भाष्यं द्रष्टव्यम् ।

३. स्कन्दस्वामिना १।३१।१० भाष्ये " 'कृतं व्रतम्' इति कर्मणि" इत्युक्तानुक्रमण्येवोद्धृता । अत्र व्रतमित्येवोद्धृतं न तु व्रत इति ।

४. निघण्टावपि कर्मनामसु व्रतमित्येव समाम्नातम् । **निरुक्ते च यास्केन** 'व्रतमिति कर्मनाम' इति ब्रुवाणेन व्रतमित्येव नपुंसके सङ्गृहीतं न तु व्रत इति पुंसि । अतो व्रतस्त्वशुद्धं व्रतमेव शुद्धम् ।

**अनुक्रमण्यां** कर्मनामानि सप्तचत्वारिंशद्विद्यन्त इति निर्दिष्टम् । परिगणनया तु तानि त्रिचत्वारिंशदेव वर्तन्त इत्यनुध्यानीयम् ।

## ११. करणम्—करुणम् ।

'कर्वरं करणं वेपः शिल्पापत्ये क्रतुर्यकम' (पृ० २५६) । कर्मनामानीमानि । अत्र पङ्क्तौ भूयसी पाठभ्रष्टता वर्तते । तथाहि—

'करणम्' इति पठितुं नोचितम् । पूर्वत्र 'कूटः सुकृत्या करणम्' इत्यत्रास्यानुक्रान्तचरत्वात् । अत्रायं सन्देहः—कतरस्य 'करणम्' इति पदस्य स्थाने पदान्तरेण भाव्यम् । **निघण्टौ** (२।१) 'कर्वरम् । करुणम् । शक्म । क्रतुः । करणानि ।' इत्येवं पाठो लभ्यते । **देवराजेन** च 'कर्वरेण समानार्थम्' इत्युक्तम् । तस्मान्**माधवीये** ग्रन्थे **निघण्टुमनुसृत्य** 'कर्वरम्' इत्यतः पश्चात् कदाचित् 'करुणम्' इति भवेत् । **निघण्टौ** क्रतुसामीप्ये 'करणानि' इत्यस्य सत्त्वादनु**क्रमण्यां** (पृ० ३५६) 'करणम्' इति भवेत् ।

## १२. अपत्यम्—अवन्यम् ?

'शिल्पापत्ये' इत्यत्र इति 'अपत्ये' इति पदं सन्देहास्पदम् । **देवराजेन** 'शिल्पावन्ये' ( निघ० २ । १ । २० ) इति **समाधवनामग्राहमुदधृतम्** । 'अपत्यम्' इति च, 'अवन्यम्' इति चोभये अपि पदे वैदिकसाहित्येऽस्मिन्नर्थे न दृश्येते । अत उभयत्राप्यपपाठ एव प्रतीयते ।

## १३. क्रतुः—कृतुः

'**क्रतुः**' इति पदं पूर्वं ( पृ० ३५४ ) 'ब्रह्मवीर्य क्रतुर्व्रतः' इत्यत्रागतचरमिति पौनरुक्त्यं निष्प्रयोजनम् । **स्कन्दस्वामिना पूर्वपङ्क्तेः** ( पृ० ३५४ तः ) 'कृतं

व्रतम्' इत्युद्धृतम् । **देवराजेन** च ( निघ० २ । १ । ११ ) 'क्रियते क्रतु । 'शिल्पावन्ये क्रतुर्यकम्' इत्यत्र **माधवेनापि** कर्मनामसु पठितः इत्युक्तम् । एतेन सन्दिग्धमेतत् उभयत्र 'क्रतु' इति पदस्य स्थाने किं पदं वस्तुतः स्यादिति । देवराजस्योद्धरणं प्रसङ्गानुकूलमिति विश्वसनीयं प्रतीयते । तस्मादत्र ( पृ० ३५६ ) 'क्रतुर्यकम्' इत्यस्य स्थाने 'कृतुर्यकम्' इत्येव पठितुं साधु । पूर्वत्र च यथाधृतमेव ( क्रतुः ) श्रेयः **स्कन्दस्वामिग्रन्थे** च 'कृतं व्रतम्' इति पाठः प्रमादेनोद्धृतो वर्तते । **माधवेन** ( ७ । ३ । १०; ५ । ६ ) इत्यादिषु क्रतु-शब्दस्य कर्मेत्यर्थः कृतः तस्मात् कृतमिति प्रत्यक्षवृत्तेः शब्दस्य स्थाने क्रतुरिति परोक्षवृत्तेः शब्दस्यैवानुक्रमणं **माधवेनात्र** कृतं स्यादिति विभावयाम्यहम् ।

## १४. वलतम्—बळृतम् ।

'सत्यं श्रदित्था वलतमद्धा' ( पृ० ४०१ ) । सत्यनामानीमानि । अत्र 'वल' इति मुद्रा-राक्षसप्रसादः प्रतीयते, एवम्पठिते 'वलतम्' इत्यस्यार्थरहितवर्ण-समुच्चय-मात्रत्वात् । **निघण्टौ** सत्यनामसु बट्, ऋतम्, श्रद्धा इति यानि पदानि तानीवेमानि स्युरिति मे हार्दम् । अतोऽत्रापि 'बळृतमद्धा' इत्येव पठितु-मुचितम् ।

## १५. स्योना—स्योनम् ।

'स्वादुस्योनामषतराः' ( पृ० ४९३ ) । सुखनामानीमानि । अत्र 'स्योनाम-षतराः' इत्यपपाठः प्रतीयते । **निघण्टौ** सुखनामसु 'स्योनम्' ( निघ० ३।६।१५) इति समाम्नातम् । **स्कन्देन** ( भा० १ । २२ । १५ ) 'स्योनम्' इत्येव चोद्धृता **नामानुक्रमणी** । तस्मादत्रापि 'स्योनम्' इत्येव पठितुं युक्तम् ।

## १६. मषतराः—?

अस्यामेव पङ्क्तौ, 'मषतराः' इत्यनर्थकः पाठः । **ऋग्वेदे** 'मषतरा इति, 'अषतरा' इति, 'षतरा' इति वा न श्रूयते । एतत्स्थाने सम्भावितं 'शतरा' ( १० । १०६ । ५ **निघण्टौ** ३ । ६ । २ ) इति तु इतः पूर्वस्यां पङ्क्तौ समनुक्रान्तम् । तस्मादत्र पाठो निश्चेतुं न शक्यः ।

## १७. निद्यवः—दिद्यवः ।

'पीवरं निद्यवो वधः' ( पृ० ५७९ ) । आयुधनामानीमानि । अत्र 'निद्यवः' इत्यशुद्धं प्रतिभाति; वैदिकवाङ्मयेऽनुपलब्धत्वात् । उपलभ्यते च 'दिद्यवः' इति

पदमृग्वेदे त्रिषु स्थलेषु ( ७ । ८५ । २; १० । ३८ । १; १३४ । ५ ) व्याख्यातञ्च **माधवेन** 'आयुधानि' इति ।

**स्कन्दस्वामिना** च ऋ० १ । ३२ । ६ इत्यत्र पङ्क्तिरियमित्थमुद्धृता दृश्यते—'पीवरं दिद्यवो वधः' इति । अतोऽनुक्रमण्यां 'निद्यवः' इत्यस्य स्थाने 'दिद्यवः' इत्येव पाठः समीचीनः प्रतीयते ।

## १८. वज्रम्—वज्रः ।

'सृको वज्रं धनुस्त्यजः' ( पृ० ५८० ) । आयुधनामानीमानि । नामानीमानि **स्कन्दीय ऋग्भाष्ये** ( ऋ० भा० १ । ३२ । १२ ) इत्थंरूपेणोद्धृतानि दृश्यन्ते—'सृको वज्रं घनं त्यजः' इति ।

**अत्रैतन्निरूपणीयम्—**

१. यद्यपि लोके वज्रशब्दः पुंसि नपुंसके चापि वर्तते तथापि वैदिक वाङ्मये तु पुंस्येवास्य प्रयोगा दरीदृश्यन्ते ।

२. **निघण्टावपि** पदमिदं वज्रनामसु ( निघ० ३।२० ) 'वज्रः' इति पुंस्येव समाम्नातं विद्यते ।

३. **निरुक्तेऽपि** ( नि० ३।११ ) वज्रपदव्याख्याने पदमिदं पुंस्येव दृश्यते । अतोऽ**नुक्रमण्या**मुद्धरणे चापि 'वज्रम्' इत्यस्य स्थाने 'वज्र' इत्येव समीचीनः पाठः प्रतीयते ।

## १९. धनुः—घनम् ।

**अनुक्रमण्यां** 'धनुः' इत्यस्य स्थाने **स्कन्देन** 'घनम्' इत्युधृतम् । तेनात्रायं सन्देह उदेति—'धनुः' वात्र भवेत् 'घनम्' वेति ।

**ऋग्वेदे** घनशब्दोऽयोघनरूपायुधार्थे वज्ररूपायुधार्थे चानेकशः प्रयुक्तः । तद्यथा—'वधीर्हि दस्युं धनिनं घनेन' (ऋ० १।३३।४) इत्यत्र 'घनेन' निष्ठुरेण वज्रेण' इति स्कन्दो व्याख्यत् । 'घनेव वज्रिञ्छ्नथिह्यमित्रान्' ( ऋ० १।६३।५ ) इत्यत्र च **स्कन्देनायोघनार्थे** व्याख्यातम् । तस्मान्मन्मते तु स्कन्दधृतः पाठ एव समीचीनः । अनुक्रमण्यामपि च 'धनुः' इत्यस्य स्थाने 'घनम्' इत्येव पठितुं युक्तम् ।

अस्ति चात्रानुक्रमण्यामान्तरिकं साक्ष्यमपि प्रमाणम् । आयुधार्थेभ्यः पदेभ्योऽनन्तरं धनुर्वाचकेषु पदेषु 'धनुः' इति पदं पृथगेव वर्तते ( पृ० ८५ ) ।

तस्माद्धनुष्पदस्यायुधविशेषवाचितैवोचिता । घनपदस्य च हननसामान्यादायुध-सामान्यवाचिता ।

## २०. त्रिषु—तृषु ।

'क्षिप्रं मक्षु त्रिषु श्वात्रम् शीमज्राभुरण्यवः' ( पृ० ५९८ )। क्षिप्रनामानीमानि। अत्र 'त्रिषु' इत्यपपाठः प्रतीयते। तथा हि—अस्मिन्नर्थे 'त्रिषु' इति पदमृग्वेदे नैवोपलभ्यते। **निघण्टौ** चापि शब्दोऽयं 'तृषु' ( निघ० २।१५।१० ) इति रूपेण लभ्यते। स्कन्दस्वामी च भाष्ये स्वे ( ऋ० १।३१।४) 'क्षिप्रं मक्षु तृषु श्वात्रम्' इति क्षिप्रार्थत्वात्, इत्युदाजहार। **माधवो**ऽपि ( ऋ० १।५८।२ ) स्वके भाष्ये तृषु=क्षिप्रमित्येवाभ्यभाषत। तस्मा**न्नामानुक्रमण्याम**त्र 'त्रिषु' इत्यस्य स्थाने 'तृषु' पाठो वरो मतः ।

## २१. शी—शीभ··· ।

'शी—' इत्यस्य स्थाने चाहं 'शीभ···' इति शोधं प्रस्तौमि। तथा हि—**निघण्टौ** क्षिप्रनामसु 'शीभम्' ( निघ० २।१५।६ ) इति पठ्यते, ऋग्वेदे त्रिषु स्थलेषु चास्मिन्नेवार्थे दृश्यते ( ऋ० १।३७।१४; ३।३३।१२; १०।४४।२ )। आदौ शीकारयुक्तं पदान्तरञ्च नोपलभ्यत इत्येतदेवात्र स्थापयितुं युक्तम् ।

## २२. शूधनाः—शूघनाः ।

'तूतुजिः शूधनास्तूर्णिः' ( पृ० ५९९ )। क्षिप्रनामानीमानि। अत्र 'शूधनाः' इत्ययुक्तम्; अस्य शब्दस्यर्ग्वेदेऽनुपलम्भात्, **निघण्टौ** क्षिप्रार्थे 'शूघनासः' ( निघ० २।१०।८ ) इति पदस्य समाम्नातत्वात्, 'सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः' ( ऋ० ४।५८।७ ) इत्यत्रास्य पदस्यास्मिन्नेवार्थ उपलम्भाच्चा**नुक्रमण्यां** 'शूधनाः' इत्यस्य स्थाने '**शूघनाः**' इति पठितुं युक्तम्। धकारस्य स्थाने घकारो देय इत्यर्थः ।

## २३. जूर्णिती—जूर्णिनी ।

'वातरंहाश्च जूर्णिती' ( पृ० ६०१ )। क्षिप्रनामानीमानि। अत्राशुद्धिद्वयं प्रतीयते। प्रथमाशुद्धिस्तु कदाचित् सीसकाक्षरभङ्गेन सञ्जातेति प्रतीयते। अतः 'ज्' इत्यस्य स्थाने 'जू' इति पठितुं युक्तम्। द्वितीया च 'ती' इत्यस्य स्थाने 'नी' इति पठनेन शुद्ध्यति। तथा हि—'जूर्णिती' इति पदं न श्रूयते।

'जूर्णिनी' इति तु 'प्र रातिरेति जूर्णिनी घृताची' ( ऋ० ६।६३।४ ) इत्यत्र श्रूयते। तत्र च माधवेन—'प्रगच्छति हविषो दात्री क्षिपा जुहूः' इति भाषितम्। स्कन्देन च—"जूर्णिनी 'जूर्णिः' ( निघ० २।१५ ) इति क्षिप्रनाम। जूर्णिरेव जूर्णिनी, स्वार्थिकः। क्षिप्रा।" इति व्याख्यातम्। **सायणेन** च प्रगामिनीत्यर्थः प्रोक्तः। **निघण्टौ** क्षिप्रनामसु 'जूर्णिः' ( निघ०-२।१५।६ ) इति पदं लभ्यते। तस्मादत्र स्त्रियां **'जूर्णिनी'** इति पठितुं युक्तम्, न तु 'जूर्णिती' इति।

## २४. तूतुजानाः—तूतुजानः।

'दविध्वतं तूतुजानास्तरणि द्रुगदेव च' ( पृ० ६०२ )। क्षिप्रनामानीमानि। अत्र 'तूतुजानाः' इति बहुवचनं निष्प्रयोजनम्। **निघण्टौ** 'तूतुजानः ( २।१५।१६ ) इत्येकवचन एव दृश्यते। 'इन्द्रायाहि तूतुजानः' ( ऋ० १।३।६ ) इत्यत्र 'त्वरमाणः' इति **माधवः**। 'क्षिप्रनामैतत्। क्षिप्रं त्वरमाण इत्यर्थः' इति स्कन्दः। अतो ह्यत्र 'तूतुजानाः' इत्यस्य स्थाने **'तूतुजानः'** इत्येव शोभनः पाठः प्रतिभाति।

## २५. तरणि—तरणिः।

अत्र 'तरणिद्युगत्' ( पृ० ६०२ ) इति पाठात् प्रतीयते 'तरणि' इति नपुंसकमिति। परं क्षिप्रार्थमेतत् **पदमृग्वेदे** सर्वत्र पुंस्येव श्रूयते। 'अर्थं ह्यस्य तरणिः' ( ऋ० ३। ११। ३ ) इत्यत्र तरणिपदस्यार्थो **माधवेन**.........इति कृतः। **सायणेन** च **'तारकम्'** इति। तस्मान्नपुंसकलिङ्गस्तरणिशब्दो न क्षिप्रार्थः। **निघण्टावपि** 'तरणिः' ( निघ० २। १५। २५ ) इति विसर्गान्तः पुंल्लिङ्गकः शब्द एव समाम्नातः। **स्कन्दस्वामिना** च 'तरणिर्विश्वदर्शतो' ( ऋ० १।५०।४ ) इत्यत्र 'तरणिरिति क्षिप्रनाम' इति पुंल्लिङ्ग एव शब्दोऽयमुद्धृतः। तस्मादत्र 'तरणिर्द्युगत्' इति पठितुं युक्तम्।

**अनुक्रमण्यां** क्षिप्रवाचकानां पदानां सङ्ख्या ( पृ० ६०४ ) बृहती भुरिक् ( सप्तत्रिंशदित्यर्थः ) परिगणितास्ति। वस्तुतस्त्वत्र समाम्नातपदसङ्ख्या द्वात्रिंशदेव वर्तते। श्लोकार्धमेवेतः कुतश्चिद्विगलितमिति प्रतिभाति।

## २६. वृद्धः—ब्रध्नः।

'यह्वोऽमात्रोऽद्भुतो बृद्धः' ( पृ० ६११ ) महन्नामानीमानि। अत्र 'वृद्धं' इति पाठो नोचितः **स्कन्दस्वामिना** ( ऋ० १। ६। १; १८। ६ ) इत्यत्राद्भुत-

पदव्याख्याने 'ब्रध्नः' इत्येवोद्धृतन्—'यह्वोऽमात्रोऽद्भुतो व्रध्नः' इति । निघण्टा-वापि महन्नामसु 'ब्रध्नः' ( निघ० ३ । ३ । २ ) इति पदंलभ्यते । तस्मादनु-क्रमण्यामपि 'वृद्धः' इत्यस्य स्थाने 'ब्रध्नः' इत्येव पठितुं युक्तम् ।

## २७. अक्षिप्तः—उक्षितः ।

'गम्भीरमहिषोऽक्षितः' ( प० ६१२ ) । महन्नामानीमानि । अत्र 'महिषोऽक्षितः' इत्यपपाठः । अत्रावग्रहेण 'अक्षिताः' इत्यन्तिमं पदं प्रतीयते । त्रयाणां पदानां द्वन्द्वे 'गम्भीरमहिषाक्षिताः' इति पाठः स्यात् । गम्भीरमहिषयोर्द्वन्द्वे च गम्भीरमहिषावित्यौकारान्तत्वादावसन्धौ छन्दोभङ्गोऽत्रस्यात् । 'अक्षिता' इति बहुवचनञ्च नोपपद्येत । तस्मादपपाठ एषः । अत्रायं कश्चिद्विचारः । निघण्टौ महन्नामसु 'महिषः' ( ३।३।८ ) इति, 'उक्षितः' ( ३।३।५ ) इति चोपलभ्येते । अतोऽनुक्रमण्यामप्यत्र 'गम्भीरमहिषोक्षिताः' इत्येव पाठो युक्तः। गम्भीरश्च महिषश्चोक्षितश्चेत्यर्थः ।

## २८. समुद्रम्—समुद्रः ।

'नाकः समुद्रं कृन्तत्रं व्योमधन्वाम्बरं च···' ( प० ६३३ ) । अन्तरिक्षनामानीमानि । अत्र द्वयं वक्तव्यम् । अत्र 'समुद्रम्' इति नपुंसकस्य स्थाने 'समुद्रः' इति पुंसि पठितव्यम् । तथा हि—'शं समुद्रः' ( ऋ० ७।३५।१३ ) इत्यत्र पुंल्लिङ्गस्य व्याख्यानं 'शमन्तरिक्षम् इति माधवश्चकार । स्कन्दस्वामिना च ऋ० १।३०।१८; ३२।२ इति ऋचो भाष्ये 'नाकः समुद्रः' इत्येवोधृतम् । निघण्टौ 'समुद्रः' ( ३।१।१५ ) इत्येव समाम्नातम् । तस्मादनुक्रमण्यामपि 'समुद्रम् इत्यस्य स्थाने 'समुद्रः' इत्येव पठितुं युक्तम् ।

## २९. च—च भूः ।

'व्योमधन्वाम्बरं च—' ( प० ६३३ ) । अन्तरिक्षनामानीमानि । अत्रैतेषां पदानामसमस्तत्वात् 'व्योम' इति पदं 'धन्व' इति पदात् पृथगेव स्यात् । इति प्रथमः शोधः ।

अत्र 'च' इत्यस्मादनन्तरमेकमक्षरं विगलितं वर्तते । तत्र 'भूः' इति पदं पठितुमुचितम् । इदं पदं निघण्टावन्तरिक्षनामसु ( निघ० १।३।१० ) पठ्यते । समानार्थकत्वादेकाक्षरत्वादवेक्षितत्वाच्च कदाचिदिदमेव पदं माधवस्याप्यत्राभीष्टं भवेत् ।

## ३०. वर्पः—वर्चः।

'रूपं वर्पो मतिः पेशः' ( पृ० ६५८ )। रूपनामानि अस्मिन् श्लोकांशे—रूपम्, वर्पः, मतिः, पेशः इति चत्वारि पदान्यनुक्रान्तानि। तत्र 'मतिः' इति पदमशुद्धम्; अस्मिन्नर्थेऽस्यानुपलभ्यात्। अयं श्लोकांशः स्कन्दस्वामिभाष्ये ( ऋ० १।१३।७ ) अपि भ्रष्टतररूपेणोद्धृतो दृश्यते। तथा हि—'सुतेशसा' इति पदव्याख्याने—'सुरूपे। रूपं वर्चो मतिः इति।' अत्र नामानुक्रमण्यां 'वर्पो' इत्यस्य स्थाने 'पार्चो' इति अशुद्धमुद्धृतम्। 'मतिः' इति च यथामुद्रितमेव।

## ३१. मतिः—अमतिः।

अत्र 'मतिः' इत्यस्य स्थाने 'अमतिः' पाठ उचितो विभाव्यते, यतोहि—निघण्टौ रूपनामसु 'अमतिः' ( निघ० ३।७।५ ) इतिपदं दृश्यते। माधवेन च ऋ० भा० ७।३।१; २; ४५।३ इत्यत्र 'अमतिः' इति पदस्य व्याख्यानं रूपपदेन कृतम्।

## ३२. धादस्सु—?

'अर्क प्रतीपं धादस्सु रूपे द्वादश कीर्तिताः' ( पृ० ६६० )। रूपनामानीमानी। अत्र 'धादस्सु' इति पाठोऽयं सन्दिग्धः प्रतिभाति मे। इदमेकमेव पदं वर्ततेऽथवा पदद्वयमित्येव न तावत् स्पष्टं प्रतीयते। 'धादस्सु' इत्येवंरूपं न किमपि पदमुपलभ्यते वैदिकवाङ्मये। पाठोऽयमात्मनि विद्यमानं पदद्वयमपि नैव विवृणोति। अतो नात्र कोऽपि निर्णयो विधातुं पार्यते।

अनुक्रमण्यां रूपवाचकानां पदानां सङ्ख्या द्वादश परिगणितास्ति। तत्र 'अर्क प्रतीपं धादस्सु' ( पृ० ६६० ) इति पाठो दृश्यते। अत्र दृष्टं 'धादस्सु' इति यद्येकं पदं मन्येत तदा समाम्नातपदसङ्ख्यैकादशैव भवति। अत्र पदद्वये सत्येव द्वादश सङ्ख्या जायत इति विचारयतु प्रतिभायुतः।

इत्थमुञ्छवृत्त्यापपाठकणेषु शीलितेषु यन्मयात्र लब्धं तद्विदुषां विचारायोपरिष्टादुपवर्णितम्। माधवीयाः सर्वा अप्यनुक्रमण्यो वेदाध्येतॄणां कृते धात्रीवन्नितान्तमासेवनीयाः। यथा धात्र्या दुग्धशुद्धिरपेक्ष्यते तथैवासां पाठशुद्धिरपि नितरामपेक्ष्यते। तया विनेमा विदुषामुपकारस्थानेऽपकारमेव विदध्युः। मयायमल्पकः प्रयत्नोऽस्यां दिशि समाश्रितः। विद्वत्तल्लजाश्चात्र भूयसा परिश्रम्यानुक्रमणीरिमास्तथा प्रसाधयेयुर्यथा शुद्ध एवासां पाठो विद्वज्जनानामुपयोगाय प्रस्तूयेत।

अत्र मया संहृत्येमानि द्वात्रिंशत् पदानि शोधितानि । तेषां शुद्धाशुद्धे रूपे अशुद्धपदानामक्षरानुक्रमेण दीयन्ते—

| अशुद्धम्— | शुद्धम् | सङ्ख्या | अशुद्धम्— | शुद्धम् | सङ्ख्या |
|---|---|---|---|---|---|
| अक्षितः— | उक्षितः | २७ | पयः— | वयः | ६ |
| अपत्यम्— | अवन्यम् (?) | १२ | प्रापित्वे— | प्रपित्वे | २ |
| करणम्— | करुणम् | ११ | मतिः— | अमतिः | ३१ |
| कूचश्च— | कूचक्रः | ३ | मषतराः— | ? | १६ |
| क्रतुः— | कृतुः | १३ | वज्रम्— | वज्रः | १८ |
| क्रोस्ताः— | कीस्ताः | ९ | वलतम्— | बलृतम् | १४ |
| च···— | च भूः | २९ | वर्पः— | वर्चः | ३० |
| ज्म— | अज्म | १ | वृद्धः— | ब्रध्नः | २६ |
| ज्णिती— | जूर्णिनी | २३ | वृशः— | व्रिशः | ८ |
| तरणि— | तरणिः | २५ | व्रतः— | व्रतम् | १० |
| तूतुजानाः— | तूतुजानः | २४ | व्राधता— | ? | ४ |
| त्रिषु— | तृषु | २० | शी···— | शीभ··· | २१ |
| द्युम्नः— | द्युम्नम् | ५ | शूधनाः— | शूघनाः | २२ |
| घनुः— | घनम् | १९ | समुद्रम्— | समुद्रः | २८ |
| धादस्सु— | ? | ३२ | ससः— | ससम् | ७ |
| निद्यवः— | दिद्यवः | १७ | स्योना— | स्योनम् | १५ |

अस्मिन्निबन्धे समुल्लिखितानां ग्रन्थानां संस्करणानि निम्नप्रकारेण सन्ति—

1. The Rgvedanukramani of Madhavabhatta, Ed. C. Kunhan Raja, University of Madras, Madras, 1932.

२. निरुक्तम्, सम्पा० लक्ष्मणस्वरूप एम्० ए० पञ्चनदीयविश्वविद्यालयः, लाहौरम् ।

३. माधवीयमृग्वेदभाष्यम्, होशियारपुरसंस्करणम् ।

4. The Rgvedabhasya of Skandasvamin, Ed. C. Kunhan Uuiversity of Madras, Madras. 1935.

●

# ज्ञानदेवस्य शब्दार्थविचारः

डॉ० दा०ल० अडोणी

अपूर्ववस्तुनिर्माणकौशलेनासाधारणयोग्यतया च श्रीज्ञानदेवेन[1] व्याख्याता 'ज्ञानेश्वरी' 'भावार्थदीपिका' चेति पर्यायनामभ्यां प्रख्याता 'ज्ञानदेवी' महाराष्ट्र-सरस्वतीकण्ठाभरणं खलु। अध्यात्मविद्यायाः काव्यस्य च धारयोरत्र सुन्दरः सङ्गमः। विविधवृत्तयः सुमेधसः एतस्यां त्रिवेण्यामनिशमवगाहन्ते पूजयन्ते च विविधैर्विधानैर्यथारुचि ज्ञानदेवस्य वाङ्मयीमिमां मूर्त्तिम्।

अहं पुनः अस्मिन्निबन्धे ज्ञानदेवीगतानां शब्दार्थसम्बधिनां विचाराणामनु-शीलनं कर्तुकामः। विषयानुरोधेन तेषामन्यग्रन्थे-'अमृतानुभवे'-या स्वप्रतीता वाचः प्रस्फुटितास्तासां मार्गदर्शनमत्रोपोद्बलकं भवेत्। अनयोर्ग्रन्थयोः "वाक् ('बोल' इति भाषायाम्) शब्दः, पदम्, अर्थः, अभिप्रायः" इत्यादयो वागर्थबोधकाः शब्दास्तत्सम्बधिन्य उक्तयश्च विशेषतोऽवधेयाः। एषा ज्ञानेश्वरी श्रीमद्भगवद्-गीताया मराठीभाषात्मिका टीका। श्रीकृष्णार्जुनसंवादो गीताया बाह्यरूपं नाम। तत्र धृतराष्ट्र-सञ्जयौ प्रस्ताव-भरत-वाक्यप्रतिपादनार्थमेव प्रकटीभूतौ। ज्ञानदेव्यां तु त्रिविधः संवादो वर्तते। ज्ञानेश्वरीमध्ये चत्वारोऽपि (पुराण-) पुरुषाः स्वमनोगतानि सविस्तरं स्फोटयन्ति। गीतायां निर्दिष्टम् 'उवाच' इति पदमेकं विहाय (धृतराष्ट्रसञ्जययोः श्रीकृष्णार्जुनयोश्च) चतुर्णां संवादानां स्वरूपं समरसतयाऽधिकारसम्पन्नया वाण्या च विशदीकृतं ज्ञानेश्वरेण। अपरं च भाषायां टीकारूपेण कथिते प्रस्तुतग्रन्थे श्रीज्ञानेशेन श्रोतृभिः सह कृतः सुखसंवादो नित-रामात्मीयत्वेन सहजभावेन च वर्णितः। अतः 'ज्ञानेश्वरीरूपनगरे संवादानां दीपावलिशोभा' राजते। तत्र जिज्ञासोः श्रोतुः प्रगल्भमतेर्वक्तुश्च परस्परपोषकः समन्वयोऽभवत्। एतस्मात्कारणात् वाग्व्यवहारस्य निदर्शनं सहजमुद्भूतम्। प्रसङ्गानुसारं तस्मिन् वैविध्यमपि प्रतीयते।

मुख्यविषयस्य प्रतिपादनप्रवाहे शब्दार्थसम्बधिनो विचारा अनायासेन प्रक-टीभूता भावार्थदीपिकायाम्। एतत्तु स्पष्टमेव यद्गीतातत्त्वनिरूपणं न तु शब्दार्थ-विवरणं ज्ञानदेवस्योद्दिष्टम्। तत्रापि "येषां स्वैरालापाः शास्त्राणि भवन्ति"

---

१. 'ज्ञानेश्वर' इति अपरनाम्ना विख्यातेन।

एतावती ज्ञानदेवस्यार्हता वर्तत इति निःसंशयम्। विषयस्या सम्पूर्णो विचारो यास्ककृते निरुक्ते, पतञ्जलिप्रणीते महाभाष्ये, भर्तृहरिविरचिते वाक्यपदीये ( ग्रंशतः 'लक्षणरत्नाकरे' नाम त्रयोदशे खिस्तशतके लिखिते 'महानुभाव'-पन्थीये ग्रन्थे ) च विशदीभूतः। एतेषां शब्दमीमांसकानां शास्त्रविचारे तथा ज्ञानेश्वरीगतायां 'शब्दश्रियां[1]' कियती एकात्मता वा एकवाक्यता वा प्रतीयते एतत् खल्वलोकनीयम्।

'अत्रत्यायाः शब्दश्रियः शास्त्रीये[2]' अन्वेषणे ज्ञानदेवो नूनमाध्यात्मिकः कविः, स शब्दसारतत्त्वज्ञोऽपि आसीन्नतु शब्दार्थमीमांसक इति न विस्मरणीयं कदापि। प्रगल्भा प्रतिष्ठितासुसंस्कृता च गीर्वाणवाणी। तत्रापि तस्याश्रयं विस्ज्याबालसुबोधाया मराठीवाचो मधुरं पुष्टिकरं पयः प्राकृतैः स्वीकार्यमिति श्रोतृप्रार्थना कविना प्रसङ्गानुरोधेन वारं वारं कृता। तस्मिन्नवसरे ज्ञानदेवेन वाचो या सार्थकता निरूपिता सा एव वर्ततऽस्यावलोकनस्याधारभूमिका।

किन्तु—"न कदापि भाषते ज्ञानेश्वरः प्रतिमानस्याधारेण विना। तच्चेतसि सञ्जातः कोऽपि विचार उपमाया रूपकस्य वाऽवगुण्ठनमेव गृहीत्वा प्रकटीभवति। तद्विवेचने तौ साधर्म्यारोपौ एकात्मीभूतौ इव प्रतीयेते।" डॉ० वालिंबेमहोदयैर्यदेतदुक्तं[3] तद्यथार्थमेव। अन्यच्च, ज्ञानदेवी नाम महावस्त्रमध्यात्मविद्यायाः काव्यात्मकतायाश्च समलम्बैर्वा दक्षिणैस्तन्तुभिः सुग्रथितं विराजते। एवंगुणविशिष्टावगुण्ठनात् प्रस्तुतः शब्दार्थविचारः कियन्मात्रं दृग्गोचरो भवतीति द्रष्टुकामोऽस्मि।

'अतो मदीया नवनूतनास्ते।
श्वासाः प्रबन्धाः सततं भवन्तु॥' १८·१७१३

एतज्ज्ञानेशपादानां वचनस्याधारेण तेषामुच्छ्वासानां निबन्धमुद्बोधकं भवेदिति मे मतिः।

---

१. मूलवचनस्य ग्रहणाय राजवाडेसम्पादिता ज्ञानेश्वरी समाश्रिता अध्यायओवी क्रमेणाधारस्थलं निर्दिष्टम्। "महाराष्ट्रयोषिद्भिः 'ओवी' गेयातु कण्डने" ( या प्रसङ्गान्ततरैश्च गीयते ) इति चरणे ख्याते छन्दसि ज्ञानदेवेन टीका संचरिताऽसीत्।

२. ज्ञा० १.३४

३. डॉ० वालिंबे-ज्ञा० तील विदग्ध रसवृत्ति, पृ० ४०३–४०४

मनुष्यो नाम सामाजिको जीवः कस्यापि चिह्नस्य सङ्केतस्य वा साहाय्येन जना भावान् परस्परं प्रकटयन्ति । यदा तानि चिह्नानि विशिष्टार्थोपबृंहितानि भवन्ति तदा तानि प्रतीकपदवीं प्राप्नुवन्ति । एतेषां प्रतीकानां समुच्चयो नाम भाषा । प्रतीकः सङ्केत-समया-श्रयेणार्थवान् भवति । प्रतीकानां भेदाद्विविधा भाषाः प्रभवन्ति । सर्वासु भाषासु ध्वनिमया भाषा महनीया यतसा विविधभावाभिव्यक्तिक्षमा तस्माच्च बहुकार्यसाधिका । लिपिबद्धा भाषा तस्या अपरंस्थिरं च रूपम् । शब्दशक्तिप्रकटनाय केचित्साभिनयं भाषन्ते । मनोविकारान् विचारान् वा प्रकटीकुर्वन्तो जना यदा कदाङ्गविक्षेपं मुद्राभिनयं वा नियोजयन्ते । क्वचित्ते सहसैव प्रादुर्भवन्ति । एतानि शब्देतरसाधनानि परिमितार्थबोधकानि सन्ति ।

सङ्केतः—सङ्केताधारेणैव शब्दोऽर्थवान् भवति । 'ईश्वरसङ्केतः शक्तिः'—ईश्वरेच्छानुवर्ती सङ्केतः—इति प्राचीनानां मतं न सर्वमान्यम् । भाषा खलु लोकैः सृज्यते । सा समाजोपजीविनी संस्था व्यवस्था वा । मानवसमूहेन वस्तुनो नामकरणं स्वेच्छया सम्मत्या च कृतं स्वीकृतं चैष विचारो युक्तियुक्तमेव । 'अस्माच्छब्दादयमर्थो बोद्धव्य'[1] इति सम्बन्धदर्शिनी योजना नाम सङ्केतः समयो वा । स खलु पदपदार्थयोरमूर्ता संयोगश्रृंखला । "अस्य शब्दस्येदमर्थजातमभिधेयमित्यभिधानाभिधेयनियमनियोगः[2] इत्येषा सङ्केतकल्पना वात्सायनेन सुष्ठु स्पष्टीकृता । तस्य आङ्ग्लपर्यायः convention इति ।

यदि 'सङ्केत'—मार्गेण गम्येत तर्हि ज्ञानेशस्यार्थविचाराणामनुसरणं सुगमं भवेत् । वाक्यपदीयकाराणां मतानुसारं शब्दतत्त्वमेव ब्रह्म । तद्यथा—

अनादि-निधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ( १-१ ) ॥

ज्ञानेशेनापि ब्रह्मतत्त्वमधिकृत्य 'सङ्केत' पदस्य योजना कृता । तथा हि

'तत्परब्रह्म नामरहितमजातं च । किन्तु संसारपीडितैर्जनैराहूतं ब्रह्म येन शब्देनाभिधत्ते स एष सङ्केतः' । १७.३२८

तथा—

**निर्विशेषं परब्रह्म निर्मलं तद्धि वर्तते ।**
**अन्तर्गूढव्यञ्जकं तु नाम तस्यैव राजते ॥ १७.३६९**

---

१. अन्नंभट्टस्य, तर्कसंग्रहः कारिका ५९; २. न्यायसूत्र-२.१.५५

अन्यच्च—

आकाशस्य यथाधार आकाशो हि प्रतीयते।
अभेदोऽस्ति तथा नूनमभिधानाभिधेययोः ।। १७.४००

अत्र पदपदार्थयोर्वस्तुसदेकत्वं, बाह्यमध्यासगतमेकत्वं च दृष्टान्तेन दर्शितं तथैव तयोर्मध्ये स्थित आधेयाधारसम्बन्धश्चात्र व्यञ्जितः। एष सम्बन्धोऽन्यत्र प्रकारान्तरेण द्योतितः। तद्यथा—

संस्कृता वाक् तथा देशी भावस्यैकासने स्थिते।
प्रशस्ते किल शोभेते शृण्वर्थं सुप्रतिष्ठितम् ।। १०.४४

भावप्रवणा जायते—भाषा। तदभावाच्छब्दरूप आधेयः कथं स्थिरीभवति।

**शब्दः प्रतीकः**—बोधनकार्याद्विना शब्दस्य न कोऽपि विद्यते सम्बन्धः पदार्थेन सह। शब्दो नाम शब्दान्तर्गतभावस्य कल्पनायाः वा प्रतीको न तु वस्तुनः। यत् किमपि वचनीयं वर्णनीयं वा भवति तद्—वाच्यं बोध्यं च—वस्तुत्वमाप्नोति। तस्य प्रत्यक्षाप्रत्यक्षमस्तित्वं नापेक्षितम्। तस्य भावगम्यत्वमेवालम्। अतः शब्दातीतमरूपमगोचरं वस्तु वाग्विषयं करोमीति प्रतिपादितं ज्ञानेश्वरेण। तद्यथा—

यद्वागतिक्रान्तं तदपि वक्तुमशक्तम्। ५.६४
यत् शब्दातीतं तद्यदि वाचा समापन्नं भवेत्। ५.६७
यदरूपं तस्यैव रूपं दर्शयेयम्। ६.३६
यदगोचरं तत्कथाविषयीभूतम्। १५.१६
अमूर्तोऽतीन्द्रियोऽपि विषयः सङ्केतबलेनैव शब्दरूपं लभते।

**नामकरणम्**—बहुषु वस्तुषु विशिष्टैकस्य ज्ञापनाय तद्बोधकं नाम प्रवर्तते। यथा—

**नवजातस्य बालस्य नाभिधानं तु विद्यते।**
**स नाम्ना सम्प्रदत्तेन समाहूतोऽभिभाषते ।। १७.३२*+**

दृष्टान्तादस्मान्नामकरणस्याधारभूतः सङ्केतो लौकिक इति। कवेर्धारणाऽनुमीयते।

---

* महाराष्ट्रशासनप्रणीते तथा दांडेकरादिभिः सम्पादिते संस्करणे द्रष्टव्यमेतन्मूलम्।

**वर्णः**—"भाषायां स्वरा विसर्गो व्यञ्जनानि च समाविशन्ति। न कोऽपि मन्त्रः वाक्प्रयोगः द्वापञ्चाशद्वर्णेभ्यो वहिर्विद्यते[१]" इति ज्ञानेशेन प्रोक्तम्।

द्वापञ्चाशद्वर्णेषु ज्ञानदेवेन 'अग्निमीले' इत्यादि वैदिकपदेषु प्रतिष्ठितो मराठीभाषायां च रूढः ( किन्तु पाणिनिप्रणीते संस्कृते तथैव हिन्दीभाषायामप्रचलितः ) 'ल' वर्णः समाविष्ट इति स्पष्टम्। ॐकार आदिवर्ण इति कविना सादरमभिहितम्[३]।

**पदं-वाक्यम्**—'अक्षराणाम् ( अर्थबोधकं ) मेलनम् इति पदस्य पर्यायेण वर्णनं कृतं ज्ञानदेवेन[४]। 'वाक्यं ह्युच्यते पुञ्जोक्षराणाम्' एषा[५] तत्कृता व्याख्या 'वाक्यं पदोच्चयः' अनया विश्वनाथकृतव्याख्यया संवदति।

**अर्थो नित्यः**—शब्दो नित्योऽनित्यो वाऽस्य प्रश्नस्य विमर्शः पतञ्जलिना महाभाष्यस्य ( प्रथमे ) पस्पशाह्निके ऊहापोहरूपेण कृत्वा शब्दः स्फोटरूपेण नित्यो ध्वनिरूपेण त्वनित्य इति निष्कर्षो निष्पादितः। ज्ञानदेव्यां—

**पट्टिकालिखिता वर्णा लुप्यन्ते करघर्षणे।**
**लुप्तेष्वपि हि वर्णेषु अर्थ एवावशिष्यते॥ ८.१७४**

अनेन परिचितोदाहरणेनार्थस्य नित्यत्वं सुष्ठु प्रदर्शितम्। यद्यप्युच्चरितो ध्वनिराकाशे विलीयते लिखितः शब्दः परोक्षो भवति वा तथाप्यर्थबोधो न लुप्यते।

**नित्यसम्बन्धः**—शब्दार्थयोः सम्बन्धोऽपि नित्यः—

**शब्दजाते परावृत्ते सङ्कल्पो हि विनश्यति।**
**विचारस्य तथा वातः प्राप्नोति न प्रवेशनम्॥ ६.१३९**

यदा शब्दाः परावर्तन्ते तदा सङ्कल्पविचारा नावशिष्यन्ते। अस्माद् व्यतिरेकात्मकविधानात् सङ्कल्पविचाराणामाविष्कारः शब्दद्वारैव भवति तथा वाण्येव तेषां बोधयित्री। शब्दार्थयोर्नित्यसम्बन्धोऽत्र प्रकटीभवति।

**शब्दस्य कार्यं द्विविधं**—भावनात्मकं बोधस्वरूपं च। यदा पाठको 'मधुरकोमलकान्तपदावलिं' शृणोति पठति वा तदा तस्या गुणविशेषाः श्रवणादीन्द्रियाणि प्रभावयन्ति विविधाः संवेदनाश्च जनयन्ति। शब्दस्य ध्वनिगुणस्यैषः परिणामः यथोक्तम्—

---

१ ज्ञा. १३.११७; २ ज्ञा. १७.२७१; ३ ज्ञा. १७.३३६; ४ ज्ञा. ७.१६४; ५ ज्ञा. १३.१५२

श्रोत्रेण श्रवणात् पूर्वं दृष्टिः कार्याचिन्ता भवेत् ॥ ७.२०१
ग्रहणात्प्राक् पदार्थस्य स्वदनं बुद्धिजिह्वया ।
इन्द्रियाणि जयत्येषाऽक्षराणां सुषमा परा ॥ ७.२०२

संवादप्रसङ्गे यदि श्रोता सावधानमनसा शृणोति तर्हि वक्तृमुखनिर्गत-शब्दश्रवणात्प्राक् तस्य मुखचर्यया हावाङ्गविक्षेपैश्च कियानपि वक्तुरभिप्रायस्ते-नावगम्यते । "अन्तरेण खल्वपि शब्दप्रयोगं बहवोऽर्था गम्यन्ते अक्षिनिकोचैः पाणिविहारैश्च" एतन्महाभाष्यवचनं (२.१.१) सर्वेषामनुभवविषयः । तस्योपरि ज्ञानेशपादाः प्रतिपादयन्ति—

'आदौ स्नेहः स्रवति । (तद्बोधकानि) अक्षराणि पश्चान्निस्रवन्ति'[1] । यदा सहृदयः श्रोता वक्तुरनुक्तं हृद्गतमित्थमनुभवति तदा तयोः खलु हृदयसंवादो जातोऽस्तीत्यनुमेयम् । 'गुरोस्तु मौनं व्याख्यानम् ।' ईदृश्येवैषानुभूतिःभावनात्मक-मिदं कार्यम् ।

**बौद्धं कार्यम्**—अर्थबोधनं नाम बुद्धिगतं कार्यमनन्तरं फलति । शब्दान्त-रङ्गस्य-तदाशयस्य-आकलनक्रिया न तथा सरला सुगमा वा यथा पूर्वोक्ता भावनाप्रतीतिः । अक्षरसमुच्चयानां पदानां वाक्यानां च-अर्थबोधनं मुख्यं प्रयोजनम् । कविनोक्तम्-अक्षरान्तर्गतं भावं नेष्यामि वः प्रतीतये । २४-४११

आत्मगतभावस्य प्रकटीकरणार्थं निजविचारोऽन्यैर्ज्ञातव्य इति हेतुना वक्ता शब्दान्युनक्ति । "अर्थगत्यर्थः शब्दप्रयोगः । अर्थं सम्प्रत्याययिष्यामीति शब्दः प्रयुज्यते ।" इति पतञ्जलिना महाभाष्ये ( १-१-४३ ) तथा "अर्थपरिज्ञान-फला हि वाक् । सम्यक् ज्ञानं प्रकाशनमर्थस्य ।" इति नागेशेनोद्योते प्रतिपादित-मासीत् । शब्दार्थयोर्मध्ये वाच्यवाचकभावो वा प्रकाश्यप्रकाशकसम्बन्धो वा वर्त्तते । अतः 'शब्दरूपदीपो'ऽर्थप्रकटनाय सज्जोऽस्ति । उक्तं च अक्षराविष्कृतं ब्रह्म आयात्यालिङ्गनायते । १०–६१

परब्रह्मणोऽक्षररूपं न तु केवलं श्रुतिगम्यं दृष्टिगम्यं वा । तत्तु बुद्धिविषयः । वाक्संसारे यद्यर्थब्रह्म न लभ्यते तर्हि महान् विक्षेपो भवति । ऊषरो गम्यते स शब्दविस्तरो यत्र न प्रतिलभ्यते किमप्यर्थफलम् । क्वात्र लाभः केवलैः शब्दैर्य-थोक्तं हॅम्लेटेन—Words, Words, Words.[2]

१ ज्ञा. १३.१६२१. ज्ञा ६-३१४; 2. Hamlet, II. ii. 190.

बोधे बाधा—अज्ञानमनवधानमन्यव्यवधानं चार्थस्यानुपलब्धेः प्रमुखाणि कारणानि सन्ति। 'भावार्थदीपिकाया' प्रकाशे तेषां निराकरणस्य ये मार्गाः प्रकटीभवन्ति ते अवलोकनीयाः। 'अवधानं देहि, अतोऽवधानमेकं दातव्यं, वक्तृत्वस्य तुष्टिपुष्टिकारकान्नमवधान'मित्यादिवचनैः[1] ज्ञानेश्वरेण श्रोतारो भूयोभूयः सम्प्रार्थिताः यद्यपि प्रस्तुत-प्रकरण-बोधार्थमनेन प्रकारेण कविनाऽभ्यर्थनं कृतं तत्रापि तच्छब्दबोधार्थमुपलक्षणेन ग्राह्यं भवति। तथा च—

स्थाने यथोक्ते मनसोऽवधानम्
दत्त्वा धनं पूगफलं च पत्रम्।
गर्भालयं ह्यर्थप्रबोधनस्य
विशन्ति ते ये खलु दक्षचित्ताः ॥ १८-४९

शब्दस्य बाह्यरूपात्तस्यान्तरङ्गं यदा सावधानतया बुद्धिः प्रविशति तदाऽर्थबोधो भवति। 'प्रज्ञया फलितोऽर्थः' इत्येव प्रकारेण लभ्यते। सा प्रज्ञा-वासना-जन्मतः प्राप्ता मानसिकी शक्तिः। किन्तु संस्कारेण विना सा क्रियापरा न भवति। अज्ञानपरिहाराय स्वाध्यायश्रवणावलोकनादयो बहव उपायाः सन्ति। तेषां विद्यमानानामपि जिज्ञासुर्यदाकदाऽर्थबोधे काठिन्यमनुभवति शब्दस्य गूढार्थत्वात्। बह्वर्थकोऽमूर्तबोधकः तत्त्वज्ञापको वा शब्दो बहुधा दुर्बोधो भाव्यते। रातत्परिहारार्थम्—

**अर्थबोधकानि—**

शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद्व्यवहारतश्च।
वाक्यस्य शेषाद्विवृत्तेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥

नागेशभट्टप्रभृतिभिरुद्धृतायामेतस्यां प्रथितायां कारिकायामर्थबोधस्य यानि साधनानि निर्दिष्टानि तेषामुल्लेखः ज्ञानेश्वरेणापि यत्र तत्र प्रसङ्गानुरोधेन कृतः। तेषां निर्देशो विस्तरभयात् संक्षेपेण करोमि—

(अ) 'व्याकरणे सुदक्षः' १३–८३९।

(आ) उपमान—'ग्रन्थार्थनिरूपणे उपमादिकानां प्राचुर्येण प्रतिपदं विशदं करोमि।' १३-११५८

एषा प्रतिज्ञा कविना सुष्ठुव्यवहृता। ज्ञानदेवरचितौ 'ज्ञानदेवी-अमृतानुभवं' चेमौ काव्यग्रंथौ उपमानयोजनकौशलस्यादर्शौ खलु।

---

१. ज्ञा. ( क्रमशः ) १-६२; ६-९; ९-२६।
२. ज्ञा, १८-८६०।

(इ) कोशः—'प्रज्ञायाः भवति पदातिर्निघण्टुः' । १३.८३०

(ई) आप्तवाक्यम्—अर्थबोधसाधनेष्वाप्तवाक्यं नूनं सद्यःफलप्रदम् । 'आप्तः यथार्थवक्ता' । मातापिता गुरुश्चाप्ते समाविशन्ति । कविनोक्तम्—'मर्यादामनुल्लंघ्य जिज्ञासाप्रेरितेन शिष्येण गुरुर्यदि प्रष्टव्यस्तर्हि—' । ७.१९९

(उ) व्यवहारः—'यथा बाल, उपरिलिखितान् शब्दाननुसृत्याधः प्रतिलिखति ( तथा सर्वशास्त्रनिपुणानामाचरणं जनाः प्रमाणीकुर्वन्ति श्रद्धया )' । —१७.४२, ४३

वृद्धव्यवहारो यथा बालानामक्षरबोधाय तथाऽर्थबोधायोपकारक इति सूचितम् ।

(ऊ) विवृतिः—'वाच्यस्तीति वाग्भवं तपः ।' १७.२२२

( ऋ ) ( लृ ) वाक्यस्य शेषं सिद्धपदस्य च सान्निध्यं च—

'तदेनं पूर्वापरं शब्दं विमृश्य'—४.२९

'पूर्ववाच्यं निश्चित्य अपराभिप्रायमवलोक्य'—७.१९७

इत्थमर्थबोधकानां प्रत्यक्षाप्रत्यक्षनिर्देशः कृतः कविना ।

**शब्दः खपुष्पम्**—'अमृतानुभवे' नाम स्वतन्त्रे ग्रन्थे ज्ञानदेवेन शब्दस्योभे मण्डनखण्डने कृते । तयोराध्यात्मिकदृष्ट्या कृतं खण्डनमिदं ( शब्दार्थसम्बधि ) लौकिकविषयमतिक्रान्तमतोऽत्र विसर्जनीयम् । शब्दमण्डनप्रकरणे ज्ञानदेव-उवाच—

**शब्दो वस्तूपयोगी हि प्रसिद्धः स्मृतिदायकः ।**
**अमूर्तं विशदीकुर्वन् दर्पणो किं न भाव्यते ॥** ज्ञा अ० ६.१
**स्वयमेव खपुष्पं स जगद्रूपफलप्रदः ।**
**अमेयो मापकः कुत्र तस्य शब्दस्य वर्तते ॥** ६.४

शब्दस्योपयोगित्वं वैशिष्ट्यं चात्र विवृतं कविना, लोकव्यवहारस्य बोधकेन शब्देन न किमप्यवाच्यम् । अभावात्मिकाव्यावहारिकदृष्ट्या मिथ्याऽपि कल्पना शब्देन कथं व्यक्ता भवत्येतत् 'खपुष्प'पदयोजनेन दर्शितम् ।

अन्यच्च, खपुष्पं न कयाऽपि लतया प्रसूतमस्ति । लोके तु वल्लर्या अस्तित्वमावश्यकं पुष्पार्थम् । वाक्यसृष्टावप्यस्य नियमस्यनित्यसम्बन्धस्य-भङ्गो न विहितः । अतः ज्ञानदेवेन शब्दपुष्पसम्भवक्षमाया वाग्वल्लर्याः' ( अन्यत्र

अक्षरद्राक्षालतायाः )[१] प्रशस्तं वर्णनं कृतम् । सा श्रवणसुखमण्डपे[२] प्रफुल्लति । एतानि शब्दपुष्पाणि वाक्यफले परिणमन्ति । रसभरितफलमिवाशयगर्भं वाक्यं विलसति नूनम् ।[३] भावाभिव्यक्ति-क्षमः पदसमूहो नाम वाक्यम् । एष विचारोऽत्र प्रस्फुटितः । तस्मादर्थरसपूर्णवाक्यादभिप्रायः भावार्थः तात्पर्यार्थो वा—परिमलवदाविर्भवतीत्यप्यत्र कविनोक्तम् । अनेन प्रकारेण वागर्थविचारस्य कियन्निदर्शनं रूपकाश्रयेण सरसरमणीयत्वेन च कविना कृतमिति दृश्यते ।

अनिवर्चनीयं शब्दब्रह्म नाम । तत्सागर इव अगाधमाकाशतुल्यमपारमनन्तं[४] नित्यनूतनं च । अणुमात्रशब्दस्य व्याप्तिरपि तथैव विलक्षणा ।

करतलमिव बिम्बं दृश्यते भास्करस्य
त्रिभुवनमपि चाल्पं गम्यते तत्प्रभायै ।
तदनु सुलघुशब्दो भावबोधे महान्सो
ऽपरिमितमनुभाव्यं व्यापकत्वं पदस्य ॥ ४.२१२

अपरं च । यथाकल्पतरुरिच्छानुरूपं फलति [५] चिन्तामणिर्वा यथेष्टं ददाति तथैव भावज्ञाः श्रोतारः पाठकाश्च शब्दादभीप्सितं प्राप्नुवन्ति[६] एतावतीतस्य महती व्याप्तिः । अत्र 'कल्पतरुः चिन्तामणि' श्चेते उपमाने लक्षणीये । ताभ्यां संकेततत्त्वस्य शब्दशक्तेरपि संसूचनं लभ्यते ।

बुद्धिलोचनेनैवैषा वाक्सृष्टिरवलोकयितुं शक्यते ।[७] तच्छक्तिप्राप्त्यर्थं ज्ञानदेवः सद्गुरुं प्रार्थयते । गुरोर्मायाशक्तिमुद्दिश्य कविना यदुक्तं तच्छब्दशक्तिसम्बन्धेऽपि समीचीनं भाति । तद्यथा—

अलीकं रूढतां याति सञ्जीवति तथा जडम् ।
अभूतं घटनामेति मायाशक्तिवशात्खलु ॥ ज्ञाअ० २.३५

---

१. ज्ञा० १५.१४;
२. ज्ञा० १८.१६४८;
३. ज्ञा० ७.१८१
४. क्रमशः—ज्ञा० १.७३; १.७४; १८,१६४०;
५. ज्ञा० ४२१३
६. ज्ञा० ६२१
७. ज्ञा० १४२०

प्रस्तुतविषयमाधिकृत्यान्येऽपि बहवः सूक्ष्मविचारा अनुस्यूताः सन्ति ग्रन्थयोरनयोर्मध्ये। ज्ञानेशपादानां शब्दार्थविचारस्य कियन्मात्रं दिग्दर्शनं कर्तुमशक्नवं तच्चन्द्रशाखान्यायेनावलोकनीयम्।

## ज्ञानदेवस्याध्येतृषु

(१) डॉ० शं० दा० पेण्डसे

(२) डॉ० मा०गो० देशमुखः

(३) डॉ० मु०ग० पानसे

(४) डॉ० शं० रा० बालिम्बे

(५) डॉ० म० प० पेठे

(६) पं० न० चि० केलकरः

(७) पं० ल० रा० पांगारकरः

(८) पं० शं० वा० दाण्डेकरः

(९) प्रा० मा० दा० अलतेकरः

(१०) प्रा० न० र० फाटकः

(११) प्रा० श्री० मा० कुलकर्णी

—इमे प्रमुखाः

---

अस्य लेखस्य संस्करणे श्रीमद्भिः ल० ज० खरे (कार्यनिवृत्तविधिज्ञैः) महोदयैस्तथा सुहृद्वर्य डॉ० ब० अवस्थिमहोदयैः प्रभूतं साह्यं कृतम्। तैरनुगृहीतोऽहम्।

# गुणविधेर्मत्वर्थलक्षणाभावविमर्शः

## डॉ० रामशरणशास्त्री

मीमांसादर्शने गुणविधौ मत्वर्थलक्षणा नाभ्युपगम्यते। तत्र यो विचारस्तमिह यथायथमुपस्थापयामः। "सोमेन यजेते" त्यत्र 'सोमे'त्यस्य भावनायां करणत्वेनैवान्वयः स्यात्, न तु मत्वर्थलक्षणया, यथा 'दध्ना जुहोती'ति वाक्ये दध्नः करणत्वेनैवान्वयो भवति, दध्नो गुणत्वात् तथैव 'सोमेन यजेते'ति वाक्ये सोमस्याऽपि। अस्य विशिष्टविधित्वे धात्वर्थेन ( यागेन ) सहान्वयानुपपत्त्या मत्वर्थलक्षणा भवति, ततश्च 'टा' इति तृतीयया विभक्त्या 'सोमवदि'त्यस्य यागेन सहाऽभेदेनान्वयः, तेन 'सोमवता यागेनेष्टं भावयेदिति' बोधः। गुणविधित्वे मत्वर्थलक्षणां विनैव "दध्ना जुहोति' इति वाक्यस्य 'दध्ना होमं भावयेदि'-तिवत् "सोमेन यजेते"त्यस्याऽपि 'सोमेन यागं भावयेदि'-ति। अस्मिन् पक्षे लक्षणा न भवति, अपरस्मिन् पक्षे सा भवति। अतो लघवात् "सोमेन यजेते"त्यस्य गुणविधित्वमङ्गीकरणीयमिति पूर्वपक्षिणोक्तम्।

पूर्वपक्षिणः पूर्वोक्तामाशङ्कां परिहरता सिद्धान्तिना "विधाने वानुवादे वा" इत्यादिना विशिष्टविधाविव गुणविधावपि मत्वर्थलक्षणा भवत्येवेत्युक्तम्। अतो नास्ति विशिष्टविध्यपेक्षया गुणविधौ लाघवम्, उभयत्र मत्वर्थलक्षणाऽङ्गीकारात्। तेन "सोमेन यजेते"त्यस्य विशिष्टविधित्वमेव, न तु गुणविधित्वमित्यास्थेयम्।

अत्र समाधत्ते पूर्वपक्षी—लक्षणा तत्रैव भवति, यत्राऽन्वयानुपपत्तिः, तात्पर्यानुपपत्तिश्च वर्त्तेते। तद्यथा—गंगायां घोष इत्यत्र घोषस्य गंगया अन्वयो न भवति। यतोहि गंगायाः प्रवाहे शक्तिः, घोषस्य आभीरपल्लीसमूहे च। एतयोः परस्परमन्वयाभावः। तेनाऽन्वयानुपपत्त्या गंगायाः तटे लक्षणा भवति, तटेन सह घोषस्याऽन्वयः सम्पद्यते।

एवमेव "यष्टीः प्रवेशय" इत्यत्र यष्टीनां प्रवेशने तात्पर्यं नास्ति वक्तुः, प्रयोजनाऽभावात्। अतोऽत्र तात्पर्यानुपपत्त्या यष्टिधरे लक्षणा भवति। तेन 'यष्टीः प्रवेशये'त्यस्य यष्टिधरान् पुरुषान् प्रवेशयेति बोधः।

"सोमेन यजेते"त्यस्य विशिष्टविधित्वे धात्वर्थस्य ( यागस्य ) भावनायां करणत्वेनैवान्यः, तत्र ( यागे ) सोमस्य 'टा' इति तृतीयया करणत्वेनाऽन्वयो न

सम्भवति, सोमस्य द्रव्यत्वाद् यागस्य च क्रियारूपत्वात्, काञ्चिद्देवतामुद्दिश्य द्रव्यत्यागो हि यागः।[१] अतोऽत्राऽन्वयाऽनुपपत्त्या मत्वर्थलक्षणा भवति, 'टा' विभक्त्या 'सोमवतः' यागेन सह अभेदान्वयात् 'सोमवता यागेनेष्टं भावयेदिति। अत्राह आपदेवः "गुणान्वयानुपपत्या हि मत्वर्थलक्षणाऽङ्गीक्रियते। यदा तु भावनायां धात्वर्थस्य करणत्वेनान्वयः तदाऽन्वयानुपपत्या साऽङ्गीकर्त्तव्या" इति।

"सोमेन यजेतेत्यस्य" गुणविधित्वे धात्वर्थस्य (भागस्य) भावनायां करणत्वेनैवाऽन्वयो भवतीत्येतादृशो नियमो नास्तीति। तस्य साध्यत्वेन (कर्मत्वेन) एव भावनायामन्वयात्सोमस्य 'टा' विभक्त्या करणत्वेनान्वयः कर्त्तुं शक्यत एव। तथा च गुणविधौ धात्वर्थस्य करणत्वेनान्वयो न भवति प्रमाणाऽभावात्।[२]

अतोऽस्मिन् पक्षे "सोमेन यजेते"त्यत्र 'सोमे'तिगुणस्य भावनायां करणत्वेनान्वयादन्वयानुपपत्तिरूपो दोषो नास्ति, तात्पर्यानुपपत्तिरूपो दोषोऽप्यत्र न वर्त्तते प्रमाणस्याऽसत्त्वात्। एतयोरनुपपत्त्योरभावान् मत्वर्थलक्षणाऽत्र न भवतीति महल्लाघवम्[३]।

"दध्ना जुहोती"त्यत्र धात्वर्थस्य होमस्य करणत्वं न दृश्यते करणत्ववाचकतृतीयादि[४]विभक्तेरभावात्। तेन धात्वर्थस्य करणत्वेनान्वयो न भवति, प्रत्युत साध्यत्वेन (कर्मत्वेन) एव। यदि सिद्धान्तिना मां प्रत्येवमुच्येत यद्भवतो मतेऽपि "अग्निहोत्रं जुहोती"त्यादिवाक्ये धात्वर्थस्य करणत्वेनैव भावनायामन्वयो भवति किन्तु करणत्ववाचकतृतीयाविभक्तेः श्रवणं न भवति। तथा च यथोत्पत्तिविधौ करणत्ववाचकतृतीयाटाविभक्तेरभावेऽपि 'अर्थापत्तिप्रमाणेन' "प्रकृतिप्रत्ययौ प्रत्ययार्थमि"ति स्मृत्या च धातुनैव करणस्य वाचकत्वं कल्प्यते तर्हि गुणविधौ कथं न धातुना करणस्य वाचकत्वमिति। नह्यत्र किञ्चिद्

---

१. द्रव्यस्य क्रियया सह साक्षात्सम्बन्धेनान्वयो भवितुं नार्हति। अतोऽत्र-मत्वर्थलक्षणा।

२. गुणविधौ च न धात्वर्थस्य करणत्वेनान्वयः, मानाऽभावात्। मी० न्याय प्र० पृ० १२।

३. लक्षणायां तात्पर्यानुपपत्तिरन्वयानुपपत्तिर्वा बीजम्। नाऽत्रतात्पर्यग्राहकं प्रमाणमस्ति। नाऽप्यन्वयानुपपत्तिः। गुणस्य करणत्वेनैवाऽन्वयसंभावात्। सार-विवे० व्यापृ० १२

४. आदिना कर्मकारकस्य ग्रहणम्।

विनिगमकं विद्यते यदुत्पत्तिविधौ धातुना करणस्य वाचकत्वं कल्पनीयम्, गुणविधौ नेति। तथा च विनिगमकाभावादुभयत्र धातुनैव करणस्य वाचकत्वम्[१]।

उक्तामाशङ्कां परिहरता पूर्वपक्षिणा समाधीयते यद् "दध्ना जुहोतो" त्यादौ दध्यादेर्गुणस्य विधातुमिच्छया साध्यस्यैवाऽऽकाङ्क्षोदेति, न तु करणत्वस्य। यस्याऽऽकाङ्क्षा तस्यैव कल्पनं समीचीनं भवति। तथा च साध्यत्वे कल्प्यमाने सति दध्ना होमं भावयेदिति। एवमेव 'सोमेन यजेते'त्यस्य गुणविधित्वे सोमेन यागं भावयेदिति स्यात्। यतो हि नह्येतादृशो नियमोऽस्ति यद् भावनायां धात्वर्थस्य (होमस्य, यागस्य च) करणत्वेनैवाऽन्वयो भवति न तूपायान्तरेण। यदि धात्वर्थस्य करणत्वेनैवान्वयो भवतीति निश्चितं स्यात्तर्हि षष्ठाध्यायस्य प्रथमाधिकरणीयपूर्वपक्षस्योत्थानमेव न प्रभवेत्[२]। तत्र हि "यजेत स्वर्गकामः" इत्यादौ 'ते'ति प्रत्ययवाच्यायां वक्ष्यमाणार्थभावनायां 'यजेते'ति समानपदश्रुत्या 'यज'—धातूपात्तस्य धात्वर्थस्य (यागस्य) भाव्यत्वमाशङ्कितम्, पुनश्चाऽपुरुषार्थत्वेन परिहारः कृतः यतो हि नहि यागः पुरुषार्थोऽस्ति, प्रत्युत स्वर्ग एव पुरुषार्थः। अत एव स्वर्गकामस्य पुरुषस्य "स्वर्गकामो यजेते"ति वाक्येन स्वर्गस्य साधनीभूते यागे प्रवृत्तिर्भवति। यथा 'वेतनकामः पचेदि"ति वाक्येन वेतनार्थिनः पाके प्रवृत्तिः। अत्र भावनायां यथा वेतनस्योद्देश्यत्वम्, न तु पाकस्य, तथैव स्वर्गस्योद्देश्यत्वम्, न तु यागस्येति बोध्यम्[१]। धात्वर्थस्य (होमस्य यागादेश्च) करणत्वेनैव भावनायामन्वयः स्याच्चेत्तर्हि तस्य साध्यत्वशङ्कैव नोदेतीति, धात्वर्थस्य करणत्वेनैवान्वयो भवतीति निर्णीतत्वात्। तथा च षष्ठाद्यमधिकरणं व्यर्थं सम्पद्येत[२]।

**पूर्वपक्षी सिद्धान्तिन आशयमादाय ब्रूते**—षष्ठाद्याधिकरणं हि धात्वर्थस्य करणत्वं न निराकरोति, प्रत्युत स्वर्गादेः पुरुषार्थस्य भाव्यत्वमेष बोधयति। अतएव "स्वर्गकामस्य यागकर्मोपदेशः स्यात्; अतः स्वर्गप्रधानतः कर्म गुणतः" इति भाष्यम् "पुरुषार्थस्यैव ( स्वर्गादेः ) भाष्यत्वम् विधिश्रुतिबलादध्यव-

---

१. तवाऽप्युत्पत्तिवाक्यादौ धात्वर्थस्य करणत्वेनाऽन्वये किं मानम्? नहि तत्राऽपि तृतीया श्रूयते, अथ तृतीयाश्रवणाऽभावेऽपि अर्थापत्त्या "प्रकृतिप्रत्ययौ-प्रत्ययार्थंमि" ति स्मृत्या च धातुनैव लक्ष्यत इति कल्प्यत इत्युच्येत, तथैव ममाऽपीति। सा०विवे०मी०पृ० १२.१३

२. नचाऽयमस्ति नियमो भावनायां धात्वर्थस्य करणत्वेनैवाऽन्वयो न प्रकान्तरेणेति, षष्ठाद्यपूर्वपूर्वपक्षानुत्थानापत्तेः। मी०न्या०प्र० पृ० १३

सीयते" इति शास्त्रदीपिका च संगच्छते।[1] एवञ्च तावन्मात्रेण चारितार्थ्यं न षष्ठाद्याधिकरणस्य वैयर्थ्यमस्तीति चेदुच्यते तर्हि "वाजपेयेन स्वाराज्यकामो यजेते" ति विधिवाक्यम्। अत्र तन्त्र[2]—सम्बन्धस्य आशङ्कां कृत्वा परिहारः कृतः। धात्वर्थस्य (यागादेः) कारणत्वेनैव सम्बन्धेनान्वयः सुनिश्चितो भवेत्तर्हि तन्त्रसम्बन्धेन धात्वर्थस्याऽन्वयो भवतीत्याशङ्कैव न जागर्ति, कुतः तस्याः परिहारः। किन्तु वाजपेयाधिकरणे तादृशी आशंका कृता, पुनश्च तस्याः परिहारोऽपि कृतः एतेनाऽवसीयते यद् धात्वर्थस्य करणत्वसम्बन्धाऽतिरिक्तेनाऽपि सम्बन्धेनान्वयो भवतीति।

'तुष्यतु दुर्जनन्यायेन' पूर्वपक्षी पुनः सिद्धान्तिन आशयमादाय परिहरति—सिद्धान्ती यद्येवं ब्रवीति यद् मन्दविषन्यायेनोत्थिता आशंका, तस्याः स्वल्पमपि निराकरणरूपं प्रयोजनमस्त्येव तर्हि न वाजपेयाधिकरणस्य वैयर्थ्यं वर्त्तते, तस्य साफल्यात्। अतस्तेनाऽधिकरणेन तन्त्रसम्बन्धेनाऽन्वयस्याऽऽशंकापरिहाराभ्यां धात्वर्थस्य करणत्वाऽतिरिक्तेन सम्बन्धेनाऽन्वयो भवतीति निश्चेतुं न शक्यत इत्युच्येत तर्हि गुणकामाऽधिकरणे धात्वर्थस्य न करणत्वेनैवाऽन्वयो भवति, प्रत्युत तस्य (धात्वर्थस्य) आश्रयत्वेन सम्बन्धेनान्वयो भवतीत्युक्तम्। तथाहि—"दहनेन्द्रियकामस्य जुहुयादिति। अत्रैतेन न तावद्होमस्य विधानं भवति, तस्य (होमस्य) "अग्निहोमं जुहुयादिति विधिवाक्येन प्रागेव विहितत्वात्। नाऽपि होमस्य 'इन्द्रियकामस्ये'त्यनेन सह सम्बन्धस्य विधान भवति। तथासति 'दध्ने'ति गुणपदस्य वैयर्थ्यं स्यात्। नाऽपि धात्वर्थेन होमेन सह

---

१—साक्षादिष्टे, इष्टसाधने वा पुरुषस्य प्रवृत्त्युदयात् यागादेर्द्रव्यव्ययायास साध्यत्वेन स्वयमनिष्टत्वात् पुत्रपश्वादिवद्वा इष्टसाधनत्वेन प्रमाणान्तरेणाऽज्ञातत्वाच्च। यद्यपि यत्नात्मिकायां भावनायां भाव्यो याग एव, न तु स्वर्गादिः, यत्नेन हि भाग एव साध्यते, यागानुकूलत्वात् यत्नस्य। साधिते च भागे स्वर्गो भवति। न तत्सिध्यर्थं यत्नान्तरमस्ति। तथापि नासौ यत्नं प्रत्युद्देश्योऽपुरुषार्थत्वात्। अतश्च यागानुकूलयत्नात्मिकायामपि भावनायामुद्देश्यतारूपभाव्यत्वं स्वर्गस्यैव। यथा वेतनकामः पचेदित्यत्र पाकानुकूलयत्नात्मिकायां भावनायां वेतनस्यैवोद्देश्यत्वं तद्वानिति। सारविवे० व्या० पृ० १३

२—यदि च धात्वर्थस्य करणत्वेनैव भावनायोमन्वयः तदा भाव्यत्वशङ्कैव नोदेतीति व्यर्थ षष्ठाद्यमधिकरणमापद्यते। मी० न्याय० पृ० १३

१. द्र० मी० न्या० प्र० सार०विवे० व्या० पृ० १३

२. सकृदुच्चरीतत्वे सति बह्वर्थबोधकत्वं तन्त्रत्वम्

'दध्ने'ति गुणस्य सम्बन्धविधानं भवति। तथा सति 'इन्द्रियकामस्ये'ति फलपदस्याऽऽनर्थक्यं स्यात्। नाऽप्यनेन गुणसम्बन्धं, फलसम्बन्धञ्च विधत्ते, यतो हि प्राप्ते कर्मण्यनेकविधाने वाक्यभेदस्याऽऽपत्तिर्भवतीति उक्तमेवाऽभिदधाति कारिकेयम्—

प्राप्ते कर्मणि नाऽनेको विधातुं शक्यते गुणः।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः॥

अत्र कर्मपदं गुणस्याऽपि बोधकं भवति, उपलक्षणत्वात्।[१] एकोद्देश्येन बहूनां विधानं न भवति, वाक्यभेदात्। अयञ्च नियमः प्राप्ते कर्मण्येव, न त्वप्राप्ते। अप्राप्ते तु युगपदेव बहूनां विधानं कर्तुं शक्यत एव। यतो हि वाक्यभेदरूपो दोषः स एवास्ति, यतो विध्यावृत्तिर्भवति। स दोषो नास्ति, यतो विधिव्यापार एक एव। यत्राऽप्राप्ता भावना तत्राऽनेककारकविशिष्टा एका भावना भवति, अतोऽत्र विध्यावृत्तिर्न भवति। तेन वाक्यभेदादिकमेकेन विधिव्यापारेण विधातुं शक्यत एव। यत्र प्राप्ता भावना तत्र विध्यावृत्तिलक्षणो वाक्यभेदो भवत्येव। अतोऽत्र नाऽनेकगुणस्य विधानं सम्भवति।[१] अतएव ग्रहैकत्वाधिकरणे "ग्रहं संमार्ष्टि" त्यत्र ग्रहोद्देशेनैकत्वसंमार्गयोर्विधानं न भवति। यतोहि तथा सति वाक्यभेदो भवति। अतोऽत्र ग्रहगतैकत्वमविवक्षितं भवतीति समाहितम्।

पूर्वपक्षी गुणकामाधिकरणस्य व्याख्यानं कृत्वा रेवत्यधिकरणस्योदाहरणं प्रदर्शयति—रेवत्यो रेशब्दघटिताः "रेवतीर्न" इत्याद्याः ऋचः; तस्मिन्नधिकरणे च "एतस्यैव रेवतीषु वारवन्तीय[२]मग्निष्टोम[३]साम कृत्वा पशुकामो ह्येतेन यजेते" त्यत्र वारवन्तीयस्य रेवतीसम्बन्धेऽग्निष्टोमसाम सम्बन्धे, फलसम्बन्धे च विधीयमाने वाक्यभेदात् भावनोपसर्जनं भावनान्तरं विधीयते। अत्र यदि गुणफलसम्बन्धस्य विधिः क्रियते तर्हि प्राप्तस्य विधानं भवति। तेन तदुद्देश्येव बहूनां विधाने वाक्यभेदाद् भावनान्तरस्य विधिः। अस्य वार्त्तिकस्य यथाश्रुतोऽर्थो गृह्यते चेत्तर्हि रेवत्यादीनां गुणत्वाऽभावाद् वाक्यभेदाऽऽपादानं न समीचीनं भवति। अतोऽत्र प्राप्ते होमे न फलसम्बन्धः, न वा गुणसम्बन्धः सम्भवति।

---

१. द्र० मी० न्या० प्र० सारविवे० व्या० पृ० १४
२. 'वारवन्तीयं, 'अश्वं न त्वावारवन्तमि'त्यस्यामुच्युत्पन्नं साम;
३. अग्निष्टोमसाम 'यज्ञायज्ञा वो अग्नय इत्यत्र गेयं साम्।

उपसंहरन् पूर्वपक्षी ब्रूते—"दध्नेन्द्रियकामस्य जुहुयादि"त्यत्र होमादीनां विधानं न क्रियते चेत्तर्हि तेन दध्नेन्द्रियेत्यादिना होमान्तरस्यैव विधानं भवतु ; न तत्र काचिद् विप्रतिपत्तिः, अपूर्वहोमान्तरस्य विधीयमानत्वात् ।

उक्तामाशङ्कां निराकरोति—अप्राप्त—( अपूर्व ) होमान्तरस्य विधानं कर्त्तुं न शक्यते । यतो हि विधिव्यापारकल्पनारूपगौरवेणाऽऽक्रान्तो भवत्येवेति प्रथमो दोषः, "अग्निहोत्रं जुहुयादि"त्यनेन प्राप्तस्य होमस्य परित्यागः, अप्राप्तहोमस्य कल्पनाप्रसङ्ग इति द्वितीयो दोषः, अप्राप्तहोमस्य विधाने सति धात्वर्थस्य ( होमस्य ) भावनायां करणत्वेनाऽन्वये 'दध्ने'ति गुणस्याऽन्वयानुपपत्त्या मत्वर्थलक्षणा प्रसङ्गश्चेति तृतीयो दोषः । एवं तर्हि केवलं दध्येव करणत्वेनाऽन्वयी भवतीति, एतदपि न समीचीनम्, व्यापाररहितस्य केवलस्य ( व्यापाराऽसंम्बद्धस्य ) दध्नः करणत्वं संभवति । यतो हि करणं कर्त्तुर्व्यापारेण व्याप्यत्वं भवतीति नियमः । कर्त्तुर्व्यापारमन्तरा करणं साध्यं साधयितुं न प्रभवति । यथा—रामस्य व्यापारेण समाक्रान्तो बाणो वालिनं हिनस्ति । अत एव 'साधकतमं करणम्'' ( पा० सू० १।४।४२ ) इति सूत्रस्योदाहरणं 'रामेण बाणेन हतो वाली'ति प्रयोगः संगच्छते ।

"दध्नेन्द्रिये"त्यादिना कस्य विधिः, आहोस्वि न्न कस्याऽपि, कस्यचिद् विधानं भवतीति चेत्तर्हि "दध्नेन्द्रिये"ति वाक्यं व्यर्थमस्ति किम् ?

अस्य समाधानमनया रीत्या क्रियते—'दध्नेन्द्रिये' त्यत्र 'दध्ने'ति तृतीयया विभक्त्या गृहीतं दधिकरणत्वं फलभावनायां करणत्वेन विधीयते । यतो हि 'दधी'त्यस्मादपि करणत्वस्य प्रत्ययार्थत्वेन प्राधान्यमस्तीति । तथा च "दध्नेन्द्रियकामस्य जुहुयादि'त्यस्य दधिकरणत्वेनेन्द्रियं भावयेदिति वाक्यार्थः । करणत्वञ्च किञ्चित्प्रतियोगिकमस्ति न वेति जिज्ञासायां "अग्निहोत्रं जुहुयादि"त्यनेन सन्निधिप्राप्तो होम आश्रयत्वेन सम्बन्धेन सम्बध्यते । एतेनाऽत्र धात्वर्थस्य ( होमस्य ) आश्रयत्वेनाऽन्वयः सिद्धो भवति ।

एवञ्चैतेनेदं सिद्धं भवति यद् धात्वर्थस्य न करणत्वेनैवाऽन्वय इति; किन्तु क्वचित्करणत्वेनाऽन्वयः । यथा—'सोमेन यजेते'त्यादौ । तेन सोमवता यागेनेष्टं भावयेदिति बोधः । क्वचित्साध्यत्वेनाऽन्वयः । यथा—दध्ना जुहोति । अस्य 'दध्ना होमं भावयेदि'ति वाक्यार्थः । क्वचिदाश्रयत्वेनेति । यथा—"दध्नेन्द्रियकामस्य जुहुयादिति । 'दधिकरणत्वेनेन्द्रियं भावयेदिति वाक्यार्थः ।'

"दध्ना जुहोती"त्यादौ गुणविधौ धात्वर्थस्य (होमादेः) साध्यत्वेनैवाऽन्वयो भवति, न तु करणत्वेन, न वाऽऽश्रयत्वेनेति। अतो गुणविधौ न मत्वर्थलक्षणायाः किञ्चित्प्रयोजनमस्तीति सिद्धान्तितम्।

उक्तमेव मतं पुष्णाति 'किञ्च गुणविधावि'त्यादिप्रतीकेन। तथाहि—"दध्ना जुहोती"ति गुणविधौ मत्वर्थलक्षणायाः स्वीक्रियमाणे "दध्ने"ति गुणः "जुहोति' इति "हु" धातूपात्तस्य धात्वर्थस्य (होमस्य) अङ्गोऽस्तीत्यत्र किञ्चित्प्रमाणं वर्त्तते, आहोस्विन्नेति। अस्ति चेदुच्यते तर्हि वक्तव्यम्, नाऽस्तीति चेत्तर्ह्यस्माकं मतं भवताऽपि मन्तव्यम्।

यद्येवं कथयति भवान् यद् "व्रीहिभिर्यजेते"ति वाक्ये "व्रीहिभि"रिति तृतीयया विभक्तिश्रुत्या व्रीहेर्यागाऽङ्गत्वं यथा निष्पन्नं भवति, तथा "दध्ना जुहोति' इति वाक्येऽपि 'दध्ना' इति तृतीयया विभक्तिश्रुत्या धात्वर्थस्य (होमस्य) दध्नोऽङ्गत्वमस्तीति भवदुक्तं न समीचीनम्। यतोहि मत्वर्थलक्षणायां तृतीयाश्रुतिर्मत्वर्थलक्षणाया एवाऽङ्गत्वे प्रमाणमस्ति न तु दधिरूपस्य गुणस्याऽङ्गत्वे।

यद्येवमुच्यते यद्यथा 'यस्य पर्णमयी जुहूर्भवती'त्यत्र पर्णताजुह्वोः शेषशेषिणोः सहोच्चारणरूपं वाक्यं पर्णताया जुह्वङ्गत्वे प्रमाणमस्तीति, तथा 'दध्ना जुहोती'ति वाक्येऽपि तृतीयाविभक्तिमन्तरा दधिहोमयोः शेषशेषिणोः सहोच्चारणरूपं वाक्यमस्ति। अतो दध्नो होमे (धात्वर्थे) विशेषणत्वेनान्वयो भवितुमर्हति। तेनाऽस्य वाक्यस्य प्रामाण्यं मन्तव्यम्।

**अत्र पृच्छति :—** किं वाक्यस्य स्वातन्त्र्येण प्रामाण्यमस्ति? आहोस्वित् लिङ्गश्रुती कल्पयित्वा? तत्र प्रथमं पक्षं ग्रहीतुं न शक्यते। यतो हि 'श्रुतिलिङ्ग वाक्यप्रकरणे'त्यादिना बोधितेन बलाऽबलाधिकरणेन सह विरोधो भवति। अस्मिन्नधिकरणे वाक्यं लिङ्गश्रुती कल्पयित्वाऽङ्गत्वे प्रमाणं भवतीत्यभिहितम्।

लिङ्गश्रुतिकल्पनपूर्वकं वाक्यमङ्गत्वे प्रमाणमस्तीति, एतदपि वक्तुं न शक्यते। यतोहि 'दध्ने'त्यत्र तृतीयाविभक्तिरूपां प्रत्यक्षां श्रुतिं परित्यज्य 'दध्ने'ति तृतीयाविभक्त्यन्तपदान्तरस्य कल्पने, तृतीयाविभक्तिरूपायाः प्रत्यक्षश्रुतेरावृत्तिकल्पने वा सुमहद्गौरवरूपो दोषस्तु भवत्येवेति। अतो गौरवदोषेण समाक्रान्तत्वादयं प्रयासो व्यर्थः समाश्रितो भवेदिति।

**अत्र यद्येवमुच्यते यद्यथा—**'अरुणया पिङ्गाक्ष्या एकहायन्या गवा सोमं क्रीणाती'त्यत्र आरुण्येन सोमस्य क्रयणं न सम्भवति, आरुण्यस्याऽमूर्त्तत्वात्।

नह्यमूर्त्तमारुण्यं क्रयाङ्गं भवतीति। किन्तु 'एकहायनीरूपगोद्रव्येण' सह तस्य (आरुण्यस्य) अपि क्रयाङ्गत्वं साधितम्।[1] तथा 'दध्ना जुहोती'ति गुणविधावपि समाश्रयणीयम् फलमुखं गौरवं न दोषाऽऽधायकं भवति, तर्ह्येतदपि न समीचीनम्। यतोहि 'अरुणया पिङ्गाक्ष्या' इत्यादौ विशिष्टविधिर्वर्तते। अतोऽत्राऽगत्या तस्य (गोरूपद्रव्यद्वाराऽऽरुण्यस्य) क्रयाङ्गत्वं कल्पनीय भवति। विशिष्टविधौ 'उत्पत्तिविध्यन्तरवाक्यम्' न भवति। गुणविधौ तु 'अग्निहोत्रं जुहोती'त्युत्पत्तिविधेः सत्त्वात्। यत्रोत्पत्तिविधिरस्ति, तत्र श्रुत्यन्तरस्य कल्पना न भवति, धात्वर्थस्य प्राप्तत्वात्। यत्रोत्पत्तिविधिर्न वर्त्तते तत्रैव श्रुत्यन्तरस्य कल्पना, मत्त्वर्थलक्षणा च भवति। यथा 'अरुणया पिङ्गाक्ष्या' इति, 'सोमेन यजेते'ति च। अतः 'दध्ना जुहोती'त्यत्र श्रुत्यन्तरस्य 'दध्नेति'तृतीयाविभक्त्यन्तस्य न कल्पनं भवितुमर्हति। यथोक्तम् 'यत्रोत्पत्तिविध्यन्तरं नाऽस्ति, तत्राऽगत्या विशिष्टविधिमङ्गीकृत्य तदन्यथानुपपत्त्या, अर्थात् विशेषणविधिकल्पनादशायां श्रुत्यन्तरकल्पनादिप्रयासाश्रयणेऽपि सत्यां गतौ गुणविधिस्थलेऽपि किमर्थं स आश्रीयते' इति।[2]

अस्तु तावद् 'दध्ना जुहोती' त्यत्र "दध्ने"ति तृतीयाविभक्त्यन्तपदान्तररूपं श्रुत्यन्तरकल्पनम्, तथाऽपि भवतामिष्टं न सेत्स्यतीति। यतो हि श्रुत्यन्तरकल्पनं भवतीति स्वीक्रियमाणे प्रश्नद्वयं समुपतिष्ठते। तत्र श्रुत्यन्तरसहकृतः प्रत्यक्ष एव विधिः (जुहोतीति विधिः) धात्वर्थस्याऽङ्गत्वेन दध्नो गुणत्वं विदधाति, ? अहोस्वित् कल्पितस्य "दध्ने"ति पदस्याऽन्वयार्थं "जुहोती"ति कल्पितं विध्यन्तरम्? "जुहोती"ति कल्पितमेव विध्यन्तरमस्तीति चेत्तर्हि तेनैव "दधिरूपस्ये"ति गुणस्य विहितत्वेन "अग्निहोत्रं जुहोती"ति वाक्येन धात्वर्थस्य (होमस्य) प्राप्तत्वेनाऽन्यस्य च कस्यचिदपि विधातुमशक्यत्वेन 'दध्ना जुहोती'ति वाक्ये प्रत्यक्षश्रुतस्य "जुहोतीति विधेर्वैयर्थ्यं स्यात्। यतोहि नहि कल्पितेन "जुहोती"ति विध्यन्तरेण "दधिरूपस्येति गुणस्य विधानं क्रियते, कल्पितविध्यन्तरस्याऽङ्गीकारात्, नाऽपि तेन धात्वर्थस्य (होमस्य) विधानं भवति, तस्य (धात्वर्थस्य) "अग्निहोत्रं जुहोती' त्यनेनैव विहितत्वात्।

---

१. 'अरुणया पिङ्गाक्ष्या' इत्यादौ-आरुण्यादिविशिष्टक्रयभावनाया एव विधेयत्वाङ्गीकारात्तदन्यथानुपपत्त्या कल्पितविशेषणविध्यर्थं यथा श्रुत्याऽऽवृत्तिराश्रीयते। मी० न्या० प्र० सारविवे० पृ० १७

२. मी० न्या० प्र० सारविवे० पृ० १७

यद्येवं मन्यते यच्छ्रूयमाण एव 'दध्ना जुहोती' त्यत्र 'जुहोती'ति विधिः कल्पितश्रुतिसहकृतो धात्वर्थस्य (होमस्य) अङ्गत्वेन गुणं विधत्त इति चेन्मन्यते तर्हि धात्वर्थस्य केन सम्बन्धेन भावनायामन्वयो भवतीति प्रश्नः समुदेति। करणत्वेन सम्बन्धेनाऽन्वयो भवतीत्युच्यते तर्हि तन्न समीचीनम्। यतो हि धात्वर्थस्य भावनायां करणत्वेनाऽन्वये सति "दध्ने"त्यत्र "टा" विभक्तिश्रुत्या दध्नो गुणस्य होमेन सह साक्षात्सम्बन्धेनाऽन्वयो न सम्भवति। नहि दधि द्रव्यस्य 'होमे'ति क्रियया सह तादृशोऽन्वयः, द्रव्यक्रिययोरत्यन्तभेदस्य सत्त्वात्।[1] अतोऽन्वयाऽनुपपत्त्या मत्वर्थलक्षणा भवतीति। तेन दधिमता होमेनेष्टं भावयेदिति बोधः स्यात्।

यदि च धात्वर्थस्य साध्यत्वेनैवाऽन्वयस्तर्हि दधिरूपस्य गुणस्य करणत्वेनाऽन्वये सति 'दध्ना होमं भावयेदि'ति बोध इति स्वीकर्त्तव्यम्। धात्वर्थः 'दध्ना जुहोती'ति गुणविधावपि करणत्वेनैवाऽन्वेतीति वादिनो दुराग्रहस्योपेक्षणम्, गुणविधौ धात्वर्थस्य साध्यत्वेनैवाऽन्वयात्, तेन 'दध्ना जुहोती'ति गुणविधेः 'दध्ना होमं भावयेदिति विवक्षितवाक्यार्थो मत्वर्थलक्षणामन्तरैवाऽङ्गीकृतः। अत एतेन 'दध्ना जुहोती'ति गुणविधौ मत्वर्थलक्षणा नैव भवतीत्यास्थेयम्।[2] यथोक्तमापदेवेन 'साध्यत्वेनैवाऽन्वयः—दध्ना होमं भावयेदिति–चेत्, न, तथा सत्यनुवादेऽपि धात्वर्थः करणत्वेनैवाऽन्वेतीत्येतदुपेक्षितं स्यात् विवक्षित वाक्यार्थश्च विनैव मत्वर्थलक्षणयाङ्गीकृतःस्यात्। तस्मान्न गुणविधौ मत्वर्थलक्षणा' ( मी० न्यायप्र० पृ० १७ ) इति।

**अत्र मत्वर्थलक्षणावादी ब्रूते**—'सोमेन यजेते'त्यत्र मत्वर्थलक्षणाया निरूपणाऽवसरे 'दध्ना जुहोती'ति गुणविधावपि 'विधाने वाऽनुवादे'त्यादिना मत्वर्थलक्षणा भवतीति प्रागुक्तम्। पश्चात्तत्रैव मत्वर्थलक्षणा न भवतीति सिद्धान्तितम्। तथाचाऽत्र पूर्वाऽपरसंगतिविरोधः सम्पत्स्यतीति। अस्योत्तरं मत्वर्थलक्षणाऽभाववादी ददाति। तथाहि—

विधाने वाऽनुवादे वे'ति 'वार्त्तिकेन यद्यपि गुणविधौ मत्वर्थलक्षणा भवतीत्युक्तम्।

---

१. नहि संभवति दध्ना होमेनेति चान्वयः। मी० न्या० पृ० प्र० १७

२. श्रुत्यन्तरमकल्पयित्वा प्रत्यक्षतः श्रूतस्यैव कल्पितश्रुतिसहकृतस्य-गुणविधायकत्वाङ्गीकारे गुणस्यैव तत्र करणत्वेनाऽन्वयाद् धात्वर्थस्य साध्यत्वेनैवाऽन्वयोऽङ्गीकर्त्तव्यः। अङ्गीकृते च तस्मिन् प्रतिज्ञाव्याकोपोऽस्मदिष्टसिद्धिश्च। मी० न्यायप्र० सारविवे० पृ० १७

तथापि तदज्ञाननिवृत्तिमात्रेण संशयविपर्ययसहं ज्ञानमापातप्रतीतिरूपमेव, न तु वास्तवम्। यथाह 'विधाने वाऽनुवादे वा' इति वार्त्तिकं तत्प्रतीतिमवलम्ब्य, वस्तुगतिम् ( मी० न्यायप्र० पृ० १८ ) इति।

उक्तमेव मतं विशदीकरोति 'तथाही'ति सन्दर्भेन। तथा हि—यावत्कालं 'अग्निहोत्रं जुहुयादि' त्युत्पत्तिविधिवाक्यं न पर्यालोच्यते, 'दध्ना जुहोती'ति गुणविधिवाक्यमेवाऽऽलोच्यते तावत्कालं षष्ठाद्यन्यायेन 'जुहुयादि'ति समानपदश्रुत्या धात्वर्थस्य ( होमस्य ) भाव्यत्वेन भावनायामन्वयोऽस्ति नवेति शङ्कैव नोदेति, 'अग्निहोत्रं जुहुयादि'ति वाक्यार्थबोधस्याऽपरिज्ञानात्। अतोऽस्याऽपरिज्ञानात् 'धात्वर्थस्ये'त्यस्य भाव्यत्वम् ( साध्यत्वम् ) ज्ञातुं न शक्यते। अत एवोक्तम् 'षष्ठाद्यन्यायेन होमस्याऽभाव्यतां जानताम्' ( मी० न्यायप्र० पृ० १८ ) इति।

वाक्योपात्तं प्रतिपदं भावनया सम्बध्यते न वेति विचारो यत्र क्रियते तद् प्रतिपदाऽधिकरणमिति कथ्यते, एवं धात्वर्थस्य भावार्थस्य च यत्र करणत्वेनाऽन्वयं विचार्य निर्णीयते यत्तद्भावाऽधिकरणमिति कथ्यते। तेनैतयोरधिकरणयो र्यो हि विचारः समजनि, तद्वासनावासितानां जनानां हृदये भवत्येवैतादृशी बुद्धिर्यद्–'दधिमता होमेनेष्टं भावयेदि'ति। यथाऽह आपदेवः 'प्रतिपदाधिकरणभावार्थाधिकरणवासनावासितानां भवत्येव तादृशी मतिः यद् दधिमता होमेनेष्टं भावयेदि'ति।[1]

प्रतिपदाधिकरणे हि 'सोमेन यजेते' त्यादौ किं 'सोमे'ति गुणस्य, 'यागे'ति 'यज्' धातूपात्तधात्वर्थस्य ( यागस्य ) च फलभावनायां करणत्वेनाऽन्वयः अथवैतयोः कस्यचिदेकस्यैवेति सन्देहं कृत्वा प्रधानसम्बन्धलाभाद्विनिगमनाविरहाच्च सर्वेषां तादृशभावनायां करणत्वेनाऽन्वयो भवतीत्याशङ्कितम्, पुनः लाघवात्तेषां मध्ये कस्यचिदेकस्यैव फलभावनायां करणत्वेनाऽन्वयो भवतीत्यभिहितम्। अत्र 'भावनाकरणत्वमि' ति पदेन भावनाया यत् साध्यम्, तन्निष्पन्नतया भवतीति।[2] अत्र साध्यम् = स्वर्गादि, तच्च नहि अदृष्टं विना सिध्यति। यतो हि 'स्वर्गकामो यजेते'ति विधिना स्वर्गार्थिनो यागकर्मणि प्रवृत्तिः, यागानन्तरमेव स्वर्गकामो जनः स्वर्गरूपं फलं न प्राप्नोति, किन्तु कालान्तर एव। यागः कालान्तरे स्वर्गादिफलं कथं जनयितुं शक्नोति, तस्य 'ग्रहैर्जुहोती' ति वाक्यविहितेन होमेन भस्मी-

---

१. मी० न्यायप्र० पृ० १८

२. भावनाकरणत्वं हि भावनाभाव्यनिर्वर्त्तकतया। मी० न्यायप्र० पृ० १८

भावत्वात् । अतो यागेनाऽपूर्वनामकं किञ्चिद् 'अदृष्टम्' भवतीति । तथा च यागोऽदृष्टद्वारा स्वर्गादिफलं साधयति । अत एवोक्तम्—'भाव्यञ्च स्वर्गादि नादृष्टमन्तरेणे'ति ।[१]

फलभावनायां 'सोमे' ति गुणस्य, 'यागे' ति धात्वर्थस्य च करणत्वेनाऽन्वये सति सोमादेकमदृष्टम्, यागादित्यपरमदृष्टमित्येवं रूपेणानेकस्यादृष्टस्य कल्पनाप्रसङ्गः स्यात् । अतः कस्यचिदेकस्यैव भावना[२]करणत्व मन्तव्यम् ।

यद्यप्येकस्य करणत्वम्, तदापि किं द्रव्यरूपस्य, गुणरूपस्य वोपपदार्थस्य फलभावनायां करणत्वम् ? तद्यथा—'सोमेन यजेते' त्यत्र 'सोमे'ति द्रव्यरूपस्य, 'दध्ना जुहोतीति'त्यत्र दधिरूपस्य गुणस्येति, आहोस्विद् धात्वर्थस्य ? (यागस्य होमस्य च ) उक्तवाक्ययोरिति भावार्थाऽधिकरणे सन्देहं कृत्वा द्रव्यगुणयोरेव फलभावनायां करणत्वम्, 'भूतं भव्यायोपदिश्यते' इति न्यायादित्याशङ्कितम् । किन्तु फलभावनायां धात्वर्थस्यैव करणत्वेनाऽन्वयो भवतीति समाहितम् । यतो हि पदश्रुतिर्बलवान् भवति । पदश्रुतिरि'त्यनेनाऽत्र, 'यजेते'ति 'जुहोती'त्याद्येकपदश्रुतिर्बोध्यः । यतो हि धात्वंशेन धात्वर्थः, आख्यातांशेन भावना च समुपतिष्ठते । अत एतेनेदं सिद्धं भवति यद् 'अग्निहोत्रं जुहुयादि'ति वाक्यस्य पर्यालोचनमकृत्वैव 'दध्ना जुहोती'ति गुणविधावपि धात्वर्थस्य करणत्वेनाऽन्वयो भवतीत्याशङ्कायां 'दध्ने'ति गुणपदे भवति मत्वर्थलक्षणेत्युक्तम् । यथाह आपदेवः—'अतश्च सिद्धमेतद् वाक्यान्तराऽनालोचनदशायां गुणविधावपि धात्वर्थस्य करणत्वाशंकायां गुणपदे मत्वर्थलक्षणे'ति ।[३]

यदा तु "अग्निहोत्रं जुहोतीति धात्वर्थस्य ( होमस्य ) विधायकं वाक्यान्तरं समालोच्यते तदा होमस्य 'अग्निहोत्रं जुहोती'त्यनेनैव विहितत्वात्तदुद्देशेन "दध्ना जुहोतीति गुणविधिना केवलं दधिरूपं गुणमात्रं विधीयते, न तु "होमे' ति धात्वर्थः । अतः "दध्ना जुहोतीति गुणविधौ धात्वर्थस्य अविहितत्वाद् "दधिरूपस्य गुणस्ये'ति होमोद्देश्येन विहितत्वाच्च मत्वर्थलक्षणा न भवति । यतो हि गुणविधौ होमस्य साध्यत्वेनैवान्वयो भवतीति ।[४] तत्र (साध्ये) दध्नः करणत्वे-

---

१. मी० न्यायप्र० पृ० १८

२. भावनाकरणत्वं हि भावनाभाव्यनिर्वर्त्तकतया । मी० न्याप्र० पृ० १८

३. मी० न्यायप्र० पृ० १९

४. मी० न्यायप्र० १९

नान्वयो भवितुमर्हति। एतदेवाऽभिप्रेत्योक्तं पार्थसारथिमिश्रैः—"आराग्नि-होत्राऽधिकरणे फलतो गुणविधिरयं न प्रतीतितः" ( मी० न्यायप्र० प्र० १६ ) इति।

अथवा "विधाने वाऽनुवादे वे'ति वार्त्तिकमधिकारविध्यभिप्रायेणोपतिष्ठते। तस्मिन् विधौ धात्वर्थस्य फलसम्बन्धत्वं बोध्यते। अतस्तद्विषयकमेवेदं वार्त्ति-कमस्तीति। तथाहि :—"उद्भिदा यजेत पशुकामः' इति, "स्वर्गकामो यजेते'-त्यादयोऽधिकारविषयः, फलस्वाम्यस्य बोधकत्वात्। अत्र हि यागो विधीयताम्, उत्पत्तिवाक्यसिद्धो वाऽनूद्यताम्, उभयस्मिन्नपि पक्षे धात्वर्थस्य फलभावनायां करणत्वेनैवाऽन्वयो भवतीति। यतो हि "उद्भिदे'त्यादेः तृतीयान्तस्य पदस्य करणवाचित्वमस्तीति। उद्भिदित्यस्य धात्वर्थेन सह सामानाधिकरण्येनाऽन्वये सति 'उद्भिदा यागेन पशून् भावयेदि'ति बोधः सम्पद्यते। अन्यथाऽन्वयानुपपत्त्या मत्वर्थलक्षणा स्यात्। तया ( मत्वर्थं लक्षणया ) 'उद्भिद्वता यागेन पशून् भावयेदि' ति बोधः प्रभवेत्। तस्माद् 'दध्ना जुहोती'ति गुणविधौ मत्वर्थलक्षणा-मन्तराप्यन्वयोपपत्त्या न साऽङ्गीकार्या। तथा च 'सोमेन यजेते'त्यत्र न विशिष्ट विधिः, प्रत्युत गुणविधिरेव। यतो हि 'ज्योतिष्टोमेन स्वर्गकामो यजेते' त्यनेन यागस्य विधानं भवति। यथा 'अग्निहोत्रं जुहोती' त्युत्पत्तिविधिना धात्वर्थस्य (होमस्य) विहितत्वात्तदुद्देश्येन 'दध्ना जुहोती' त्यनेन दध्नो गुणस्य विधानम्, तेनाऽस्य गुणविधित्वं सिद्धं भवति। तथा 'सोमेन यजेते' त्यस्याऽपि। अन्यथाऽन्वयानु-पपत्त्या मत्वर्थलक्षणा सेत्स्यतीति। तथाहि—

एवञ्च 'सोमेन यजेते'त्यत्र 'सोमे'ति गुणमात्रस्य विधानेन विशिष्टविधेर-भावान्न मत्वर्थलक्षणाया अवकाशलेशोऽपीति पूर्वपक्षिणाऽऽशङ्कितम्। अस्योत्तरं 'अत्रोच्येते' इति प्रतीकेन सिद्धान्ती ददाति। तथाहि—

'सोमेन यजेते'ति वाक्यं यागमुद्दिश्य न 'सोमे'ति गुणस्य विधानं करोति, प्रत्युत सोमविशिष्टयागस्येति। यागमुद्दिश्य 'सोमे'त्यस्य विधिः स्यात्तर्हि मत्वर्थ-लक्षणा न स्यात्। यथा—'दध्ना जुहोती'ति विधिना होममुद्दिश्य दध्नो विधानं भवति। अतोऽत्र मत्वर्थलक्षणा न भवति। तथा 'सोमेन यजेते'ति विधि र्न प्रवर्त्तते। यतो ह्यत्र यागस्य प्राप्तिर्नाऽस्तीति। 'दध्ना जुहोती'त्यत्र तु 'अग्निहोत्रं जुहोती'त्यनेन होमस्य प्राप्तत्वात् तदुद्दिश्य दध्नो गुणस्य विधानं भवतीति।

यद्येवमुच्यते यद् 'ज्योतिष्टोमेन यजेत स्वर्गकामः' इत्यनेन यागस्य प्राप्ति-रस्ति, अतो यागमुद्दिश्य 'सोमे'त्यस्य विधानं कर्तुं शक्यत एव, तर्ह्येतदपि

वक्तुं न शक्यते। यतोहि "ज्योतिष्टोमेने'त्यादेरधिकारविधित्वेन तस्योत्पत्तिविधित्वं नाऽस्ति। क्रियास्वरूपमात्रस्य बोधको यो हि विधिः स उत्पत्तिविधिरिति कथ्यते। यथा—'अग्निहोत्रं जुहोती'ति विधिवाक्यम्। अत एवैतेन प्राप्तं होममुद्दिश्य 'दध्ना जुहोती'ति विधिना दध्नो गुणस्य विधानं भवति। नैवं स्थितिः 'सोमेन यजेते'त्यत्र। यतो ह्युत्पत्तिविधिना विहितस्य कर्मणः फलविशेषसम्बन्धमात्रं बोधयति 'ज्योतिष्टोमेने' त्यधिकारविधिः फलविशेषसम्बन्धबोधकस्याऽधिकारविधित्वात्। यथा—'यदाग्नेयोऽष्टाकपालो भवती' त्युत्पत्तिविधिः, एतेन विहितस्य कर्मणः फलविशेषसम्बन्धमात्रं 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति वाक्यं बोधयति, तेनाऽस्याऽधिकारविधित्वं सिद्धं भवति। तथा 'ज्योतिष्टोमेने'त्यादेश्चाऽप्यधिकारविधित्वम्, नोत्पत्तिविधित्वम्।[1] अतः 'सोमेन यजेते'त्यस्य न गुणविधित्वम्, प्रत्युत विशिष्टविधित्वमेव। विशिष्टविधौ भवत्येव मत्वर्थलक्षणेति सिद्धान्तितम्।

दार्ष्टान्तिकयोर्वैषम्यं बोधयता पूर्वपक्षिणा 'सोमेन यजेते' त्यस्य गुणविधित्वमाशंक्यते। तथाहि—स्यादेतत्, 'दर्शपूर्णमासाभ्यामि'त्यस्योत्पत्तिविधित्वं न संभवति, 'यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौर्णमास्याञ्चाऽच्युतो भवति' इत्यस्य वैयर्थ्यं स्यात्। कथमस्य वैयर्थ्यमित्याशङ्क्यते चेत्तर्हि शृणु, 'दर्शपूर्णमाभ्यामि' त्यस्योत्पत्तिविधित्वे 'यदाग्नेयोऽष्टाकपालः' इत्यनेन कर्मणाविधानं न कर्त्तुं शक्यते। यतो हि 'दर्शपूर्णमासाभ्यामि'त्यनेनैव तस्य विहितत्वात्। नाऽप्यनेन गुणस्य विधानं संभवति, 'दर्शपूर्णमासाभ्यामि' त्यनेन प्राप्ते कर्मणि, तदुद्दिश्य 'अग्निरूपदेवता' 'कपालगतसंख्या' 'पुरोडाशः' 'अमावास्यादिकालः' इत्यनेकेषां विधाने सति वाक्यभेदापत्तेः। तथाचैतस्य (यदाग्नेयादेः) वैयर्थ्यं सेत्स्यतीति।

अतः 'यदाग्नेयोऽष्टाकपालः' इत्यस्योत्पत्तिविधित्वम्, 'दर्शपूर्णमासाभ्यामि' त्यस्याऽधिकारविधित्वं च मन्तव्यम्।[2]

---

१. यदाग्नेयादिवाक्यविहितकर्मणां दर्शपूर्णमासवाक्येन फलसम्बन्धो बोध्यत इति दर्शपूर्णमासवाक्यस्याऽधिकारविधित्वमेव नोत्पत्तिविधित्वं यथा, तथा ज्योतिष्टोमवाक्यस्याप्यधिकारविधित्वमेव नोत्पत्तिविधित्वम्। मी० न्यायप्र० सारविवे० पृ० २०; अपि च मी० न्यायप्र० पृ० १९-२०

२. एवञ्च दार्ष्टान्तिके-आग्नेयवाक्यानर्थक्यभिया दर्शपूर्णमासवाक्ये-उत्पत्तिविधित्वानङ्गीकरणं युक्तम्, दृष्टान्ते तु न तथेति। मी० न्याय प्र० सारविवे०पृ०२०;

'ज्योतिष्टोमेने' त्यस्याऽधिकारविधित्वेऽपि 'उद्भिदा यजेत पशुकामः इत्यस्य यथाऽधिकारविधित्वे उत्पत्तिविधित्वमप्यस्ति तथाऽस्य ( ज्योतिष्टोमेत्यादेश्च ) उत्पत्तिविधित्वमङ्गीकरणीयम्। तेनाऽस्योत्पत्तिविधित्वे न कश्चिद् दोषः। तथा च 'सोमेन यजेते' त्यनेन यागोद्देशेन 'सोमे'त्यस्य गुणविधित्वेऽपि न वाक्यभेदः।

अस्योत्तर ददाति सिद्धान्ती—'ज्योतिष्टोमेने' त्यादेश्चोत्पत्तिविधित्वे तदुद्देशेन 'सोमे'त्यस्य विधीयमाने सति नाऽस्ति विध्यावृत्तिलक्षणो वाक्यभेदः, न वा 'सोमेन यजेते' त्यत्र मत्वर्थलक्षणायाः प्राप्तिः। परन्तु 'ज्योतिष्टोमेने' ति कर्मस्वरूपे वाक्ये तत्र फलसम्बन्धस्य विधानं क्रियते चेत्तर्हि—अज्ञातज्ञापनरूपो गौरवलक्षणो वाक्यभेदो भवत्येव। 'सोमेन यजेते' त्यनेन सोमविशिष्टकर्मणो भावनायां फलसम्बन्धमात्रं स्याच्चेतर्हि पूर्वोक्तदोषो नाऽस्तीति, सोमविशिष्टकर्मण एकत्वात्।

किञ्च 'ज्योतिष्टोमेने' त्यस्योत्पत्तिविधित्वं न सम्भवति, अस्याऽधिकारविधित्वात्। यदुक्तं 'उद्भिदा यजेत पशुकामः' इतिवदुत्पत्तिविधित्वमपि स्वीकर्त्तुं शक्यत एव, एतदपि न समीचीनम्, 'उद्भिदे' त्यत्राऽगत्या विधेर्द्वैविध्यं स्वीक्रियते, नैवं स्थितिः 'सोमेने'त्यस्य, सोमविशिष्टयागस्य विधातुं शक्यत्वेन 'ज्योतिष्टोमेने' त्यादिवदुत्पत्तिविधित्वं कल्पयितुमशक्यत्वात्।

'सोमेन यजेते' त्यत्राऽपि वाक्यभेदोऽस्तीत्याशंकते—'सोमेने'त्यादावपि कर्मणः स्वरूपत्वे, 'सोमे'ति गुणस्य च तदुद्देशेन विधीयमाने सति वाक्यभेदः स्यादेवेति चेत्तर्हि नैवं वक्तुं शक्यते। यतो हि विशिष्टं विधीयमानस्थले सर्वत्र विशिष्ट एव विधिः प्रवर्त्तते; विशिष्टं विधाय विश्रान्ते विधौ तदन्यथानुपपत्त्या विशेषणानामपि पृथग्विधिः कल्प्यते, विशिष्टस्य चैकत्वेन तत्रैव विधिव्यापाराङ्गीकरणात् नाऽनेकविधानकृते वाक्यभेदः। 'ज्योतिष्टोमेने' त्यस्य तूत्पत्तिविधित्वमङ्गीक्रियते चेत्तर्हि कर्मस्वरूपं फलसम्बन्धश्चेत्युभयं श्रूयमाणेनैव विधिना कर्त्तव्यमस्तिचेत्तर्हि सुदृढो गौरवलक्षणो वाक्यभेदः। अत्रैवेयं कारिका प्रमाणमुखेनोद्ध्रियते—

श्रौतव्यापारनानात्वे शब्दानामतिगौरवम्।
एकोक्त्यवसितानां तु नार्थाक्षेपो विरुध्यते॥

अस्या अयमर्थ—श्रोतेति–श्रूयमाणेनैव विधिना कर्मस्वरूपस्य, फलसम्बन्धस्य चेत्यनेकस्याऽर्थस्य विधायकत्वे सति, शब्दानामिति—विधिशब्दानाम, कल्प्यमाने सति—

अतिगौरवरूपो दोषः संभवत्येव। एकोक्त्यवसितानाम्—सोमविशिष्टमेकस्य विधानं भवति चेत्तर्हि तन्मात्रविधानेन विधिव्यापारस्योपरतिः। तेन 'सोमेन यजेते' त्यत्र विशिष्टविधिस्थले 'सोमे'त्यस्य यागेन सहाऽन्वयाऽनुपपत्त्या मत्वर्थलक्षणायाः कल्पनं न विरुध्यते।

श्रौतव्यापार नानात्वे—

कस्मिंश्चिद् वाक्य-एकस्यैव विधिप्रत्ययस्य श्रवणं भवति। यथा 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादिवाक्ये 'यजेते'त्यत्र 'त' इत्याख्यातप्रत्ययस्य श्रवणम्, तस्य चैकत्वमेवास्तीति। अत्र द्रव्यम्, देवता, यागश्चेत्यादयः पदार्थाः वर्त्तन्ते, तेषामेकेन श्रूयमाणेन विधिना युगपदन्वयं कर्त्तुं न शक्यते, किन्तु तस्याऽऽवृत्ति कृत्वैव। एतेन विध्यावृत्तिरूपो महद्गौरवदोषः सम्भवत्येव। अमुमेवाऽऽशयमादाय 'श्रौतव्यापारनानात्वे शब्दानामतिगौरवमि'ति कारिकापूर्वार्धेन स्पष्टीकृतं ग्रन्थकृता।

'सोमेन यजेते' त्यत्र तादृशो गौरवरूपो दोषो न वर्त्तते। यतो ह्यनेकविशेषणविशिष्टविशेष्यस्यैकेनैव विधिनाऽन्वयो भवति, न तु प्रत्येकस्य पृथक्-पृथग्रूपेणेति। तेनोपरते विधिव्यापारे पश्चाद् विशेषणीभूतानां पदार्थानामन्वयकल्पनेऽपि नोक्तगौरवरूपो दोषो वर्त्तते। यतोहि विशेषणीभूतानां पदार्थानामर्थाक्षेपादन्वयो भवति। यथा—'सर्वत्र हि विशिष्टविधौ विशेषणविधिरार्थिकः' इति। अस्य 'एकोक्त्यवसितानां तु नार्थाक्षेपो विरुध्यते' इतिकारिकोत्तरार्धेन स्पष्टीकृतम्।

'सोमेने'त्यादौ वाक्यभेदाऽपेक्षया मत्वर्थलक्षणा समर्थ्यते। तथाहि—न च 'सोमेन यजेते'त्यस्योत्पत्तिविधित्वम्, तदुद्देशेन सोमस्य विधानं भवति चेत्तर्हि वाक्यभेदो नाऽस्ति। तथापि 'सोमे'त्यस्य यागेन सहाऽन्वयानुपपत्त्या मत्वर्थलक्षणा स्यादेवेति वाच्यम्[1] तस्याः स्वीक्रियमाणत्वात्, लक्षणातो वाक्यभेदस्य जघन्यत्वाच्च। यतो हि लक्षणा पदे दोषः, वाक्यभेदस्तु वाक्ये दोषो[2] भवति। पदवाक्ययोर्मध्ये पदे-एव दोषकल्पनाया उचितत्वात्, 'विप्रतिपत्तौ विकल्पः स्याद् गुणे त्वन्याय्यकल्पनैकदेशत्वादि'ति न्यायाच्च।

---

१. 'सोमेने'ति पदे लक्षणा;

२. विध्यावृत्तिः, यतो ह्येकस्मिन् वाक्ये विधिप्रत्ययस्यैकत्वात्

लक्षणातो वाक्यभेदस्य जघन्यत्वादेव 'जातपुत्रःकृष्णकेशोऽग्नीनादधीत' इत्यत्राऽऽधानस्याऽनुवादेन जातपुत्रत्वकृष्णकेशत्वयोर्विधाने वाक्यभेदो भवति। यतोहि जातपुत्रः, कृष्णकेश इति द्वयोः पदयोर्विधीयव्यानेऽवस्थाविशेषस्य प्रतीति र्भवतीति। यथा च वाक्यभेदमत्वर्थलक्षणयोर्मध्ये मत्वर्थलक्षणैव श्रेयसी। अतः 'सोमेन यजेते' त्ययमेवोत्पत्तिविधिर्न 'ज्योतिष्टोमेने'त्याद्ययम्, 'ज्योतिष्टोमेने' त्यस्योत्पत्तिविधित्वे गौरवलक्षणवाक्यभेदस्य सत्त्वात्।

किञ्च 'सोमेन यजेते'त्यस्योत्पत्तिविधित्वं मन्यते चेर्त्तहि यागरूपकर्मणो विधानेन श्रु[1]त्यर्थविधानं भवति। एतेन (सोमेने) त्यादिना 'सोमे'त्यस्य विधानं स्याच्चेर्त्तहि वाक्यार्थस्य विधानम्, एतयोर्मध्ये श्रुत्यर्थविधानस्यैव औचित्यात्। यथोक्तम्:—

'वाक्यार्थविधिरन्याय्यः श्रुत्यर्थविधिसंभवे' इति। अत्र वाक्यार्थः—पदान्तरार्थः। यतो हि 'सोमेने'ति सोमपदस्यार्थः 'सोमे'ति द्रव्यरूपो गुणः। तेनाऽस्य पदान्तरार्थत्वं सिद्धं भवति।

'ज्योतिष्टोमेने'त्यादिनाऽपि स्वर्गरूपं फलमुद्दिश्य यागस्यैव विधानं भवति। तेनाऽस्य न वाक्यार्थविधानम्, प्रत्युत श्रुत्यर्थविधानमेव। यतोहि स्वर्गादिफलस्याऽविधेयत्वेनोत्पत्तिवाक्येन विहितस्याऽपि यागस्याऽधिकारवाक्ये पुनःतस्य विधानं भवति। उत्पत्तिवादिभिरपि यदुक्तं मतमङ्गीक्रियते। अतः 'ज्योतिष्टोमेने'-त्यादेरधिकारविधित्वमस्तीति मन्तव्यम्।

उक्तमेव मतं विशदीकरोति सिद्धान्ती—

अपि च कर्मस्वरूपविधिः तत्र स्वीकर्त्तुं भवद्भिः शक्यते, यत्र कर्मणो रूपं संलक्ष्यते। यतो हि यागस्य द्वे रूपे भवतः, तत्रैकं द्रव्यम्, अपरं देवता चेति। 'सोमेन यजेते'त्यत्र यद्यपि देवता नोपलभ्यते, सोमयागस्याऽव्यक्तत्वात्। अव्यक्तत्वञ्चात्र यागोद्देशेन विहितदेवताऽभाववत्त्वम्, न तु सर्वथा देवताऽभावः। अन्यथा यागस्य व्यक्तत्वं द्रव्यदेवताभ्यां भवति। द्रव्यदेवतयोरभावे तस्याऽव्यक्तत्वम्। 'सोमेन यजेते'त्यनेन बोधिते सोमयागे सोमरूपस्य द्रव्यस्य, इन्द्रवाय्वादीनां देवतानाञ्च सत्त्वात् सोमयागस्याऽव्यक्तत्वं न संभवति। अस्ति च

---

१. श्रुतिपदेनाऽत्र'यजेते'तिसमानपदश्रुतिर्गृह्यते। यतो हि तेनैव पदश्रुत्या यागस्य भावनायाश्च विधानं भवति।

सोमयागस्याऽव्यक्तत्वम्। अतोऽव्यक्तस्योक्तार्थो ग्राह्यः। अत्राह आपदेवः—'अव्यक्तञ्च स्वार्थचोदितदेवताराहित्यम्, न तु देवताराहित्यमात्रम्' इति।

नाऽपि सर्वथादेवताऽभावरूपाव्यक्तत्वं ग्रहीतुं प्रभवति। यतो हि 'ऐन्द्रवायवं गृह्णाति' 'मैत्रावरुणं गृह्णाति 'आश्विनं गृह्णाति' इत्यादिवाक्ये विहित ग्रहणदेवतानां श्रवणमस्तीति। ग्रहणार्थाभिरपि देवताभिः प्रसङ्गतो यागस्योपकारकत्वेन व्यवह्रियमाणत्वात्। तथाऽपि 'सोमेन यजेते'त्यत्र 'सोमे'ति द्रव्यमस्ति, एतेनाऽपि यागस्य स्वरूपं बोद्धुमर्ह्यमेव। 'ज्योतिष्टोमेन यजेत स्वर्गकामः' इति वाक्ये कस्यचिदपि द्रव्यस्य श्रवणं नाऽस्ति, न वा कस्याश्चिदपि देवतायाः। अतो 'ज्योतिष्टोमेने' त्यस्योत्पत्तिविधित्वमङ्गीक्रियते चेत्तर्हि यागविशेषस्य ज्ञानमपेक्षितं स्यात्, यागसामान्यस्याऽविधेयत्वात्, यागविशेषस्यैव विधेयत्वादित्यादिक्लेशेन स्यात्। अतो 'ज्योतिष्टोमेनेत्यस्य कर्मोत्पत्तिविधित्वं न सेत्स्यतीति।

अत्र पूर्वपक्षी ब्रूते—'ज्योतिष्टोमेने'त्यत्र द्रव्यदेवतयोरभावेन यथाऽस्योत्पत्तिविधित्वं न सिध्यति, तथा 'अग्निहोत्रं जुहोती'त्यादेश्चाऽपि होमोत्पत्तिविधित्वं न संभवति। यतो हि यागस्य यद्रूपं द्रव्यम्, देवता च वर्त्तते, एतयोरत्र श्रवणं भवति। 'दध्ना जुहोती'त्यत्र दध्नो द्रव्यस्य श्रवणं वर्त्तते। अतोऽस्यैवोत्पत्तिविधित्वं स्यात्। तथा च तेन 'आधाराऽग्निहोत्राऽधिकरणेन सह विरोधो भवेत्। तत्र हि 'अग्निहोत्रं जुहोती'त्यस्यैवोत्पत्तिविधित्वम्, 'दध्ना जुहोती'त्यस्य गुणविधित्वञ्च साधितम्।

अस्योत्तरं सिद्धान्ती ददातिः—यद्यपि'अग्निहोत्रं जुहोती'त्यादौ यागस्य ये द्वे रूपे स्तः, तयोरन्यतरं रूपं नोपलभ्यते, अग्निहोत्रशब्दस्य तत्प्रख्य[1]न्यायेन नामधेयत्वात्। तथापि 'अग्निहोत्रं जुहोती'त्यस्योत्पत्तिविधित्वं स्वीक्रियत एव, अन्यथास्याऽऽनर्थक्यं स्यात्। 'दध्ना जुहोती'त्यस्यैवोत्पत्तिविधित्वेन तस्य निष्प्रयोजनत्वात्। 'दध्ना जुहोती'त्यस्य नाऽऽनर्थक्यम्, गुणविधित्वेन तस्य प्रयोजनत्वात्। अतः अग्निहोत्रं जुहोती'त्ययं कर्मोत्पत्तिविधिरिति मन्तव्यम्। 'ज्योतिष्टोमेने'त्यस्य च नाऽऽनर्थक्यम्, येनाऽस्योत्पत्तिविधित्वं स्यात्। तस्याऽधिकारविधित्वेन सप्रयोजनत्वात्। अतः संभवति 'सोमेन यजेते'ति रूपवति वाक्ये (द्रव्यदेवताऽन्यतरबोधके) कर्मणो विधानम्, द्रव्यदेवतयोरन्यतररहिते 'ज्योतिष्टोमेने'त्यादौ वाक्ये कर्मणो विधानम् (उत्पत्तिविधित्वम्) न

---

१. तस्य गुणस्य, प्रख्यापकस्य—प्रापकस्य, शास्त्रस्य; मी० न्यायप्र० पृ० १३१।

मन्तव्यम् । यथाह आपदेवः 'किमर्थं संभवति रूपवति वाक्ये कर्मविधाने तद्रहिते तत्स्वीकार्यम् ?' इति ।

किञ्च 'दध्ना जुहोती'त्यस्य कर्मविधित्वं स्वीक्रियते चेत्तर्हि 'पयसा जुहोती' त्यनेन दधिवाक्य ( दध्नेत्यादिना ) विहितहोममनूद्य न पयसो विधानं कर्त्तुं शक्यते । यतो ह्युत्पत्तिवाक्येन विहितस्य दध्नोऽवरोधनं भवति । उत्पत्ति-शिष्टगुणस्य ( दध्नः ) अवरोधे सति, न पयोरूपं गुणान्तरं 'पयसा जुहोती'ति वाक्येन विधातुं शक्यते, आकांक्षाया उत्पत्तिशिष्टत्वेनैव निवृत्तत्वात् । अतः 'पयसा जुहोती' त्यनेनाऽपि पयोरूपगुणविशिष्टं कर्मान्तरं विधातव्यम् । तेनाऽत्रा-ऽनेकाऽदृष्टकल्पनारूपं गौरवं प्रसज्यते । 'अग्निहोत्रं जुहोती'ति वाक्यस्य तूत्पत्तिविधित्वे स्वीक्रियमाणे 'अग्निहोत्रमि'त्यादिना विहितस्य कर्मणो द्रव्याऽऽ-कांक्षायां युगपदेव 'खले कपोतन्यायेन' 'दध्ना जुहोती'ति, 'पयसा जुहोती'ति च वाक्याभ्यां गुणा विधीयन्ते । अतो नाऽत्राऽनेकाऽदृष्टकल्पनारूपं गौरवम् । तथा च 'अग्निहोत्रं जुहोती'त्यस्योत्पत्तिविधित्वम्, 'पयसा जुहोती'त्यादयस्तु गुणविधयो वर्त्तन्ते ।

एवञ्च 'सोमेन यजेते'त्यत्र यागस्य द्वयो रूपयोर्मध्ये 'सोमे'ति द्रव्यस्य सत्त्वेनाऽस्य कर्मोत्पत्तिविधित्वमङ्गीकर्त्तुं शक्यत एव । न तत्र किञ्चिद्दूषणं सेत्स्यतीति । यतो हि 'सोमेने'त्यस्य गुणविधित्वे, विशिष्टविधित्वे चैकस्यैवाऽ-दृष्टस्य कल्पनेन तुल्यत्वात् । तस्मात् सिद्धमिदं यत् 'सोमेन यजेते' त्यस्यैवोत्पत्ति-विधित्वम् विशिष्टविधित्वञ्चेत्यलमनया विधिनिरूपणानुगतप्रसङ्गचिन्तनयेति । एतेनेदं सिद्धं भवति यद्विधिः प्रयोजनवन्तमप्राप्तमर्थं विधत्त इति ।

# वर्णविषयिणी व्याकरणशास्त्रीया मान्यता

डॉ० गङ्गारामपाण्डेयः,

## प्रस्ताविकम्

भारतेऽस्मिन् वर्षे वाणीतत्त्वसम्बन्धे रहस्यभावनामूला विवेचना कदा समारभत ? प्रश्नस्यास्य यथावदुत्तरं दातुमशक्यम्; यतः ऋग्वेदेऽपि वयमेवंविधं दृष्टिकोणं लभामहे, यत्र आम्भृणी वाक् प्रतिपादयति—

'अहमेव वात इव प्रवामि आरम्भमाणा भुवनानि विश्वा'[1] इति स्पष्टत एवात्र प्रस्तुततयाऽप्रस्तुततया वा, अभिधेयरूपे प्रतीकार्यरूपे वा शब्दस्य सृष्टिकारणता प्रतिपादिता। दार्शनिकीयं मान्यता सततं गतिमती सती उत्तरवैदिककालेऽभिजातवर्गस्य प्रबुद्धसामाजिकस्य च परिपाटीरूढतामारूढवती। तत्र तु ब्रह्मणो द्वे रूपे एव मान्यतामलभताम्—शब्दब्रह्म परब्रह्म च। शब्दब्रह्मणश्च क्रियाकारिता तथा शक्तिमती ख्यापिता, यत् तत्र सिद्ध एव परब्रह्मावाप्तावधिकारी भवति। तथा हि—

'द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति॥'[2]

मान्यतेयं न केवलं भारत एव, किन्तु मानवीयचिन्तनाया मूल उत्से यत्र कुत्रचित् सर्वत्रैव स्थानमलभत। 'प्रारम्भे शब्द एवासीत्। शब्दश्चेश्वरेण सहावर्तत, स एवेश्वरश्चाभूत्। आरम्भकाल इत्थमेवेश्वरेण सहाजायत।'[3] अतएव विश्वस्योपजीव्यतया 'अक्षरस्य' महत्त्वम् ऋग्वेदे समर्थितम्—

'ततः क्षरत्यक्षरं तद्विश्वमुपजीवति'।[4] इति

---

१. ऋक्—८-७-१२

२. मैत्रायणी आरण्यक—६, २२

3. "In the beginning was the word, and the word was with god, and the word was god. The same was in the beginning with God".
Ouoted in Perspectives on Language. P 299

४. ऋक्—१-१६४-४२

व्याकरणिकसिद्धान्ता यदा बद्धमूलतामभजन्, तदेयं मान्यता भाषाशास्त्रे आध्यात्मिकं गौरवं भेजे। तदा चेत्थमप्यमन्यन्त ऋषय—

"इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ॥"[१]

वर्णविषयिणीनां समस्तानां चिन्तनानां मूलोऽवलम्बो वर्ण एव। अस्मिन् विषये भारतीयदर्शनानां विविधाः शाखा अनेकधा विचारं प्रस्तुवन्ति। आट्टोजेस्पर्सन-नामा पाश्चात्यमनीषी चापि तथैव प्रतिपादयन्नवलोक्यते। 'पुरा कालिको मानवो वर्णान् अक्षराणि शब्दांश्च प्रति रहस्यभावनाया सह व्यचारयत्। अत एव वैज्ञानिकविधया प्रशिक्षितोऽद्यतनो जनो भाषायाः प्रकृतिं पूर्णतयाऽऽत्मसात् कर्तुमक्षमः।'[२]

## व्याकरणमतम्

वैयाकरणा उच्चारितान् श्रवणगम्यांश्च वर्णाननित्यान् मन्वते। अनया दृशा ते न्यायमतसंवादिनः। अपरत्र स्फोटनामकं नित्यशब्दं ते ब्रह्मरूपतया स्वीकुर्वते, तमेव च सार्थकं विदन्ति। समुच्चारितैर्वर्णैः, पदैस्तद्घटितैश्च वाक्यैः क्रमशो वर्णस्फोटः, तत्समुदायरूपः पदस्फोटः, पदसमूहरूपो वाक्यस्फोटश्च व्यक्तीभवन्ति। अयं स्फोटशब्दः, वैखर्या वाचो व्यङ्ग्यो भवति। समुच्चारितानि पदानि च तद्व्यञ्जकानि, अतः स्फोट शब्द एव नित्यः शब्दः। स्फोटस्यास्य व्युत्पत्तिगतमर्थद्वयं लभ्यते—'स्फुट्यते व्यज्यते वर्णैरिति स्फोटो वर्णाभिव्यङ्ग्यः, स्फुटति स्फुटीभवति अस्मादर्थ इति स्फोटोऽर्थप्रत्यायकः।' सन्दर्भेऽस्मिन् विद्वांसः सविस्तरं विचारयन्ति। अत्र कतिपयप्रश्नद्वारा तन्निखिलं विचारयितुं यत्नवन्तो भवामः।

१—शब्दार्थसम्बन्धरूपायाः शक्तेराश्रयः कः?
२—उत्पत्ति-विनाशधर्मा वर्णाः कथमर्थबोधकतां भजन्ते?
३—वाक्ये पदानि, पदेषु च वर्णाः कां स्थितिं धारयन्ति?
४—चारमोऽर्थबोधकः कः?

---

१. वाक्यपदीयस्य ब्रह्मकाण्डम्।

2. "We shall never thoroughly understand the nature of language, if we take as our starting point the sober attitude of the scientifically trained man of today, who regard the words he uses as means for communicating, or may be further developing thougt".

Perspectives on Language. P. 2[?]

## शक्त्याश्रयः

स्फोटवादिनो वैयाकरणस्य समक्षं बलीयान् प्रश्नोऽयमेव, यत् शब्दस्यार्थ-बोधिका शक्तिः कुत्र निवसति ? क्षणमात्रस्थायिनो वर्णाः कदाचिदपि नैकत्र भवितुं शक्नुवन्ति, यत् समुदितरूपेण तान् शक्त्याश्रयान् प्रतिपादयितुं शक्येत। उदाहरणतया यदि 'गौः' शब्द उच्चार्यते तदा 'एकैकवर्णवर्तिनी वाक् न द्वौ युगपदुच्चारयति। गकारे यावद् वाग् वर्तते, नौकारे न विसर्जनीये, यावद् विसर्जनीये न गकारे नौकारे, उच्चरितप्रध्वंसित्वात्। उच्चरितप्रध्वंसिनः खलु वर्णाः।'[1] अस्यां स्थितौ वाक्तत्त्वं वर्ण-भिन्नमेव सिद्धयति, तदेव च शक्त्याश्रयः। तत एवार्थः स्फुटतामेति, अतः स स्फोट एव। स च स्वयं मध्यमानादेन स्फुटीभवति, अतएव च स्फोट इत्यभिधीयते। स्फोटोऽयं स्फटिकमणिवद् भवति, यः प्रतिवर्णमभिव्यक्तिं प्रतीच्छन् वाक्यान्तिमेन वर्णेन व्यक्तः सन् शाब्दबोधस्य कारणं भवति।[2]

## वर्णा अर्थबोधश्च

अर्थबोधे वर्णानां किं स्थानम् ? प्राचीनवैयाकरणैरद्वयदृशा विज्ञातुमेतद् यत्नो विहितः। परमेश्वरप्रतिष्ठितं शक्तितत्त्वमेव बिन्दुः, यश्च त्रिगुणात्मकः। बिन्दोरस्य 'अचिद्'भागो बीजम् 'चिदंशश्च' बिन्दुः, उभयोर्मिश्रणं नादः। नागेशभट्टमहोदयैस्तु 'अचिच्'–छब्दस्यार्थः 'शब्दार्थौ' इति प्रतिपादितः। उभयोश्चानयोः संस्कारः 'अविद्या' इति कथ्यते।[3] उपर्युक्तो बिन्दुः, शब्द बिन्दुरप्युच्यते, स एवास्य जगत उपादानं, यतः शब्दमयी, अर्थमयी, उभयात्मिका च सृष्टिः सञ्जायते, सैव 'परा' प्रोच्यते। तदेव 'परा'–तत्त्वं नाभौ मानसप्रत्यक्षं लभते, ततश्च सैव 'पश्यन्ती'–रूपतां प्रतिपद्यते, हृदये च वक्तुः बुद्धिगम्यं वाणीरूपं 'मध्यमा' भवति।[4] अस्यामेव मध्यमायां यश्चिदंशः 'परा' अवस्थात एव संलग्नः समागच्छति, स एव स्फोटः। अयमेव स्फोटोऽर्थबोधको भवति। विविधैर्वर्णैः, पदैश्च वाक्यरूपतां भजमानोऽभिव्यक्तिं गृह्णाति।[5]

१. महाभाष्यम्—१-४-१०६
२. वैयाकरणसिद्धान्तलघुमञ्जूषा—पृ० १५२
३. तत्रैव—पृ० १४२
४. तत्रैव—पृ० १४५-१४८
५. तत्रैव—पृ० १५२

परा-पश्यन्ती-मध्यमा-वैखरीणां समुदितरीत्या विश्लेषणमित्थं प्रस्तूयते। अकारः प्रकाशरूपः परमेश्वरः। हकारपर्यन्ता समस्ता वर्णमाला 'अहं' कथ्यते। इकारादारभ्य हकारपर्यन्ता वर्णा अकारादेवोदपद्यन्त। सृष्टेः समारम्भकाले सकलमेव 'परा'रूपमतिष्ठत्। समस्तमपि जगत् तदानीं बोधमात्रमेवासीत्। ततएव 'पश्यन्ती', पश्यन्त्याश्च 'मध्यमा' निष्पद्यते। तदनन्तरञ्च तदेव तत्त्वं मुखगह्वरे वैखरीनामभाग् भवति। अर्थबोधोत्पादिकायां शक्तौ, शक्तिमति च परात्मके तत्त्वे, नास्ति कश्चन तात्त्विको भेदः। यथा च चन्द्र-चन्द्रिकयोरभेद-स्तथैव वागर्थावप्यभेदात्मकौ।[1] परन्तु व्याकरणमते नैते वर्णाः सार्थकाः। वर्णानां सार्थकता तु काल्पनिकी, यतस्तेषां सार्थकता वाक्यसापेक्षा भवति।[2] इत्थंगते वर्णानां पदसापेक्षतायाः पदानाञ्च वाक्यसापेक्षताया महत्त्वमेव मान्यं सिद्धयति। अतएव महाभाष्ये वर्णानां सार्थकता सिद्धान्ततो न स्वीक्रियते।

## वाक्ये पदानां पदेषु च वर्णानां स्थितिः

दृष्टमेवाधुनैव, यद्व्याकरणमते वर्णानां, तद्घटितपदानां वा सार्थकता नास्ति मान्या। यद्यपि भट्टमीमांसकः वर्णा नित्याः सार्थकाश्च इति मान्यमानः काष्ठेनोपमिनोति तान्। यतो हि निर्मितज्वालासमानि भवन्ति पदानि, येषां च प्रयोजनं पाकवद् वाक्यार्थनिष्पत्तौ जायते।[3] परन्तु व्याकरणमतं सर्वात्मना प्रतीपमेव। तदनुसारं वाक्यमेव भाषायाश्चरमं रूपम्। तन्मतेन पदं तत्त्वतोऽखण्डम्, यथा सन्ध्यक्षरेषु परमार्थतोऽवयवानां नास्ति पार्थक्यम्, तथैव पदेषु वर्णानां नास्ति काचित् तात्त्विकी स्थितिः, कल्पितैवैषा। अर्थादुच्चारणसाम्यमाधारीकृत्य विचित्रवर्णस्थापनां सन्धाय वर्णस्वरूपं स्थिरीकृतम्। एवमेव समानतामूरीकृत्य बहुषु वाक्येषु सम्मिलितेषु तुल्यवर्णसमुदयेषु पृथक् पदार्थ-बोधकताकल्पना विहिता। इत्थञ्चाखण्डमेव वाक्यं व्याकरणमते मान्यतामर्हति। अतएवोक्तम्—

"पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात्पदाना मत्यन्तंप्रविवेको न कश्चन॥"[4]

---

१. वैयाकरणसिद्धान्तलघुमञ्जूषा—पृ० १५०–१५१ उद्धृतो नन्दिकेश्वरः
२. वैयाकरणभूषणसारः—६४–७१ पर्यन्तम्
३. श्लोकवार्तिकम्—७।३४२–३४३
४. वै० भू० सारः ६८

अतएव च महाभाष्यकारा आदेशागमादिषु वर्णानां वर्णान्तरोपजने शङ्कन्ते, यतो यदि शब्दोऽखण्ड एव मान्यस्तर्हि तत्रस्थैर्वर्णैरप्यविकारिभिरविचालिभिश्च भवितव्यम् । एवंगते कथं सम्भाव्यन्ते आदेशा आगमाश्च । अत्रोत्तरति समग्रं पदम् अथवा वाक्यरूपः शब्द एव शब्दान्तररूपेण परिणतिं भजते ।[1] अनयैव दृशा 'क्लृप्त'शब्दे विचार्यमाणे महाभाष्यकृद्भिः श्रुतिमात्रं परिवर्तितं मन्यमानैः स्पष्टीक्रियते, यत् स्फोट एव निर्दिश्यते, न तु रेफघटितं किमपि पदं वर्तते, यत्र 'र'श्रुतौ 'ल'श्रुतिर्निष्पद्यते ।[2] कैयटोऽपि तदेव तथ्यं स्पष्टतयोद्घोषयति, यत् संहितवाक्ये पदानि पुरुषकल्पितानि । संहितैषापौरुषेयी, नित्या च ।[3]

एकः प्रश्नोऽद्यापि शिष्यते, यदि वाक्यानि पदानि वा अखण्डरूपेणैव मान्यानि तिष्ठन्ति, तर्हि वर्णव्यत्ययेनापि कथं नार्थबोधो जायते ? अस्मिन् विषये स्फोटवादिन इत्थं समादधति यत् स्फोटरूपायां स्फटिकशिलायां वाक्यानां तद्घटितपदानां पदघटकवर्णानां च क्रमो यथावदेव प्रतिफलति न तु यथा तथा न वान्यथा । इत्थञ्चैकस्यैव बौद्धशब्दस्य प्रतिपत्तिर्जायते, तथा चायमेव शब्दो बौद्धस्यार्थस्य प्रत्यायको भवति ।[4]

सम्प्रत्यप्ययं प्रश्नः, यद् विविधाः प्रकृति-प्रत्ययविभागाः, धातु-विभक्ति-प्रातिपदिकादेशागमादयश्च ये व्याकरणस्य प्रतिपाद्यमुख्याः सन्ति, किमवशिष्यते समेषामेषां मूल्यमखण्डवाक्यमान्यताङ्गीकृतौ ? प्रश्नमिममुत्तरयन् भगवान् भर्तृहरिः स्पष्टीकरोति, यद् विविधव्याकरणेषु धात्वादिकल्पना विविधरूपावलोक्यते, परन्त्खण्डवाक्ये सर्वाणि व्याकरणान्येकीभवन्ति, अतः कल्पनेयं शुद्धा शास्त्रसम्मतैव, अलोकसामान्या च । धातु-विभक्ति-तद्धितादयो व्यावहारिक दशा निरर्थकाः ।[5] इत्थं शास्त्रेषूपलभ्यमानाः पद-पदार्थ-प्रकृति-प्रत्ययादीनां कल्पना अविद्यैव ।[6] अनेन प्रकारेण शास्त्रीयाः कल्पना उपायमात्रमेव पर्यवसन्ति । याश्चाबोधानां बालानामुपलालनमेव कुर्वते । सत्यरूपमवयविभूतं वाक्यमेव,

---

१. महाभाष्यम्—१-१-४५
२. तत्रैव—८-२-१८
३. तत्रैव महाभाष्यप्रदीपः—६-१-२७
४. वैयाकरणसिद्धान्तलघुमञ्जूषा—३२८
५. वाक्यपदीयम्—२।२१२-२१३
६. तदेव —२।२३५

यस्य प्रतिपादनायै असत्यानि किं वा कल्पितानि पदानि वर्णादयो वा प्रस्तूयन्ते।[1] अतएव वर्णनित्यत्वपक्षे व्याकरणमतानुसारमयमेवार्थः, यत् ते अज्ञातकालादज्ञातकालपर्यन्तं तद्रूपतयैव व्यवहारपदवीं भजमाना वर्तन्ते।[2]

## चरमोऽर्थबोधकः

व्याकरणमते चरमार्थबोधकं वाक्यमेव मन्यते, तत्रापि न वाक्यव्यक्तिः, अपि तु वाक्यजातिरेवात्यन्तिकरूपेणार्थबोधं जनयति। यतो व्यक्तिरनित्या, असत्या चास्ति, जातिरेव सत्या, नित्या च।[3] अतएवानेकाभिवाक्यव्यक्तिभिरभिव्यङ्ग्या वाक्यजातिरेकैव स्फोटरूपतयाऽर्थबोधिका प्रतिष्ठिता।[4] इत्थञ्च वाक्यजातौ पदजातिः पदस्फोटः, पदजातौ च वर्णजातिः वर्णजातिस्फोटतया परिकल्प्यते। अतश्चायं वाक्यजातिस्फोट एवान्तिमरीत्यार्थप्रत्यायको भवति।[5]

---

१. वाक्यपदीयम्—२।२४०

२. न्यायभाष्यम्—२।१।६६

३. वै० भू० सारः ७३-७४

४. वाक्यपदीयम्—१।९४

५. वैयाकरणसिद्धान्तलघुमञ्जूषा पृ० ४६४–४८४ पर्यन्तम्

# कुमारसम्भवरघुवंशयोः पौर्वापर्यम्

## डॉ० रामजी उपाध्यायः

कुमारसम्भवरघुवंशयोः पौर्वापर्यमद्यापि सन्दिग्धमेव वर्त्तते । डॉ० एस० के० डे—महोदयः एतयोः पौर्वापर्यमधिकृत्य समाज्ञापयति—

'न केवलं साक्षाद्व्यक्तिगतप्रसङ्गैर्विरहिताः सन्ति कालिदासस्य रचनाः, अपि तु ताः कविप्रतिभाया विकासक्रमं तस्या शक्तिसमुन्मीलनं चापि नैव प्रकाशयन्ति । विरलाः खलु ते कवयो ये स्वकीयं क्रमिकविकासं कालिदासवत् स्वल्पतरं सन्निदर्शयन्ति । तस्य रूपकसहिताः सर्वा रचना भावं शैलीं चाधिकृत्य किञ्चिन्नवीनं वैशिष्ट्यं प्रकटयन्ति । तत्र नास्त्येव प्रश्नः पूर्वापरत्वयोः, उच्चावचत्वयोर्वा, किन्तु तेषां पात्रगुणविभावनानिष्पत्तीनां विभेद एव कलनीयः । अत एव तस्य रचनानां पौर्वापर्यविचारणा नातिसफला । कुमारसम्भवं कालिदासस्य प्रारम्भिककृतिष्वस्थापितम् । किन्तु तस्य विभावना व्यञ्जना वान्यकाव्यसदृशी सविशेषं प्रशस्यतरा प्रतिभासते ।[1]

कीथमहोदयस्तु सर्वतोभावेन रघुवंशमेवोत्तरं काव्यं मनुते । तथाहि— "निस्सन्देहं रघुवंशं तूत्तरमेवं काव्यम् । एतस्य गभीरभावेन, योगदर्शनस्य

---

1. Kalidasa's works are not only singularly devoid of all direct personal references, but they hardly show his poetic genius growing and settling itself in a gradual grasp of power. Very few poet have shown a greater lack of ordered development. Each of his works, including his dramas, has its distinctive characteristics in matter and manner; it is hardly a question of younger or older, better or worse, but of difference of character and quality, of conception and execution. All efforts, therefore, to arrive at a relative chronology of his writings have not proved very successful.

The Kumarasambhava is regarded as one of Kalidasa's early works, but it is in its own way as admirably conceived and expressed as his other poems. History of Sanskrit Literature PP. 25–26

सन्दर्भेण, शिवौदार्यविषये कुमारसम्भवानुरूपं विश्वस्य नातिस्वात्मानुबद्धविभाव-नया, व्याकरणस्पर्शिसादृश्यानुप्राणितेन कुमारसम्भवे व्यक्तमात्रेण किन्तु रघुवंशे प्रगुणीभूतेन पाण्डित्यप्रदर्शनेनैतस्यानुत्तरत्वं सम्प्रधारितमेव।...अपरं च समप्रसङ्ग-निर्वाहिश्लोकेषु विशेषतो विवाहप्रकरणेषु रघुवंशस्यापरत्वं प्रतिभासत एव।[1]

केषुचित् स्थलेषु कुमारसम्भवं रघुवंशादुत्कृष्टतरमिति कीथोऽपि प्रतिपादयति। तथा हि—

Though inferior in some slight degree to the Kumarasambhava, the Raghuvansha may rightly be ranked as the finest Indian specimen of Mahakavya as defined by writers in poetics".

A History of Skt. Literature, P. 92.

एवं कुमारसम्भवस्य रघुवंशादुत्कृष्टतरत्वं प्रतिपादयता कीथेन स्वयमेव रघुवंशस्यापरत्वं सन्देहास्पदं विहितम्। डेमहाभागस्य कीथस्य चोपरिनिर्दिष्टा पौर्वापर्यसम्बन्धितर्कसरणिर्निर्णयदिशं नानुसन्दधाति।

रघुवंशस्य भूमिकायां कविः किञ्चित् सप्रश्रयं निवेदयति—

**क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः।**
**तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्॥ १।२**
**मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम्।**
**प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः॥ १।३**

1. There can be no doubt that the Raghuvansha is a later work. This shows itself both in the grandiur of tone in reference to the yoga philosophy and the less personal conception of the universe as compared with the magnification of shiva in the Kumarasambhava, and the growing pedentry seen in the use of similar derieved from grammar of which we have only modest suggestion in the Kumarasambhava. Moreover, in the contant parellels between the two poems, as in the description of the marriage rites, the priority seems to belong to the Kumarsambhava. A Hist. of Skt. Lit PP. 91–92

अथवा कृतवाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभिः।
मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥ १।४
रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन्।
तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः ॥ १।९

एतैः श्लोकैरधोलिखितानि तथ्यानि प्रस्फुटीभवन्ति—

१. कालिदासोऽप्रसिद्धः, अलब्धयशाश्चासीत्, यदा स रघुवंशं विरचितवान्।
२. स पाठकानां प्रसादं याचमान इव प्रतिभाति।
३. कथावस्तुनिबन्धनार्थं स सर्वथा पथिकृतोऽनुहरति इति सूत्रस्येवास्ति मे गतिरिति पदेन प्रतिभासते।

एतैर्निष्कर्षैः रघुवंशस्य रचनाकाले कालिदासस्यात्मन्यप्रत्ययं चेतोऽभवदिति प्रतिभासते। नैषा स्थितिः चिरात् कविवृत्तिकानां भवति। कालिदासोऽन्येषु ग्रन्थेषु क्वापीदृशः पाठकानां प्रसादव्यपेक्षो नास्ति। मालविकाग्निमित्रनामके प्रथमे नाटकेऽपि स बहुप्रत्यय एव निवेदयति—

**पारिपार्श्विकः**—मा तावत्। प्रथितयशसां भाससौमिल्लकविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां कथं बहुमानः ?

**सूत्रधारः**—अयि ! विवेकविश्रान्तमभिहितम्। पश्य—

पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम्।
सन्तः परीक्ष्यान्यतरद् भजन्ते मूढः परप्रत्ययनेयबुद्धिः॥

इत्यनेन कालिदासस्य काव्यपथाभ्यासः प्रतीयते। रघुवंशे तु कालिदासो वाल्मीकिप्रभृतीनां महाकवीनां कृतीः पदे पदेऽनुहरति। अत एवास्मिन् महाकाव्ये कथावस्तुविन्यासे, वर्णने, पात्रोन्मीलने च सविशेषं रामायणमेवोपजीवितम्। तस्य प्रतिभा स्वतंत्रं न परिस्फुरति। किन्तु कुमारसम्भवे तु कालिदासः सर्व-तन्त्रस्वतन्त्र एव कुमारसम्भवस्य रामायणमहाभारतादिभिर्भृशं परिचितामपि कथां समधिक-रसपेशलां विधातुमिव पुनः पुनः विपरिवर्त्तयति, तत्र नवीन-तत्त्वानि संयोजयति च। न स कविविपश्चितामालोचनावैषम्यात् शंकते। तथाहि—

रामायणानुसारं शिवेन विवाहस्य पश्चात् कामस्य दहनं गङ्गासरयूप्रदेशेऽङ्गदेशे कृतम्। तद्यथा रामायणे बालकाण्डे—

कन्दर्पो मूर्त्तिमानासीत् काम इत्युच्यते बुधैः ।
तपस्यन्तमिह स्थाणुं नियमेन समाहितम् ॥ २३.१०
कृतोद्वाहं तु देवेशं गच्छन्तं समरुद्गणम् ।
धर्षयामास दुर्मेधा हुंकृतश्च महात्मना ॥ २३.११
अवदग्धस्य रौद्रेण चक्षुषा रघुनन्दन ।
व्यशीर्यन्त शरीरात् स्वात् सर्वगात्राणि दुर्मतेः ॥ २३.१२

न केवलं रामायणेऽपितु रघुवंशेऽपि कालिदासस्येयमेव प्रतिपत्तिर्विद्यते यत् कामस्य दहनमुपर्युक्तसंगमस्थलेऽभवत् । तद्यथा--

स्थाणुदग्धवपुषस्तपोवनं प्राप्य दाशरथिरात्तकार्मुकः ।
विग्रहेण मदनस्य चारुणा सोऽभवत् प्रतिनिधिर्न कर्मणा ॥
(११.१३)

रघुवंशीयः कथांशः रामायणमनुहरति । कुमारसम्भवानुसारं तु कामस्य दहनमपूर्वैव कथा विद्यते । प्रथमं तावत् कामदहनं शिवस्य विवाहात् प्रागेवाभवदिति कुमारसम्भवे वर्णितम् । अपरं च हिमालयप्रदेशे (न तु गंगासरयूसंगमे) तपस्यन् शिवः पार्वत्या शुश्रूषितोऽभवत् ।[1] तदा वसन्तसखः कामः सम्मोहनबाणेन तस्य चेतसि विकारं जनयामास । पश्चाच्च—

तपःपरामर्शविवृद्धमन्योर्भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य ।
स्फुरन्नुदर्चिः सहसा तृतीयादक्ष्णः कृशानुः किल निष्पपात ॥ ३.७१
क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति ।
तावत् स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥ ३.७२

अत्र प्रश्न उदेति मदनदहनस्य स्थानं गंगासरयूसंगम इति रामायणे वर्णितम्, किन्तु कुमारसम्भवे हिमालयाधित्यकायां मदनदहनं सञ्जातम् । तत्र किं कारण-

---

१. स कृत्तिवासास्तपसे यतात्मा गंगाप्रवाहोक्षितदेवदारु ।
प्रस्थं हिमाद्रेर्मृगनाभिगन्धि किञ्चित्क्वणत्किन्नरमध्युवास ॥ १.५४
अवचितबलिपुष्पा वेदिसम्मार्गदक्षा नियमविधिजलानां बर्हिषां चोपनेत्री ।
गिरिशमुपचचार प्रत्यहं सा सुकेशी नियमितपरिखेदा तच्छिरश्चन्द्रपादैः ॥ १.६०

मेतस्या असंगतेः कालिदासस्य द्वयोर्महाकाव्ययोः । कारणं तु स्पष्टमेव । कुमारसम्भवस्य कथावस्तुविन्यासे हिमालये घटनानां क्रोडीकरणं समपेक्षितमासीत् ।

रामायणस्य रघुवंशस्य च मदनदहनकथांशः कुमारसम्भवे परिवर्त्तितो वर्त्तते । अस्यां स्थितौ कुमारसम्भवं परवर्त्तिरचनेत्यत्र न स्याद्विदुषां विप्रतिपत्तिः । परिवर्तितं तु परवर्ति भवतीति सुनिश्चितमेव कुमारसम्भवस्य पुरातनकथायाः काल्पनिकपरिधानेनोपबृंहिता कलात्मकरसपेशलता अथ च रघुवंशस्य पुरातनवस्तुविन्यासात्मकं पारिपार्श्व्यं तदेव प्रमाणयति ।

# गुमानिकवेः काव्यसाधना

## श्रीजनार्दनशास्त्रिपाण्डेयः

गुमानिकवेर्जन्म कूर्माचले अलमोड़ात उदीच्यां सप्तदशक्रोशदूरस्थ उपरड़ाग्रामे महाराष्ट्रीय पन्तब्राह्मणान्वये पौषकृष्णद्वादश्यां बुधे सं० १८४७ वैक्रमेऽभवत्, अस्य पिता पण्डितदेवनिधिपन्तः माता च देवमञ्जरी। अस्य नाम लोकरत्नपन्त आसीत् किन्तु पित्रा प्रेम्णा गुमानिरित्याहूतो तयैवाभिख्यया प्रसिद्धिमभजत्। स्वपितृव्यश्रीराधाकृष्णपन्ततः प्रारम्भिकीं शिक्षामादायायं तदानीन्तनप्रसिद्धविदुषः कलौनग्रामाभिजनश्रीहरिदत्तजोशीतो विविधशास्त्राण्यधिजगाम। तस्य च हरिदत्तस्य कृते तदा कूर्माचले प्रसिद्धिरासीत् यत्—स्वर्गे इन्द्रः पाताले शेषः भूलोके चाहं हरिदत्तः—इति। आचतुर्विंशति वयसाऽनेन तत्राधीतम्, एतन्मध्य एव कालेऽस्य परिणयोऽप्यभवत्। अनन्तरं यावदयं गार्हस्थ्ये प्रविशति तावदेवैकया घटनयास्य जीवनधारा दिशान्तरं परिमोटिता। उच्यते चैकदा पाकक्रियां सम्पादयतोऽस्य यज्ञोपवीतं सहसा दग्धं तत्प्रायश्चित्तार्थमसौ गृहान्निरगच्छत् प्रतिजज्ञे च यावद् व्रतसमाप्तिर्न स्यात् तावन्नाग्निपक्वमत्स्यामीति। द्वादशवर्षाण्येवं फलमूलानि जक्षन् तीर्थेषु परिबभ्राम, वर्षचतुष्टयं तीर्थराजप्रयागमुषित्वा चतुर्विंशतिलक्षं गायत्रीजपं श्रीमद्भागवतस्य पारायणं च व्यदधात्, ततः सप्त वर्षाणि तीर्थान्तरेषु पर्यटन् द्वादशे वर्षे केवलं दूर्वारसं पीत्वा देवप्रयागेऽवसत्। एटामण्डलान्तः शूकरक्षेत्रे (सोरों) गङ्गातटे "गुमानिगुफा" अद्यापि वर्तते यत्रानेन कतिचिन्मासानूषे। एतद्व्रतसमाप्त्यनन्तरमेवायं प्रतिनिवृत्य गृहाश्रमं प्रविवेश।

बहुकालं यावदयं टिहिरीनरेशस्य श्रीसुदर्शनशाहस्य राजसभामलंचकार, कियन्तं चित् काल च काशीपुराधिपतेः श्रीगुमानसिंहदेवस्य राजसभां चालंचक्रे। तत्रैवास्य निजसगोत्रेण श्रीसुखानन्दपन्तेन कस्मिंश्चिच्छास्त्रीये विषये विवादः समजनि। विवादे चात्र मुरादाबादस्थाः पण्डितप्रवरटीकारामशास्त्रिणो मध्यस्था आसन्। तैश्च सुखानन्दपक्षः समर्थितः। गुमानिना दृष्टं यत् साग्रहमेभिरस्य पक्षपोषणं क्रियते अतस्तत्कालमेव श्रीशास्त्रिणमुद्दिश्योक्तम्—

चन्दनकर्दमकलहे भेको मध्यस्थतापन्नः।
ब्रूते पङ्कनिमग्नः कर्दमसाम्यं न चन्दनं लभते॥

श्रीगुमानी नैसर्गिकः कविरासीत् किन्त्वस्य स्वाभाविकं चाञ्चल्यमेवमासीत् यत् कस्यापि विषयस्य विस्तारोऽस्मै न रोचते स्म। यदा कदापि यः कोऽपि विचारोऽस्य मनसि प्रादुरभवत् तमेव सरसैः पद्यैर्निरबध्नात् लिलेख च, संस्कृते, हिन्दी—नेपाली—कूर्माचलीभाषासु च शतशः स्फुटपद्यानि गुमानिप्रणीतानि प्राप्यन्ते। एतादृशस्याशुकवेः कृते स्वकीयसर्वरचनानां संकलनं न सुशकम्, यतो हि तेषां जीवनमेव काव्यमयं भवति। अतो नानेनापि स्वकीया रचनाः संकलिता आसन्. या कापि रचना येन केनाप्युपलब्धा सा तेनैव गृहीता।

यद्यप्यनेन न कोऽपि महान् ग्रन्थो व्यरचि तथापि विनोदिस्वभावतया मधुरव्यङ्ग्यानां सजीववर्णनक्षमतया चायं कूर्माचले इयतीं प्रसिद्धिमाप यदद्यापि तत्र कश्चित् शिक्षितोऽशिक्षितो वा जनः गुमानिकवेर्द्वित्रिपद्यान्यवश्यं जानाति। श्रूयते पटियालानरेशस्य श्रीकर्णसिंहस्य प्रशस्तौ सप्तसर्गात्मकम्, अलवराधीशस्य श्रीवनेसिंहदेवस्य नीतिप्रियतायां पञ्चसर्गात्मकं, नाहनपतेः श्रीफतेहशाहस्य सुप्रबन्धविषये सर्गत्रयात्मकं काव्यमनेन व्यरचीति। किन्तु कानिचित्स्फुटपद्यानि विहाय नास्माभिरन्वेषमाणैरपि तत्काव्यत्रयमुपलब्धम्। स्वर्गीय पं०देवीदत्त-पाण्डेयेनास्य कवेः काव्यसंग्रहः यावदुपलब्धः १९५३ वैक्रमे प्राकाश्यं नीतस्ततोऽन्येभ्यश्च जनेभ्यो याः काश्चन रचनाः श्रोतुमुपलब्धास्ता एव संकलय्यास्माभिः "श्रीम०म०नित्यानन्दपन्तपर्वतीयस्मारकसमितितः" शीघ्रमेव प्रकाशयितुं प्रयत्नः क्रियते। तत एव सांप्रतं तदीयरचनानां संक्षेपेण परिचयोऽत्र दीयते।

अयं च कविश्चरमकोटिको भक्त आसीत्। भक्तिविषयिण्योऽस्य रचनाः सन्ति—

(१) रामनामपञ्चाशिका—अत्र ५५ पद्यैः रकारादिरामनाम्नां संग्रहो-वर्तते, यथा—

रामो रावणमर्दनो रघुवरो रुद्रप्रियो राघवः
राजेन्द्रो रणकर्कशो रविकुलोत्तंसो रमानायकः।
रत्नालंकरणो रहस्यचतुरो रुच्याकृती रूपवान्
रोचिष्णू रुचिराम्बरो रुचिकरो रञ्ज्यत्प्रजो राज्यदः॥ इति।

(२) रामनामविज्ञप्तिसारः—३०पद्यैर्भगवत्समक्षं कृपायाचनाऽत्र कृता। यथा—

परस्य परमेशितुस्तव निसृष्टलोकस्थिते—
र्न सन्ति कति मादृशा जगति दीनदासेरकाः।
मम त्वभिमतो भवान् प्रभुरनन्यसाधारणो—
विधोः कुमुदकोटयो न कुमुदस्य नैको विधुः॥ इत्यादि।

(३) भक्तविज्ञप्तिसारः—अत्र १०१ पद्यैः भगवच्चरणारविन्दयोर्भक्तस्यात्मनिवेदनं प्रस्तुतम् । यथा—

देहं विदेहतनयाधिपते मदीयं सा संश्रयिष्यति यदा तु जरा वराकी।
हा हन्त हन्त मम जर्ज्जरितेन्द्रियस्य त्वत्तः परः शरणदो भविता तदा कः॥

(४) भक्तिविज्ञप्तिसारः—अत्र १२६ श्लिष्टपद्यैर्भक्ते विज्ञापना कृता। यथा—

लुप्तोपमा भवघ्नी ज्ञानातिशयोक्तिषु प्रतीपसमा।
दीपकदीप्तिरिवोच्चैर्विहिततमोऽपह्नुतिर्भक्तिः ॥१॥
छन्दोऽन्विता रसाप्ता सदलङ्कारा विरामभावमिता।
गुणहारिणी सुधीभिः सुभगा भक्तिः सुकवितेव ॥२॥

(५) पञ्चपञ्चाशिका—अत्र ५५ पद्यैरुपनिषदां सारो विवेचितः उपसंहारे स्वयमेवोक्तं कविना—

समाधिविधिमन्तरा त्वरितमात्मबोधैषिणां
नितान्तमुपकारिणी कृतधियां मनोहारिणी।
महोपनिषदर्थसंजनिततत्त्वविद्योतिनी
गुमानिरचिता चिरं जयति पञ्चपंचाशिका॥

(६) रामाष्टपदी—अष्टपदीगाने रामस्तुतिरियं यस्याश्च ध्रुपदम्—

भज-भज भुवनाधारं स्मर जगदाधारम्।
दशरथराजकुमारं धृतमनुजाकारम्॥

(७) गङ्गार्याशतकम्—१०१ आर्याभिर्भगवत्या जाह्नव्या अतीवभावपूर्णा स्तुतिरत्र प्रस्तुता। उक्तं चोपसंहारे—

इतिदेवदीर्घिकायाः सुदीर्घसन्तापशमनशीलायाः।
स्तवमार्याशतघटितं व्यधाद्गुमानी मुदे विदुषाम्॥

(८) जगन्नाथाष्टकम्—नवभिः पद्यैरतिललितैर्जगन्नाथस्तुतिरत्र, उक्तं चोपसंहारे—

किमन्यैस्तपोभिर्न्न सैरध्वरैर्वा किमेकाग्रतासाध्यनिष्ठैश्च योगैः।
भजध्वं जगन्नाथपादारविन्दं हृदा नित्यमित्याह वाक्यं गुमानी॥

(९) दण्डकानि—पृथक् पृथगेकेन द्वाभ्यां वा दण्डकाभ्यां विभिन्नदेवानां स्तुतयः सन्ति, सरस्वतीदण्डकं यथा—

या पराह्लादनं गीतसंपादनं वल्लकीवादनं कल्पयन्ती जवात्।
भक्तहृच्चारिणी भव्यविस्तारिणी भूयसी हारिणी मण्डलादैन्दवात्।
यत्तनुध्यानतो नाधिगम्यानतो ज्ञानमज्ञानतो मुच्यतेऽन्तर्गतात्।
सा निसर्गत्वरं जिह्विकाचत्वरं प्राप्य नः सत्वरं भारती नृत्यतात्॥

यद्यप्यस्य कवेः सर्वदेवविषयिणो समैव धीस्तथापि रामे विशेषतोऽस्य पक्षपातः। अतएव भक्तिसंबद्धास्वस्य कृतिषु रामस्यैव प्राधान्यम्। एतच्चानेन स्वयमेवोरीकृतं स्वकीये भाषाचतुष्टयनिबद्धे पद्ये—

बाजे लोग त्रिलोकिनाथ शिव की पूजा करैं तो करैं। (हिन्द्याम्)
क्वे क्वे भक्त गणेश का जगत मैं बाजा हुनी त हुन्॥ (पर्वतीय०)
राम्रो ध्यान भवानिका चरण में गर्च्छन् कसै लै गरुन्। (नेपाली०)
धन्यो मातुलधामनीह रमते रामे गुमानी कविः॥ (संस्कृते)

भक्तप्रवरोऽप्ययं बहुमुखीनप्रतिभासंपन्नः परमव्यवहारपटुर्नीतिकुशलश्चासीदितित्वेतस्य निम्नाङ्किताभ्योरचनाभ्यः स्फुटं ज्ञायते।

(१०) हितोपदेशशतकम्—१००आर्यापद्येषु शतोपदेशाः प्रत्युपदेशं च दृष्टान्ततयैकान्तःकथा इतिहासप्रसिद्धोपनिबद्धा। यथा—

मृगयारतः प्रसेनो विघटितसेनोऽटवीमटन्नेकः।
केसरिणा विनिजघ्ने 'नैकाकी संचरेद्विपिनम्' ॥१॥
शिवलिङ्गान्तमलब्धं लब्धं विधिनेति कामधुक् प्राह।
अथ निन्द्यमाप शापं 'न विदध्यात् कूटसाक्षित्वम्' ॥२॥

(११) दुर्जनदूषणम्—विभिन्नैश्छन्दोभिर्दुर्जनस्य प्रताडनात्र क्रियते।

(१२) ज्ञानभैषज्यमञ्जरी—अशीतिपद्यैः प्रतिपद्यं पूर्वार्धे तत्त्वज्ञानमुपवर्ण्योत्तरार्धे दृष्टान्ततयैका रोगशमन्योषधीरुपवर्णिता—

आद्यो दुष्कृतदुःखाद् धर्मः सन्त्रायते दयोपेतः।
मूत्रकृच्छ्राद् द्राक्षा ससिता यवक्षारः ॥१॥
अनुचितमिदं शमाढ्यो हृत्संतोषो न शोकहरः।
इदमप्यनर्हमार्द्रास्वरसो गुद्वाढ्यो न शोथहरः ॥२॥

अत्रेदं विशेषेणावधेयं यद् भिषक्त्वमस्य कवेः परम्पराप्राप्तमासीत् । अतएवानेनात्र कठिनतराणामपि रुजां सरलाः सुलभाश्चौषध्यो निर्दिष्टाः, प्रार्थिताश्चान्ते पाठका यदेतासामवश्यं परीक्षा कर्तव्येति ।

(१३) **समस्यापूर्त्तय** :—अयमत्यन्तं विनोदप्रिय आसीत्, चमत्कारिण्योऽस्य व्यङ्ग्योक्तय उपलभ्यन्ते, संस्कृत-हिन्दी-नेपाली-पर्वतीय-भाषासु प्रायः १५० समस्यापूर्त्तयोऽस्य लभ्यन्ते या अतीव उपदेशप्रदा मनोरञ्जिन्यश्च सन्ति । यथा—

**यस्मिन् देशे निर्गुणे निर्विवेके न क्वापि स्याद्वेदशास्त्रस्य चर्चा ।**
**प्राज्ञः प्रज्ञाहीनवत्तत्रतिष्ठेद् 'कीजै कागे देश में आँख काणी' ॥**
**रण्डा बालियुवतिरश्रीका सुग्रीवोत्सुकयाऽभीका ।**
**तारा वेषमकृत निर्ह्रीका 'नकटी नाक चँदन को टीका' ॥**

एवमेव संन्यास्युदासिनानकपन्थीनाथसांईमौलादीनां साम्प्रदायिकसाधूनां स्वरूपवर्णनम्, पर्वतीयप्राकृतिकदृश्यवर्णनं चास्य प्रचुरविनोदप्रियत्वं स्फुटयति, (१४, १५, १६) एतदतिरिक्तमनेन **तिथिनिर्णयः, कालनिर्णयः, अशौचनिर्णयः** इत्याख्यं धर्मशास्त्रीयं ग्रन्थत्रयमुपनिबद्धम्, त्रयाणामेव खण्डितमातृका अस्माभिरुपलब्धा ।

चरमकोटिकभक्तस्य, प्रकाण्डविदुषः परमव्यवहारपटोरत्यन्तविनोदप्रियस्य चास्यैकमहत्त्वपूर्णमन्यत्स्वरूपं वर्तते यदयमुग्रः राष्ट्रवादी कविरासीत् । एतज्जीवनसमय एव कूर्माचलप्रदेशोऽङ्गरेजराज्यान्तरपतत्, भारते वैदेशिकं शासनमस्य कृते महद्धृच्छल्यमभवत् अयमङ्गरेजान् 'फिरङ्गी' इति वदति, स्वकीयसंस्कृत-हिन्दीरचनासु अनेन बहुशस्तेषां भर्त्सना कृता । अस्य भावा द्रष्टव्या—

**न वेदकुशलं न च स्मृतिविदं न तन्त्रोद्धुरम्**
**न शास्त्रविहितश्रमं न समधीतसाहित्यकम् ।**
**लिखन् पठति यावनीं य आङ्गरेजीं लिपिं**
**तमेव बत मन्यते बुधजनं फिरङ्गी जनः ॥**

**न वेदपथवर्तिता न सदसद्विवेको नृणां**
**न वर्णपृथगात्मता भवति नाश्रमाणां स्थितिः ।**
**न मूर्खजनगर्हणा न गुणशालिलोकार्हणा**
**फिरङ्गिणि महीपतौ विजयते कृतार्थः कलिः ॥**

एवमेव हिन्दीपद्येष्वपि—

विद्या की जो बढ़ती होती फूट न होती राजन में
हिन्दुस्तान असंभव होता बस करना लख वरसन में।
कहे गुमानी अंगरेजन से करलो चाहो जो मन में
धरती पर नहिं बीर बीरता तुम्हें दिखावे जो रन में॥

( १७, १० ) फिरंगिराज्यवर्णनम्, लाटद्वयप्रकरणम्—इति द्वये अंगरेज-शासनव्यवस्थायाः समीचीनं वर्णनमनेन कृतम्।

एवमेव सद्रङ्गाष्टकम् गंजीफाविधिः, चतुःसारिकावर्णनम् इत्यादि स्फुट-रचनाभिः शतरञ्जादिक्रीडाविधिः संस्कृतपद्यैः सम्यगुपवर्णितः, हिन्दीभाषा-पर्वतीयभाषयोर्निर्मितान्यस्य बहूनि पद्यानि विद्यन्ते।

एवं सततसारस्वतसाधनारतोऽयं महाकविः ५६ वर्षवयस्कः सं० १९०३ वैक्रमे दिवं जगाम। सांप्रतं चास्य पञ्चमं युवापत्यं विद्यते। इति शम्[1]

●

१. लेख एष वाराणस्या अभिनवसंस्कृतकविसमीक्षासंस्थाया 'आन्वीक्षिक्या' दिसम्बर (७०) मासे सम्पन्न उपवेशने पठितः आलोचितश्च।

# महाकविर्मालवीयः तत्काव्यं च

## श्रीरहसविहारी द्विवेदी

एतस्मिन् विंशेऽपि शतके संस्कृतकाव्यप्रणयने गतिरोधो नास्ति । स्वातन्त्र्यात् परमिदानीं महाकाव्य – खण्डकाव्य-रूपक-निबन्ध-उपन्यास – लघुकथा-बोधकथा-रेडियोरूपक-हासकविताद्यनेकरूपेण संस्कृतसाहित्यस्य भूयान् विकासो जातः ।[१] दशकेऽस्मिन् (१९६१–७०) डॉ०सत्यव्रतशास्त्रिणो 'बोधिसत्वचरितम्' सुधीसुधानिधेः पं० काशीनाथद्विवेदिनो 'रुक्मिणीहरणम्', सनातनस्य डॉ० रेवाप्रसादद्विवेदिनः 'सीताचरितम्', पण्डितस्य उमाशङ्करशर्मणः 'छत्रपतिमहाकाव्यम्', पण्डितब्रह्मानन्दशुक्लस्य 'नेहरूचरितम्', पण्डितविन्ध्येश्वरीप्रसादशास्त्रिणो 'महर्षिज्ञानानन्दचरितम्', पण्डितपरमेश्वरदत्तत्रिपाठिनो 'रक्ताक्तहिमालयः', पण्डितविष्णुदत्तशुक्लस्य 'गङ्गासागरीयम्', पण्डितप्रभुदत्तशास्त्रिणो 'गणपतिसम्भवम्', म०म०पण्डितच्छज्जूरामशास्त्रिणः 'परशुरामदिग्विजयः' पण्डितसुबोधचन्द्रपन्तस्य 'झाँसीश्वरीचरितम्', अन्यानि चैवंविधानि काव्यानि निर्मितानि तत्र पण्डितस्य श्रीरामकुवेरमालवीयस्य मालवीयमहाकाव्यमपि वर्त्तते । काव्येऽस्मिन् काशी हिन्दूविश्वविद्यालयसंस्थापकस्य महामनसः पण्डितस्य श्रीमदनमोहनमालवीयस्य वर्णनमस्ति ।

श्रीमालवीयकाव्यकर्त्तुः पण्डितरामकुवेरमालवीयस्य जन्म पवित्रब्राह्मणकुल उत्तरप्रदेशे प्रयागमण्डलान्तर्गतकड़ानामके स्थाने ९–१–१९०६ तिथावभूत् । कवेरस्य पिता काव्यतीर्थः पण्डितबद्रीनाथमालवीयः । कुले परम्परातः संस्कृतज्ञा आसन् अतः स्वभावतया संस्कृतेऽभिरुचिर्जाता । सुल्तानपुरे श्रीदेवतादोनशर्मान्तिके द्वादशवर्षैर्व्याकरणमध्यमाप्रथमखण्डं यावदध्ययनं कृत्वा पश्चात् पण्डितश्रीकालिप्रसादमिश्रादपि अधीते स्म । तदनन्तरं काशीमुपेत्य कविनानेन हिन्दूविश्वविद्यालयतः मध्यमा, शास्त्री, साहित्यशास्त्राचार्यः, व्याकरणशास्त्राचार्य, बी० ए, एम्० ए० इत्येत उपाधयोऽपि लब्धाः । १९६६ ई० वर्षे सनातनधर्ममहामण्डलमस्मै 'साहित्यालङ्कार' पदवीमपि प्रायच्छत् ।

---

१. एतदर्थं द्रष्टव्यः 'स्वातन्त्र्योत्तर काल में संस्कृतसाहित्य का विकास' इतिनामा १९६८ वर्षे सागरविश्वविद्यालये उपाध्यायनिर्मलया प्रस्तुतः शोधप्रबन्धः ।

कविरसौ काव्यस्य मङ्गलाचरणे स्वगुरुवन्दनाप्रसङ्गे तेषां नामोल्लेखमेवं करोति—

श्रीकालिकाचरण-पङ्कज-मत्तभृङ्गं
श्रीकालिकाचरणरेणुविभूषिताङ्गम् ।
साहित्यहंससमधिष्ठितमानसं तं
शेषावतारगुरुचन्द्रधरं नमामः ॥
यस्य प्रसादवशतः प्रभवन्ति शिष्याः
शास्त्राब्धिपारगमने पटुसेतुबन्धाः ।
काशीप्रकाण्डबुधताण्डवपण्डितं तं
कालिप्रसादगुरुमद्य वयं भजामः ॥
येनोदितामम्तगर्भगिरं निपीय
शब्दागमेषु विहरन्ति सुखेन बालाः ।
तं बुद्धिसागरगुरुं बहु देवताद्यं
दीनं पदार्थमणिदीप्तमुखं नमामः ॥

मालवीयकाव्ये—१।७,६-१०

अध्ययनानन्तरं हिन्दूविश्वविद्यालयस्य प्राच्यविद्याधर्मविज्ञानसङ्काये साहित्य-विभागे १९३२ ई०तोऽध्यापक-सहप्राध्यापक-प्रवाचकाध्यक्षपदमलङ्कृरिष्णुरयं १९६३ ई० तः १९६७ ई० यावत् वाराणसेयसंस्कृतविश्वविद्यालयस्य साहित्य-विभागाध्यक्षपदमलञ्चकार । तदैव द्वादशसर्गं यावत् काव्यमिदं रचयामास। काव्यस्यैकादशसर्गानन्तरं विषय एष कविनानेनैवं संकेत्यते—

वाराणसीसंस्कृतविश्वविद्यालयीयसाहित्यविभागसिन्धौ ।
अध्यक्षचन्द्रत्यधुना सलीलं श्रीमालवीयः कवितांशुजालैः ॥ माल० ११

सेवामुक्तः सम्प्रति वाराणस्यां लङ्कानामके स्थाने स्वकीयमालवीयभवने निवसति । अस्य कवेरन्याः रचनाः—

तीर्थयात्राप्रहसनम् चैतन्यचन्द्रोदयः, ध्वन्यालोकस्य हृदयाञ्जनानाम संस्कृतटीका, विक्रमाङ्कदेवचरितस्य संस्कृतटीका च । स्फुटाः श्लोकाः साहित्यिका निबन्धाश्चाप्यस्य कतिचन सन्ति ।

अस्य सरलं स्वभावं कवित्वं च निरूपयता डॉ० रेवाप्रसादेन द्विवेदिना व्यक्तिविवेकस्य स्वकीये हिन्दीभाष्ये कवेरस्योल्लेख एवं सादरं क्रियते—

मल्लः शरीरेण हृदा म्रदीयान् सारल्यसौजन्यनिधिर्महीयान् ।
कविर्महान् रामकुबेरनामा स मालवीयश्च बुधो गरीयान् ॥

श्रीमालवीयकाव्यं १९६५–६६ वर्षे धारावाहिकरूपेण काशीहिन्दूविश्वविद्यालयस्य प्रज्ञानाभ्यां पत्रिकायां द्वादशसर्गमात्रं प्रकाशितं वर्तते। सर्गद्वयं शीघ्रमेव मुद्राप्यमाणमास्ते। पञ्चविंशत्या सर्गैरस्य पूर्तये कवेर्योजना। मङ्गलाचरणपुरःसरं काव्यारम्भः कृतः। महामनसो मदनमोहनमालवीयस्य कुलवर्णनं, प्रयागवर्णनं, मालवीयकुलस्य सद्धर्मतावर्णनं, मालवीयशैशवं, तस्याध्ययनाध्यापनं, काशीवर्णनं, काशिराजं प्रति मालवीयगमनं, हिन्दूविश्वविद्यालयनिर्माणप्रस्तावः, दानमहिमवर्णनं, काशिराजाश्वासनं, काश्यामेव गङ्गातटे विश्वविद्यालयस्थापनं, गणेशरूपवर्णनपूर्वकं तस्य स्तवनं, मालवीयस्य रामेश्वरसिंहराजधानीं मिथिलां प्रति गमनं, नानाविधैर्भावैर्मालवीयस्य स्वरूप-चन्दनटीका-श्मश्रु-नासिका-उत्तरीय-वर्णनम्, रामेश्वरसिंहवर्णनं, विश्वविद्यालयनिर्माणाय रामेश्वरसिंहस्वीकृतिवर्णनमेत्येतानि वर्णनानि प्रथमतो द्वादशं सर्गं यावद् वर्तन्ते। कुत्रचित् सर्गान्ते श्रीहर्षवत् स्वकीयः परिचयो दत्तः, क्वचिच्च सर्गानन्तरं सामयिकं वर्णनं कृतम् यथा एकादशसर्गानन्तरं वाराणसेय-संस्कृतविश्वविद्यालयस्य साहित्यविभागस्य दशमसर्गानन्तरं कवीनामुल्लेखःस्तत्र प्रायेण वाराणसेयाः कवयः वर्णितास्तथापि प्रसङ्गोऽयं महत्त्वपूर्णः।

काव्येऽस्मिन् विलसन्तीनां सूक्तिविलासिनानां पेशलानि परिस्पन्दितानि भृशं सचेतसां चेतांसि रमयन्ति। प्रेक्ष्यन्तां कतिपयानि—

**ये साधवः किमपि कारणमन्तरेण सर्वोपकारकरणाय सदा यतन्ते।**
**विघ्नान्निरस्य दृढनिश्चयकार्यलग्ना ते सन्ततं भुवि जयन्ति नितान्तरम्याः॥**

माल० १।२१

ये साधु गौरवमुपेक्ष्य वदन्ति किञ्चित्
शंसन्तु ते किमपि तान् प्रति मे प्रणामाः।
ते वस्तुतस्तु सुजनाः भुवि वन्द्यपादाः
हारानिवोज्ज्वलगुणान् हृदि ये वहन्ति॥

माल० १।२३

काव्यमिदं भारतीयसंस्काराप्यायितोदात्तया तापःपूतया चमत्कृतिसहितया कविकल्पनया सम्वलितं सत् कवेरस्य नैपुण्यं द्योतयति। अथाप्ययं स्वाभिमानं परिहरति—

श्रीमालवीय--सुचरित्र--विचित्र—गाथाः
किं वर्णयामि मधुराः परमार्थरम्याः।
यस्मादहं नहि कविर्नहि शास्त्रदक्षो
नैव प्रगल्भमतिमांश्चतुरः कलावान्॥ माल० १।२४

मालवीयचरितवर्णने स्वकीयं जीवनं सफलं मन्वानो लिखति—

नृणां जगत्त्रयपवित्रचरित्रभाजां
संकीर्तनेन सफलं मम जीवनं स्यात्।
शास्त्रं सुचिन्तितमहो सदसद्विवेको
बुद्धिस्सुनिर्मलतरा रसना पवित्रा ॥
माल० १।२५

कविरयं स्वकीयं देशमार्यसंस्कृतिगृहं पृथ्वीतलस्य मुकुटं च मन्यते—

पृथ्वीतलस्य मुकुटं नरकर्मभूमिः
सौभाग्यबिन्दुतिलकं नु वसुन्धरायाः।
आद्यार्यसंस्कृतिगृहं परमाभिरामं
तद्भारतं विजयते सकलाभिनन्द्यम् ॥ माल० १।३१

श्रीमालवीयस्य कुलस्य श्रुतिस्मृतिप्रोक्तधर्मनिष्ठत्वमेव चरित्रशुद्धेः कारणं वीक्ष्यते—

न वञ्चका नाऽपि परोपतापा न चापि धूर्ता न च निन्दकास्ते।
न लोलुपाश्चापि न चञ्चलास्ते न स्वार्थिनस्ते न च पापशीलाः ॥
जितेन्द्रियाः शास्त्रपरायणास्ते सतां समाराधनतत्परास्ते।
आदर्शवृत्ता रमणीयवाचः कलासु सर्वासु महाप्रवीणाः ॥
माल० १।३६-३७

अत्र तीर्थराजस्य प्रयागस्य वर्णनं सत्यपि रघुवंशीये वर्णने कस्य सचेतसश्चित्तं न चोरयति—

श्रीकृष्णकृष्णतनुमिश्रितराधिकाङ्ग—गौरप्रभा सुरधुनी यमुनातरङ्गैः।
वक्षःस्थले मधुरिपोरतसीसुमाभे मुक्तावलीव धवला सुविभाति यत्र ॥
उल्लास्यमानमलिके शरदिन्दुशुभ्र-कस्तूरिकातिलकभूषणमायताक्ष्याः।
कश्मीरदेशललनामुखपुण्डरीकं नीलावगुण्ठनपटान्तमिवेक्ष्यमाणम् ॥
माल० १।४५।५०

काश्यां मरणान्मुक्तिः किन्तु प्रयागस्य—

'भक्त्या युतं दर्शनमेव सम्यक्
सम्पूरयत्येव मनीषितानि ॥ माल० १।६३

कविः काशीमपि भृशमाद्रियते—

विद्याखनिस्थानमियं हि काशी प्राचीनकालादिति सम्प्रसिद्धम् ।
विद्वद्वराणां किल मातृभूमि—र्विद्यार्थिभिः काममुपासनीया ॥

माल० ४।३६

गङ्गातरङ्गानिलसङ्गपूता वाराणसी पुण्यभृतामुपास्या ।
मुक्तिश्रियोर्मंजुलवैजयन्ती सौभाग्यसिद्धिर्नु वसुन्धरायाः ॥

माल० ४।३८

काशीपुरी भगवतः करुणामयीयं मूर्तिः शिवस्य नवमी किमु सिद्धिरेव ।
मुक्तिःस्वयं प्रकटिता नु शरीरिणीयं विद्यामयी तनुरियं किमु चन्द्रमौलेः ॥

माल० ७।५

कविः श्रीमालवीयं न केवलं गुरुमेव मन्यतेऽपितु तं प्रति तुलसीदासस्य रामवत् सश्रद्धं भक्तिभावं बिभर्ति। सहृदयानां कृते भक्तिरसप्रवणतामप्याविष्करोति। श्रीमालवीयाकृतिस्मरणात् क्षणमपि न विरमति, मुहुर्मुहुर्नरपुङ्गवस्य स्वभावस्वरूपादिकं नानाविधं वर्णयति। भारतीयसंस्कारयुक्तयोः कविचरितनायकयोर्योगः सौभाग्यादेव। प्रतिभावतां भारतीयानां कवीनां वैशिष्ट्यमेतद् यच्चरितनायकादर्शनेऽपि तद्वर्णने सजीवत्वं प्रथयन्ति। कविरेष चरितनायकस्य न केवलं दर्शनं तद्गुणश्रवणं वा अपितु तस्मादध्ययनं तस्य कुलपतित्वेऽध्यापनमपि कृतवानस्ति। अतएव कथाप्रवाहं परित्यज्य तस्य स्वरूपवर्णने भृशं निमग्नः सन् सर्गत्रयं वितनोति। श्रीमालवीयस्वरूपवर्णने तस्योज्ज्वलं तपःपूतं व्यक्तित्वं समुन्मीलितं वस्तुतोऽत्र भारतीया संस्कृतिर्नरीनृत्यन्ती विलसति। एतादृशं नायकस्वरूपवर्णनं संस्कृतसाहित्ये निष्प्रतिममेव। प्रेक्ष्यन्तां कानिचिदुद्धरणानि—

श्रीमदनमोहनमालवीयं सत्यात्मबलभक्तिक्रियाशास्त्रावबोधैः सहितं ब्रुवाणस्तं पञ्चपाण्डवानां समष्टिरूपं चित्रयति—

सत्ये युधिष्ठिर इवात्मबले तु भीमो भक्तो नृपार्जुनसमो नकुलः क्रियासु ।
शास्त्रावबोधनिपुणः सहदेव एव एकोऽवतार इव पाण्डवपञ्चकस्य ॥

माल० ३।१०

काशिराजः सहसाऽऽगतं श्रीमालवीयमेतादृशं पश्यति—

सौन्दर्यसारं स्पृहणीयशोभं शिवस्वरूपं घनसारगौरम् ।
उष्णीषबन्धं शुभमुत्तमाङ्गे भाले सितं चन्दनमावहन्तम् ॥
समुज्ज्वलं कान्तपवित्रवेशं श्रीमालवीयं द्विजराजवर्यम् ।
निरीक्ष्य राजा सहसाऽऽगतं तं स विस्मयाद्विस्मयमाससाद ॥

माल० ५।५,६

काव्येऽस्मिन् नवम-दशमैकादशर्गेषु श्रीमालवीयस्वरूपवर्णनमेवास्ति । अत्र कवेरालङ्कारिकताया नवनवोन्मेषशालिन्याः प्रतिभायाश्च परिचयः प्राप्यते। सादृश्यसम्भावनार्थातरन्यासयोजनासु निपुणोऽयं कविः । अत्र तत्कृतानि वर्णनानि प्रमाणम् । तत्र उष्णीषवर्णनम्—

अब्धेः पारं विहाराय गत्वा स्नेहान्निवर्तितम् ।
यशोहंसं सितोष्णीषव्याजात् स शिरसा वहन् ॥
गौराङ्गपाशबद्धाया मातृभूमेर्जयप्रदाम् ।
स्वातन्त्र्ययुद्धसेनायाः वैजयन्तीं श्रितामिव ॥ माल० ९।१३,२३

चन्दनबिन्दुः—

विश्वविद्यालयस्य प्राग्विशाले निजमस्तके ।
रूपरेखां विनिर्णीतामौत्कस्यादुद्धृतामिव ॥
यवनानामिसाईनां धर्मपङ्के निमज्जतः ।
हिन्दूसमाजचक्रस्योद्धारिकां शक्तिमुद्धुराम् ॥
कामक्रोधेन्धनं ज्योतिःस्नेहाभावेऽप्यचञ्चलम् ।
दीपं त्रिभुवनाज्ञानध्वान्तस्य विनिवर्हणम् ।
माल० १०।३–४, २८

श्मश्रुवर्णनम्—

कामक्रोधादिसम्पर्काद् वाणीं संशोध्य तत्क्षणम् ।
समाख्यातुं सभामध्ये सम्मार्जनकुशाः किमु ॥
पश्चात्योपप्लवत्रस्ता शरण्यं तन्मुखाश्रिता ।
शुक्लवेणीयुतेयं किं वृद्धा प्राचीनसंस्कृतिः ॥ माल० ११।५, १४

नासिका—

नेत्रद्वयीप्रियसखीपरिपाल्यमाना
भ्रूवल्लरीपरिनियन्त्रितसाधुभावा ।
नासाच्छलेन वदनेऽस्य विराजमाना
किं कान्तिपट्टमहिषी मुखमण्डलस्य ॥ माल० ११।३२

उत्तरीयवर्णनम्—

मालवीयोन्तरीयस्योभयप्रान्तच्छलेन किम् ।
विवेको विनयश्चैवोभयपार्श्वे सदा स्थिरौ ॥
भुजद्वयमपर्याप्तं भिक्षाग्रहणकर्मणे ।
इति मत्वेव किञ्चान्यद् भुजद्वयमिदं कृतम् ॥
मालवीय ११।३९, ४७

एवं सर्गत्रयेण माघश्रीहर्षबाणभट्टकल्पनां पुनरुज्जीवयन्नपि प्रसादगुणसम्वलितं श्रीमालवीयस्वरूपवर्णनं समापयन् लिखति—

**इत्यद्भुतद्युतिसुवेषसमुज्ज्वलस्य, रत्नावतंस इवभारत मण्डलस्य ॥**
माल० ११।४९

काव्येऽस्मिन् स्वाभिमानिनः श्रीमालवीयस्य याचनाप्रसङ्गे दानमहिमानं समुपवर्णयन् ब्रूते—

**दानेन सर्वेऽपि महाप्रभावा अत्रापि तत्रापि समुज्ज्वलन्ति ॥** माल० ५।२४

श्रीमालवीयस्य याचना जीवनयापनाय नासीत्, अपि तु लोकहितायैव। अतएव स काशिराजं निवेदयति—

**यतो महाराज भवान् सदैव जगद्धृते कर्मणि जागरूकः।**
**याञ्चा ममैका भवतः पुरस्तात् सुपावनी लोकहिता मनोज्ञा ॥**
माल० ५।२८

सर्वात्मना स्वधर्म एव श्रेयान् स्वीक्रियते। अतो विश्वविलालयस्थापनाय काश्यां गङ्गातट एवं निश्चीयते—

**काश्यां गङ्गातटे हिन्दूविश्वविद्यालयो महान्।**
**स्थापनीयः प्रयत्नेन हिन्दूधर्माभिमानिभिः ॥** माल० ४।९
**छात्रा अध्यापका यत्र गङ्गातीरे समेत्य च।**
**प्रातः सायं सदा भक्त्या कुर्युः सन्ध्यां यथाविधि ॥** माल०७।३१

विदेशीयविज्ञानशिक्षणस्यावश्यकतां मन्वानोऽपि सनातनधर्माभ्युदयं हिन्दूनां विकासं च सर्वथा वाञ्छन् श्रीमालवीयः काशिराजं वदति—

**विश्वविद्यालयः कोऽपि नेदृशो वर्ततेऽधुना।**
**प्राधान्यं यत्र धर्मस्य हिन्दूनां परमं भवेत् ॥**
**अलीगढाख्ये नगरे विश्वविद्यालयोऽधुना।**
**विद्यते यवनानां नो हिन्दूनामस्ति कुत्रचित् ॥**
**परं मे साम्प्रतं राजन् विद्या नानाविधा भुवि।**
**योरोपदेशविख्याता विज्ञानस्य चमत्कृताः ॥**
**कला बहुविधास्सन्ति याः काश्यां नैव संस्थिताः।**
माल० ७।१८–१९, २२, २३

कविरयं काव्यशास्त्रमर्मज्ञोऽपि वर्ततेऽतः प्राचीनकवीनामुल्लेखे तेषां मूल्याङ्कनमपि करोति—

कविता कालिदासस्य गूढव्यङ्गकुचोष्मणा।
सत्यानन्दकरी माघे भारवौ भा रवेरिव॥
गुणानामपि दोषाणामागमे महतामपि।
निषेधे नैषधे कान्तिराक्षेप इव योषिताम्॥ माल० १।१८।१९

काव्यं प्रशंसन् लिखति—

स्वर्गेऽमृतं सुखकरं परमं पुराणं
नृणां तु किं फलमिहास्त्यमृतेन तेन।
काव्यामृतं तु यशसा वितनोति देहं
वार्धक्यमृत्युरहितं भुवि सत्कवीनाम्॥
काव्यामृतं नवनवं ललितं विलासं
स्फूर्तिं सदाप्यभिनवां कुरुतेऽनुरूपाम्।
कान्तावचोऽमृतनिभं मधुरं नितान्तं
चित्तप्रसादनकरं विदुषां वराणाम्॥माल० १।१३-१४

कविरेष प्रायेण सर्गान्ते स्वकीयं सङ्केतं विदधाति—

वाग्देवतामृदुरणन्मणिकिङ्कणीक—पादारविन्दमुखरीकृतहृत्कुटीरः।
श्रीमालवीयपदवीपरिलब्धमानः सोऽयं पुरो लसति रामकुबेरविज्ञः॥
माल० १।६५

तथान्यत्—

एषोहमद्य किल रामकुबेरनामा साहित्यसौरभमधुव्रतमालवीयः।
नत्वा गुरुं मदनमोहनमालवीयं काव्यात्मकं स्वकुसुमाञ्जलिमाहरामि॥
माल० ७।३८

काव्यमिदमेकतो भारतीयसंस्कृतेरनुपमं गायनम्, अपरतश्च कवेः रसपेशलतामालङ्कारिकतां च प्रकटयति। श्रीमालवीयकाव्यकारं पण्डितरामकुबेरमालवीयं प्रति सुकवेः डॉ०रेवाप्रसादद्विवेदिनः कथनमिदं सर्वथा समीचीनमेव—

श्रीमालवीया नितरां प्रवीणाः सादृश्यसम्भावनयोजनासु।
अर्थान्तरन्यासविधौ तु तेषां न साम्यलेशोऽप्यधुनाऽस्ति लोके॥

●

# पाणिनिप्रयुक्ता इच्छार्थकाः केचन शब्दाः

डॉ०जानकीप्रसादद्विवेदः

ज्ञानेच्छाक्रियेतिक्रमस्याङ्गीकारे इच्छानन्तरमेव कस्याश्चित् क्रियायाः प्रवर्तना जायते इत्यवगम्यते। इच्छा च क्वचित् कार्यविशेषेण क्वचिच्च शब्दोच्चारणेन परिलक्ष्यते। इच्छायां प्रकर्षोऽपकर्षश्च प्राणिनां स्वभाववशाज्जायेते, स्वभावमेवानुसृत्य सर्वेषां प्राणिनां तत्तत्कार्येषु प्रवृत्तिसत्त्वात्।

इच्छा भावः सङ्कल्पो वा। बुद्धीन्द्रियाणां कर्मेन्द्रियाणां च या हि प्रवृत्तिर्भवति सैवेच्छा। तस्याश्च मनसः संयोगेनाभिव्यञ्जनादिच्छाऽधिष्ठानं मन उच्यते। इन्द्रियाणां प्रवृत्तिभेदादिच्छाऽनेकविधा। इच्छायाः स्वभावा[1]नुकूलत्वात् 'स्वभावो मूर्ध्नि वर्तते' इति वचनं समाद्रियते। पतनादिक्रियाऽनुकूलपरिस्थितिपरिदर्शनादचेतनेष्वपीच्छा वर्तते इत्यस्ति वार्त्तिकका[2]रादेर्दर्शनम्।

महर्षिपाणिनिना इच्छासामान्यार्थे धातुभ्यो विकल्पेन सन्[3]प्रत्ययो विधीयते। इच्छाविशेषार्थेषु तत्र तत्र कार्यान्तराणि निर्दिश्यन्ते, तत्तदर्थानुकूलं कृतानां तेषां कार्याणां (विधीनाम्) दृश्यतेऽन्वर्थता। कामप्रवेदन–प्रहास–प्रीत्यादि–शब्दानां विचारे यथासम्भवमन्वर्थत्वं मया पूर्वं प्रादर्शि।[4] अत्र इच्छासामान्याभिधायिन आकाङ्क्षाशब्दस्य इच्छाविशेषाभिधायिनश्च आशिष्-शब्दस्य विचारानन्तरं कर्मव्यतिहार-भय-शब्दावपि विचार्येते, कर्मव्यतिहारे कस्यचिदिच्छाविशेषस्य परिलक्षितत्वात्, भयज्ञानस्य चाप्यनन्तरमात्मगोपनादिरूपेच्छायाः प्रवर्तनात्। तत्र—

---

१. अर्जुनमुद्बोधयता भगवता श्रीकृष्णेनेदं रहस्यमाविष्कृतम् यथोक्तं तेन—

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि (श्रीमद्भाग० ३।३३) इति।

२. सर्वस्य वा चेतनावत्त्वात् (म० भा० ३।१।७–१५ वा०)।

३. धातोः कर्मणः समानकर्तृकादिच्छायां वा (अ० ३.१।७)।

४. जयपुरतः प्रकाशिताया 'भारती'—संस्कृतमासिकपत्रिकाया एकोनविंश–वर्षीयेषु अष्टम-नवम-दशमाङ्केषु प्रकाशितोऽसौ लेखः।

## १—आकाङ्क्षा

आकाङ्क्षणम् = आकाङ्क्षा, सा च चेतनावतो धर्मरूपा। कस्यचित् सम्बन्धस्य यज्ज्ञानं तदेवाऽऽकाङ्क्षाशब्देनोच्यते, सम्बन्धश्च लक्ष्यलक्षणयोरपेक्ष्यते। लक्षणमपरिज्ञातस्य परिचायकं भवति। अपरिज्ञातं लक्ष्यं तेन लक्ष्यते इत्यर्थः। यथा दृश्यमानेन धूमेनापरिज्ञायमानो वह्निर्लक्ष्यते।

उक्तप्रकारयाकाङ्क्षया युक्तश्चेत् प्रयोक्ता भवति अर्थाद् यदि प्रयोक्ता लक्ष्यलक्षणयोः सम्बन्धमपेक्षते तर्हि अभिज्ञावचने (स्मृतिवाचके) उपपदे यच्छब्दसहिते केवले च विकल्पेन लृट्प्रत्ययो विधीयते महर्षिपाणिनिना[१]। यत्रैकेन धात्वर्थेन लक्षणं विज्ञायते अपरेण च धात्वर्थेन लक्ष्यम्, तत्र द्वयोर्धात्वर्थयोर्लक्ष्यलक्षणभावेन सम्बन्धे सञ्जाते प्रयोक्ता तद्विषयिणीमाकाङ्क्षां करोति। अयं च विशेषः—वासादिरूपं लक्षणमेवाऽऽपाद्य प्रयोक्ता नात्मनि सन्तोषमाधत्ते किञ्च भोजनादिरूपं लक्ष्यमपि स्मारयितुं स प्रवर्तते इति। यथा पूर्वं कृतं कश्मीरवासं स्मारयन् कश्चित् तत्र सम्पादितामोदनभक्षणक्रियामपि स्मारयति। तत्र प्रयुज्यते—'अभिजानासि देवदत्त यत् कश्मीरेष्ववसाम यत्तत्रौदनमभुञ्जमहि' इति। अत्र मन्ये—यदि प्रयोक्ता स्मरणकालान्तरमपि तत्रत्यशोभातिशयं पुनरीक्षितुं कश्मीरेषु वसितुमोदनं भक्षयितुं च कामयते, तर्हि तत्र भविष्यत्कालस्य प्रयोगोऽपेक्ष्यते इति क्रियते लृड्विधानमाचार्येण—'अभिजानासि देवदत्त! कश्मीरेषु वत्स्यामस्तत्रौदनं भोक्ष्यामहे' इति। इदमपि वक्तुं शक्यते—"कश्मीरगमनात् पूर्वं कश्चिद् देवदत्तं प्रत्युक्तवान्—कश्मीरान् गत्वा वयमोदनमवश्यं भोक्ष्यामहे' इति, तदेव पूर्वमुक्तं वचनं कश्मीरेभ्यो निवृत्य स्मारयन् स देवदत्तं प्रति वदति—'मया त्वं पूर्वमुक्तः, कश्मीरान् गत्वौदनं भोक्ष्यामहे' इति। तेनातीतकाले उक्तस्य वचनस्य स्मरणकाले यद्यपि लङ्लकारः प्राप्तस्तथाप्युक्तस्यैव वचनस्याऽऽवृत्तिर्यदि क्रियते तर्हि स एव लकारः प्रयोजनीयो यस्य पूर्वं प्रयोगः कृतः। अत्र च पूर्वं लृटि कथितं वचनं स्मरणकालेऽपि लृटैव पुनरुच्यते" इति।

क्त्वाप्रत्ययेनानन्तरमपि कस्याश्चित् क्रियायाः प्रवर्तनाय वर्तते आकाङ्क्षा, णमुल्प्रत्ययेन च कस्याश्चित् क्रियायाः पौनःपुन्येन सम्पादनाय वर्तते आकाङ्क्षा, तदभावे क्त्वाणमुल्प्रत्यययोर्निषेधः समीचीन एवेति महर्षिपाणिनिना "न यद्यनाकाङ्क्षे" (अ० ३।४।२३) इति सूत्रेण तत्प्रतिषेधः प्रदर्शितः।

---

१. विभाषा साकाङ्क्षे (अ० ३।२।११४)।
२. द्र०—न्यासादिग्रन्थाः (३।२।११४)।

बलवत्यामाकाङ्क्षायामुत्कर्षस्य विद्यमानत्वात् ( सत्त्वात् ) साकाङ्क्षस्य हि-शब्दयुक्ततिङन्तपदस्यच्छन्दस्यनुदात्तविधानं निषि[1]ध्यते। अनुदात्तः = अपकर्षः। अतएव 'अग्निर्हि पूर्वमुदजयत् तमिन्द्रोऽनुदजयत्' इत्यत्रोदजयदित्याद्युदात्तः प्र[2]वर्तते।

आकाङ्क्षायां गतिविशेषस्य परिलक्षितत्वाद् 'अङ्ग' इत्यनेन युक्तस्य तिङन्ताऽऽकाङ्क्षस्य भर्त्सने प्लुतो[3] विधीयते। प्लुतो मात्रिकद्विमात्रिकौ ह्रस्वदीर्घसञ्ज्ञकौ वर्णावतिक्रम्य प्लवते = गच्छति, तिस्रो मात्राः प्राप्नोतीत्यर्थः। यथा—अङ्ग कूज ३, अङ्ग व्याहर ३ इत्येतदुभयमपि 'इदानीं ज्ञास्यसि जाल्म' इत्येतद्रूपं भर्त्सनवचनमपेक्षते तस्मात् 'कूज-व्याहर' इति तिङन्तद्वयं प्लुतं लभते।

क्षियाशीःप्रैषार्थेषु गम्यमानेषु आकाङ्क्षस्य तिङन्तस्य यः स्वरितस्तस्य प्लुतो[4] विधीयते। यथा 'स्वयं ह रथेन याति ३' इति वचनं 'उपाध्यायं पदातिं गमयति' इत्यादिपदान्तरमपेक्षते, तेन क्रियते तत्र प्लुतविधानम्। क्षिया = आचारभेदः। स चाऽऽचारभेदः 'स्वयं ह रथेन याति' इत्येतावत्युक्ते नावगन्तुं शक्यते, परम् 'उपाध्यायं पदातिं गमयति' इति तदनन्तरमुक्तेन वचनेनैवेत्याचारभेदप्रदर्शनाय पूर्वोक्तं तिङन्तं नूनमुत्तरतिङन्तमप्यपेक्षते। एतेनाऽऽकाङ्क्षारूपगतिविशेषो यस्य परिलक्ष्यते तस्य प्लुतविधानमन्वर्थतामेव भजते।

## २—आशीः

आशंसनम् = आशीः। अप्राप्तस्य प्रियार्थस्य ( इष्टस्यार्थस्य ) प्राप्तुमिच्छेत्यर्थः। आशिषः प्रयोगो ज्येष्ठेन कनिष्ठं प्रति क्रियते, तेन ज्येष्ठस्य कनिष्ठं प्रति वात्सल्यं परिस्फुरति। उक्तं च—

---

१. छन्दस्यनेकमपि साकाङ्क्षम् ( अ० ८।१।३५ )

२. तिङ्ङतिङः ( अ० ८।१।२८ ) इत्यनेन प्राप्तस्य निघातस्य 'हि च' (अ० ८।१।३४) इत्यनेन प्रतिषेधात् क्वचिदेकस्य क्वचिच्चानेकस्य प्रतिषेधायोच्यते—छन्दस्यनेकमपि साकाङ्क्षम् (अ० ८।१।३५) इति। एकस्य तिङन्तस्य ( पूर्वस्थ—उदजयदित्यस्य ) निघातप्रतिषेधे 'आद्युदात्तश्च' ( अ० ३।१।३ ) इत्यनेनाऽऽद्युदात्तः।

३. अङ्गयुक्तं तिङाकाङ्क्षम् (अ० ८।२।९६)।

४. क्षियाशीःप्रैषेषु तिङाकाङ्क्षम् (अ० ८।२।१०४)।

"वात्सल्याद् यत्र मान्येन कनिष्ठस्याभिधीयते ।
इष्टावधारकं वाक्यमाशीः सा परिकीर्तिता ।।" इति

मङ्गलकामनाभिव्यक्तये प्रयुक्तयोराशिष्—वरशब्दयोरयं भेदः—वरस्य प्रदाने उक्तवचनस्य पूर्तिर्नियमतोऽपेक्ष्यते, ग्राशिषः प्रदाने तु न तथेति । गुरुजनैः प्रदत्त ग्राशीर्वादोऽपि वरदानस्वरूपोऽङ्गीक्रियते उक्तानुरूपस्य फलस्याधिगमात् । उक्तं च कादम्बर्यां बाणभट्टेन—

**आशिषो गुरुजनवितीर्णा वरतामापद्यन्ते**—( उत्त०, पृ० २६१ ) इति। ग्राशीर्वादेनामुष्याः क्रियायाः कर्ता भवेदित्येवमाशास्यते । यथा— 'जीवतात्, नन्दतात्' इति स्थले जीवनक्रियाया नन्दनक्रियायाश्चोद्दिष्टः पुरुषः कर्ता भवेदित्येवमाशास्यते । जीवनं नन्दनं ते भूयादित्यर्थः । कृताया मङ्गलकामनायाः ( ग्राशंसायाः ) फलं भविष्यत्काले प्राप्तुं शक्यते इति। भविष्यदर्थे ग्राशंसावाचिन्युपपदे धातोर्लिङ्[1] विधीयते । यथा—गुरुश्चेदुपेयादाशंसेऽधीयीय, ग्राशंसे क्षिप्रमधीयीयेति । लोटश्च विध्यादिरूपलिङर्थेषु विधानस्य दर्शनाद्[2] ग्राशीर्विशिष्टेऽर्थे वर्तमानाद् [3]धातोर्लिङ्, लोटोर्विधानमौचित्यमावहति ।

ग्राशंसनम् = कामप्रवेदनम् । तत्र वर्तमानया प्रबलाऽऽकाङ्क्षया गतिविशेषो विज्ञायते । तस्यैव प्रदर्शनाय ग्राचार्यः पाणिनिराशीर्वाचकस्याऽऽकाङ्क्षतिङन्तपदस्य प्लुतविधानं निर्दिशति—क्षियाशीःप्रैषेषु तिङाकाङ्क्षम् ( ग्र० ८।२।१०४ ) इति । यथा—सुतांश्च लप्सीष्ट ३ धनं च तात !, छन्दोऽध्येषीष्ट ३ व्याकरणं च भद्र ! इत्यादि ।

ग्राशीर्वादात्मकेनापि मङ्गलेन ग्रन्थस्य निर्विघ्नतया समाप्तिरङ्गीक्रियते ग्राचार्यैः । कविवरेण भट्टनारायणेन वेणीसंहारनाटके ग्राशीर्वादात्मकमपि मङ्गलमाचरितम् । तद्यथा—

---

१. ग्राशंसावचने लिङ् ( ग्र. ३।३।१३४ ) ।

२. विधिनिमन्त्रणाऽऽमन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्, लोट् च ( ग्र० ३।३। १६१, १६२ ) ।

३. ग्राशिषि लिङ्लोटौ ( ग्र० ३।३।१७३ ) ।

कालिन्द्याः पुलिनेषु केलिकुपितामुत्सृज्य रासे रसं,
गच्छन्तीमनुगच्छतोऽश्रुकलुषां कंसद्विषो राधिकाम्।
तत्पादप्रतिमानिवेशितपदस्योद्भूतरोमोद्गते—
रक्षुण्णोऽनुनयः प्रसन्नदयितादृष्टस्य पुष्णातु वः॥
( मङ्ग० श्लो० २ ) इति।

मनुस्मृतौ फलार्थे आशीःशब्दः प्रयुक्तः। तथाहि—

वेदोक्तमायुर्मर्त्यानामाशिषश्चैव कर्मणाम्,
फलन्त्यनुयुगं लोके प्रभावाश्च शरीरिणाम्।
( १।८४ ) इति।

यः सुखेनोच्चारणीयो मङ्गलसूचकश्च भवेत् तादृशेनाऽऽशीर्वादात्मकेन शब्देन स्त्रियो नामधेयं कार्यमिति धर्मशास्त्रीया[1] व्यवस्था। अनेन प्रकारेण श्रेयोऽधिकमवाप्यते।

## ३—कर्मव्यतिहारः

महर्षिपाणिनिना 'कर्तरि कर्मव्यतिहारे" ( अ० १।३।१४ ) इति सूत्रेणाऽऽत्मनेपदं विधीयते। कर्म = क्रिया, लोके कर्मशब्दस्य क्रियापरत्वात्, तस्य व्यतिहारः—विनिमयः। यत्रान्यस्य कर्तुरभीष्टां क्रियामन्यः कश्चित् करोति, इतरस्याभीष्टां चेतरः स कर्मव्यतिहारः।

अत्रोच्यते—कर्मशब्दस्य लोके क्रियापरत्वेऽपि शास्त्रे कृत्रिमाकृत्रिमयोः[2] कृत्रिमस्यैव ग्रहणमिति न्यायेन कृत्रिममेव कर्तुरीप्सिततमं कर्म कथं नाङ्गीक्रियते? इति। तत्रेदमवगन्तव्यम् क्रियाऽपि कृत्रिमं कर्म भवितुमर्हति। दृश्यते हि एकाऽपि क्रिया प्रार्थनादिक्रियान्तरैरीप्सिततमा भवति। यथा—विद्यावाप्ति-

---

१—स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम्,
मङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत्॥ ( मनु० २।३३ ) इति।

२—व्या० परि० वृ०, परि० ६।
अमुमेव न्यायं नागेशभट्टः शब्दान्तरैर्वक्ति—
लोकप्रसिद्ध्यपेक्षया शास्त्रप्रसिद्धिरेव बलवती, प्रकरणादिति भावः
( म० भा० प्र० उ० १।३।१४ ) इति।

रूपफलविषये पूर्वं कस्यचित् सङ्कल्पः, तदनु गुरुशुश्रूषादितत्साधनानुकूलोपायानां विचारः, ततः केषाञ्चिदुपायानां निश्चयः, निश्चये सति तत्करणाय मानसी प्रवृत्तिः, परमध्ययनक्रियाया निर्वृत्तिः, तन्निर्वृत्तौ सत्यां विद्यावाप्तिरूपफलमधिगम्यते इति । एवमध्ययनादिक्रियायाः प्रार्थनादिक्रियाभिरीप्सिततमत्वात् क्रियाऽपि कृत्रिमं कर्मेति वक्तुं शक्यते । प्रार्थना—सङ्कल्पजन्यः फलोपायविषयोऽभिलाषः । अनेन प्रकारेणोभयोः कृत्रिमत्वमवबुध्यते । साध्यत्वात् क्रियायाः प्राधान्यम्, क्रिययाप्तुमिष्टतमत्वात् किं च ताद्दर्थ्येन क्रियाप्रवर्तनादपि कर्मणः प्राधान्यमित्युभयोर्व्यतिहारे प्राप्ते क्रियाया धातुवाच्यत्वादन्तरङ्गत्वात् कर्मशब्देनात्र क्रियैव गृह्यते । तस्मात् क्रियाया एव व्यतीहारे आत्मनेपद विधीयते न तु 'देवदत्तस्य धान्यं व्यतिलुनन्ती'त्यादौ साधनकर्मव्यतिहारे ।

कर्मव्यतिहारस्य द्योतकौ प्रायेण 'वि—अति' इत्युपसर्गौ । क्वचित् समपि, यथा—सम्प्रहरन्ते राजान इति । अत्र परस्परकरणमेव व्यतिहारः । एकधातुवाच्यत्वेन प्रहारक्रियाणामत्रैकत्वं विज्ञेयम्, जातिकृतं वा । अन्यथा साधनभेदात् क्रियाभेदावश्यम्भावेन प्रहाराणां भिन्नभिन्नत्वादेकक्रियानिरूपितकारकशक्तिव्यत्यासो नोपपद्येत । अन्योऽन्ययोग्यलवनादिक्रियाकरणादनेककर्तृकत्व व्यतिहारस्य सम्पद्यते, तेन तत्र बहुवचनं प्रयुज्यते । 'अन्यो व्यतिस्ते तु ममापि धर्मः' ( २।३५ ) इति भट्टिप्रयोगादेकवचनमपि क्वचिद् दृश्यते ।

'सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम्' ( रघु० १।२६ ) इत्यत्र विनिमयशब्देनैव क्रियाविनिमयस्योक्तत्वान्नात्मनेपदम् । अन्यस्य योग्यां लवनादिक्रियामन्यः कश्चिन्निर्वर्तयतीति नियमभङ्गस्य सन्दर्शनात् कातन्त्रेऽनियमशब्देन व्यतिहारो गृह्यते । उच्यते च—

'अनियमे चागतिहिंसाशब्दार्थहसः' ( ३।२।७६–६६ ) इति ।
अनियमो व्यतिहारः ।

अन्येन केनचित् करणीयां यां क्रियां कश्चित् पुरुषः क्रियाफलमहं प्राप्नोमीति धियैव करोति तेन कर्तृगामिनि क्रियाफले युज्यते आत्मनेपदमेव विधातुम् । मन्ये—महर्षिपाणिनिना कर्मव्यतिहारे आत्मनेपदं विधाय सर्वेभ्यो धातुभ्यः कर्तृगामिनि क्रियाफले आत्मनेपदप्रयोगस्य समीचीनता द्योतितेति ।

## ४--भयम्

भयम्—आकुलीभावः ।[1] क्वचित् प्रवृत्तस्य भयस्य निराकरणाय प्राणिनः प्रायेणासमर्था भवन्ति तत्र केवलं बुद्ध्याऽनर्थाशङ्कां प्रकल्पयन्तस्ते तिष्ठन्ति । जडीभूताः किंकर्तव्यविमूढा वा न ते केनचिदुपायेन भयं प्रतिहन्तुमर्हन्ति । वृकेभ्यो बिभेति, दस्युभ्यो बिभेतीत्यादिप्रयोगस्थले उक्त एव भावो विज्ञेयः । यदि मां वृका दस्यवो वा पश्यन्ति तर्हि नूनं मे मृत्युरासन्न इत्येवंविचारेण प्रेक्षापूर्वकारिणां मनांस्याकुलीभावमाप्नुवन्तीत्यर्थः । क्वचित्तु शक्ताः पुरुषाः कञ्चिदुपायं विधायाऽऽत्मानमन्यं वा प्राणिनं रक्षितुं शक्नुवन्ति तत्र त्रायत्यर्थको धातुः प्रयुज्यते, त्राणेनानर्थप्रतिघातस्याऽभीष्टत्वात् । यथा—चौरेभ्यस्त्रायते, चौरेभ्यो रक्षतीत्यादि । प्रेक्षापूर्वकारी कश्चित् पुरुषश्चौराणां सन्दर्शनेन ततो वधबन्धनादिपरिक्लेशानाशङ्क्य बुद्ध्यात्मानं रक्षितुं कञ्चिदुपायमाचरति, सुहृद् भूत्वावाऽन्यं पुरुषं ततो निवर्तयतीति ।

यतः किञ्चिद् भयमाशङ्क्यते ततोऽपसरणायैव जायते प्रवृत्तिरिति भयहेतोरपादानसञ्ज्ञा विहिता[2]चार्यैः । भयहेतवः कार्यबाधका भवन्तीति सर्वे ततो दूरस्थितये यथाशक्ति समीहन्ते । इह जगतीतले भयहेतवो बहवः पदार्था भवन्ति तत्र परधर्मो विशेषतो भयावहः कीर्त्यते । उक्तं च भगवता श्रीकृष्णेन—

**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः** (श्रीमद्भग० ३।३५) इति ।

हेतुभयेऽर्थे ण्यन्त-भीधातोरात्मनेपदं निर्दिश्यतेभीस्म्यो-र्हेतुभये ( अ०. १।३। ६८) इति । यथा—जटिलो भीषयते, मुण्डो भीषयते इत्यादि । कर्तृगामिनी क्रियाफले आत्मनेपदविधानमौचित्यमावहति । अत्र यद्यपि जटिलो मुण्डश्चान्येषां कृते भयहेतुरूपेणाङ्गीक्रियते, तथापि जटाविस्तारेण मुण्डनेन च स्वयं जटिलो मुण्डश्चाऽऽत्मनि बिभीत इति प्रतीयते । तेन मन्येऽत्रात्मनेपदविधानमाचार्येणाभीष्टम् इति ।

---

१. रागविषयस्य विनाशके समुपस्थिते तन्निवारणासामर्थ्यमात्मनो मन्यमानस्य दैन्यात्मकश्चित्तवृत्तिविशेषो भयम् (श्रीमद्भग०—मधुसूदनसरस्वतीटीका २।३५) ।

२. भीत्रार्थानां भयहेतुः (अ० १।४।२५) ।
यतोऽपैति भयमादत्ते वा तदपादानम् (कात० २।४।८) ।

समागतस्य भयस्य दूरीकरणाय नूनं कश्चिदुपायः प्राणिनाश्र[1]यणीय इति हितोपदेशः ।

साहित्ये भयं भयानकरसस्य स्थायिभावरूपेणाङ्गीक्रियते । स्थायिभावममुं परिभाषमाणो विश्वनाथः प्राह—

रौद्रशक्त्या तु जनितं चित्तवैकल्यजं भयम् । (सा० द०, परि० ३) इति ।

१. तावद् भयस्य भेतव्यं यावद् भयमनागतम् ।
उत्पन्ने तु भये तीव्रे स्थातव्यं तैरभीतवत् ॥
( पाठा०—आगतं तु भयं वीक्ष्य नरः कुर्याद् यथोचितम ) ( ग० पु०, अ० ११५ ) इति ।

रजि० संख्या १३०४३ ६७

# सागरविश्वविद्यालयस्य संस्कृतपरिषदः प्राप्यपुस्तकानि

| | |
|---|---|
| **डॉ० रामजी उपाध्याय-विरचित-सम्पादितानि—** | मूल्यम् |
| १–प्राचीन भारतीय साहित्य की सांस्कृतिक भूमिका ( डी० लिट्० शोधग्रन्थ ) | ३२-५० |
| २–द्वा सुपर्णा ( संस्कृतोपन्यासः ) | ३-०० |
| 3–Sanskrit & Prakrit Mahakavyas ( D. Phil शोधग्रन्थः ) | 15-00 |
| ४–संस्कृतस्वयंशिक्षक | २-५० |
| ५–आधुनिक-संस्कृत-साहित्यानुशीलनम् | ७-०० |
| ६–सागरिका [ वर्ष १–८ सजिल्द ] | ७८-०० |
| अजिल्द | ६२-०० |
| ७–धम्मपद ( हिन्दी अनुवाद तथा टिप्पणी सहित ) | ३-०० |
| ८–भारतस्य सांस्कृतिक निधिः | १२-०० |
| ९–मनुस्मृतिनवनीतम् | १-५० |
| **डॉ० वनमालाभवालकरविरचितानि—** | |
| १०–महाभारत में नारी [ पी०-एच०-डी० शोधनिबन्धः ] | २०-०० |
| ११–पाददण्डः ( संस्कृतरूपकम् ) | १-०० |
| १२–रामवनगमनम् ( संस्कृत-संगीतिका ) | १-०० |
| १३–पार्वतीपरमेश्वरीयम् ,, | १-०० |
| **डॉ० पुल्लेलरामचन्द्रुडुकृतम्—** | |
| १४–सुसंहतभारतम् ( संस्कृतरूपकम् ) | ४-०० |
| **शिंगभूपालविरचितः** | |
| १५–रसार्णवसुधाकरः | ८-०० |
| **डॉ० रेवाप्रसादद्विवेदिरचितम्** | |
| १६–सीताचरितम् [ संस्कृतमहाकाव्यम् ] | ४-०० |
| **डॉ० फतेहसिंहस्य** | |
| १७–सिन्धुसभ्यतालिपे रहस्योद्घाटनम् [ सचित्रम् ] | १५-०० |

—:&:—

# सागरिका

त्रैमासिकी



दशमवर्षे द्वितीयाङ्कः

२०२८

प्रकाशिका

**संस्कृतपरिषद्, सागरविश्वविद्यालयः**

सागरम् [ म. प्र. ]

# सागरिका

त्रैमासिकी

दशमवर्षे द्वितीयाङ्कः

२०२८

संपादकः
डॉ० रामजी उपाध्यायः
सागरविश्वविद्यालये
संस्कृतविभागस्य प्राध्यापकाध्यक्षः

मूल्यं रु० ८-०० वार्षिकम् ]    [ मू० रु० २-०० प्रत्यङ्कं

प्रकाशिका
संस्कृतपरिषद्
सागरविश्वविद्यालयः,
सागरम् [ म० प्र० ]

देयम्

| | |
|---|---|
| प्रत्यङ्कम् | २ रूपकौ |
| वार्षिकम् | ८ रूपका |
| वस्त्रावरणसंहितवार्षिकचतुरङ्काणाम् | १० रूपकाः |
| आजीवनग्राहकस्य | १०० रूपकाः |
| अङ्कनिर्गमनम् | आषाढ-आश्विन-पौष-चैत्रमासेषु ( जून-सितम्बर-दिसम्बर-मार्च ) |

मुद्रकः
श्री शिवनारायण उपाध्यायः
नयासंसारमुद्रणालयः
भदैनी
वाराणसी-५

# विषय-सूची





# स्वप्नवासवदत्तवेणीसंहारयोरङ्गिरसविमर्शः

डा० रामजी उपाध्यायः

स एवाङ्गिरसो यः कस्याश्चित् कथायाः सारभूते भागे विराजते आद्यन्तं परिव्यापी च वर्तते। स्वप्नवासवदत्तेऽङ्गिरसविषयकविप्रतिपत्तेः समाधानं कठिना काचित् समस्या विद्यते। नाटकस्यास्य अङ्गी करुणो विद्यते शृङ्गारो वा? नाट्यशास्त्रानुसारं करुणो नाटकस्याङ्गी रसो न भवतीति करुणस्याङ्गित्वे विप्रतिप्रत्तिः। तथापि यद्युत्तररामचरिते करुणस्याङ्गित्वं स्वीक्रियते तदितर-नाटकेषु तत्प्रतिषेधो न कार्यः। वस्तुतः स्वप्नवासवदत्तस्य नायक उदयनो नायिकां वासवदत्तां दिवङ्गतां मनुते। नायकस्य नायिकावियोगजनिता हृद्गता भावोद्गारा एव नाटकस्य प्रथम-चतुर्थ-पञ्चमाङ्केषूपनिबद्धाः। उदयनोऽनिशं वासवदत्तायाः कृते रोरुद्यमानो विद्यते। अत आह पद्मावती—'वासवदत्ताया गुणान् स्मृत्वा दक्षिणतया ममाग्रतो न रोदिति।'

वासवदत्तायाः स्मृतिः सदैव राज्ञो हृदये समुज्जृम्भमाणा विलसति। स विदूषकं प्राह—सर्वमेतत् कथयिष्ये देव्यै वासवदत्तायै।' तदानीं विदूषकः कथितवान्—'कुत इदानीं वासवदत्ता? चिरात् खलूपरता सेति। राज्ञो मुखात् करुणोद्गारो निस्ससार—

दुःखं त्यक्तुं बद्धमूलोऽनुरागः
स्मृत्वा स्मृत्वा याति दुःखं नवत्वम्।
यात्रा त्वेषा यद् विमुच्येह बाष्पं
प्राप्तानृण्या याति बुद्धिः प्रसादम् ॥४-६॥

पञ्चमाङ्के राज्ञे कथां श्रावयन् विदूषकः कथायाः समारम्भ एवोज्जयिन्याश्चर्चामकरोत्। राजा तं निवारयति—

स्मराम्यवन्त्याधिपतेः सुतायाः प्रस्थानकाले स्वजनं स्मरन्त्याः।
बाष्पं प्रवृत्तं नयनान्तलग्नं स्नेहान्ममैवोरसि पातयन्त्याः ॥५-५॥

गते विदूषके वासवदत्ता तत्रैव समायाता। राजा च स्वप्ने वासवदत्तायाः कृते विललाप—'हा प्रिये, हा प्रियशिष्ये, देहि मे प्रतिवचनम्।'

उपलब्धायां घोषवत्यां दृष्ट्वैव तामुदयनो मूर्च्छति।

षष्ठाङ्के राजा कञ्चुकिनमाह—

महासेनस्य दुहिता शिष्या देवी च मे प्रिया।
कथं सा न मया शक्या स्मर्तुं देहान्तरेष्वपि ॥ ६-११॥

अपि नाम रसनिष्पत्तिरेषा विप्रलम्भश्रृङ्गारान्तर्गतं स्वीकर्त्तुं शक्येति प्रश्नः। न कदापीत्यस्मन्मतम्। शास्त्रीयपरिभाषानुसारं सर्व एवैष करुणो रसः। एवं स्थिते उपरिनिर्दिष्टकरुणरसापेक्षया विरला एव सन्ति श्रृङ्गाररस-प्रसङ्गाः प्रकृते नाटके।

अभिनवगुप्तस्य तापसवत्सराजनाटके तादृशं प्रसंगमधिकृत्य करुणरस-स्वीकारो मतमेतदुपोद्बलयति। अभिनवः कथयति—'श्रृङ्गारानन्तरं नियमेन करुणः। व्याप्रियते त्वसौ तज्जन्मनि। यथा तापसवत्सराजचरिते वासवदत्तादाहाद् वत्सराजस्य।'[१]

वेणीसंहारे विपश्चिद्भिर्वीरो रस एवाङ्गीति स्वीकृतम्, रौद्र-करुण-श्रृङ्गार-भयानक-बीभत्सादयश्चाङ्गानि।[२] वीररसस्याङ्गित्वं न समीचीनं प्रतिभाति, आद्यन्तं स्थायिभावक्रोधस्यैव विद्यमानत्वात्, रौद्रस्याङ्गित्वस्वीकार एवौचित्याच्च।[३] नाटकस्यादौ, मध्येऽवसाने च क्रोधस्यैव सर्वातिशायिस्वरूपं प्रत्यक्षीभवति। क्रोधस्यास्य मूलं विद्यते कृष्णायाः केशकर्षणम् आधर्षणं वा।[४] तथा हि—

यद्वैद्युतमिव ज्योतिरार्ये क्रुद्धेऽत्र सम्भृतम्।
तत् प्रावृडिव कृष्णेयं नूनं संवर्धयिष्यति ॥ १-१४॥

---

१. अभिनवभारती षष्ठाध्याये कारिका ३२ अधिकृत्य।

2. Venisamhara takes valour as its ruling S. K. De, History of Sanskrit literature P. 272 डा० कुन्हनराजमहाभागोऽपि डे महोदस्य मतं समर्थयन्नाह—This is a drama of material heroism. Survey of Sanskrit literature, P. 180.

३. नाटके 'एक एव भवेदङ्गी श्रृङ्गारो वीर एव वे' ति शास्त्रीया विप्रतिपत्तिर्विद्यते रौद्रस्याङ्गित्वाङ्गीकारे। शास्त्रीयोऽयं मानदण्ड उत्तरे रामचरिते विफलीभवति, तत्र करुणस्यैवाङ्गित्वात्। तदनुसृत्य वेणीसंहारे रौद्रास्याङ्गित्वेऽनौचित्यं नानुमेयम्।

४. आधर्षणं रौद्रस्योद्दीपनं विभावः।

तद् द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः ।
क्रोधज्ज्योतिरिदं महत् कुरुवने यौधिष्ठरं जृम्भते ॥ १-२४ ॥

मध्योऽस्य विद्यते भीमकृतं दुःशासनस्योरसो रक्तपानम् ।[1] तथाहि—

कृष्टा येन शिरोरुहे नृपशुना पाञ्चालराजात्मजा
येनास्याः परिधानमत्यपहृतं राज्ञां गुरूणां पुरः ।
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः ॥ ३-४७ ॥

दुर्योधनोरुभङ्गश्चास्य पर्यवसानम्—

कृष्टा येनासि राज्ञां सदसि नृपशुना तेन दुःशासनेन
स्त्यानान्येतानि तस्य स्पृश मम करयोः पीतशेषाण्यसृञ्जि ।
कान्ते राज्ञः कुरूणामपि रुधिरमिदं मद्गदाचूर्णितोरो-
रङ्गेऽङ्गेऽसृङ् निषक्तं तव परिभवजस्यानलस्योपशान्त्यै ॥६-४१॥

वेणीसंहारस्य सर्वेऽपि नायकाः प्रायशः सर्वत्र क्रोधाभिभूता दरीदृश्यन्ते । दीयन्तेऽत्र प्रतिपात्रं क्रोधभावस्य परिचायकानि कतिचन उद्धरणानि—

**भीमस्य**

१. सहदेवेनानुगम्यमानः क्रुद्धो भीमसेन इत एवाभिवर्तते । ( प्रथमाङ्के )
२. क्रुधा सन्धिं भीमो विघटयति यूयं घटयत । १-१०
३. एवमतिसम्भृतक्रोधेषु युष्मासु कदाचित् खिद्यते गुरुः । ( प्रथमाङ्के )
४. क्रोधोल्लासितशोणितारुणगदस्योच्छिन्दतः कौरवान् । १-१२
५. युष्मान् ह्रेपयति क्रोधाल्लोके शत्रुकुलक्षयः । १-१७
६. रोषावेशवशादार्यागताप्यार्येण नोपलक्षिता ।
७. किं नाथ दुष्करं त्वया परिकुपितेन । ( प्रथमाङ्के )
८. बलानां नाथेऽस्मिन् परिकुपितभीमार्जुनभये । ३-४५

---

१. अभिनवगुप्तोऽस्मिन् प्रकरणे रौद्ररसस्यैवावस्थितिं पश्चाच्च करुणस्य निष्पत्तिं स्वकरोति । तथाहि—

यदीयफलानन्तरं द्वितीयो रसोऽवश्यम्भावी तस्योदाहरणं रौद्रः । रौद्रस्य हि फलं बध-बन्धादि । तद्विभावकेनावश्यं करुणेन भाव्यम् । यथा—

वेणीसंहारे—'अद्यैवावां रणमुपगतौ तातमम्बां च दृष्ट्वा' आदौ ।

९. आर्य, प्रसीद, किमत्र क्रोधेन। ( पञ्चमाङ्के )
१०. क्रुद्धे युष्मत्कुलकमलिनीकुञ्जरे भीमसेने। ५-३३
११. क्रुद्धस्य वृकोदरस्यापर्युषितां प्रतिज्ञामुपलभ्य। ( षष्ठेऽङ्के )
१२. वीर्यक्रोधोद्धतभ्रमितभीषणगदापरिघपाणिना।
१३. उद्भूतकोपदहनोग्रविषस्फुलिंगः। ६-९।
१४. क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः। ६-१२।
१५. क्रोधोद्गूर्णगदस्य नास्ति सदृशं सत्यं रणे मारुतेः। ६-१३।
१६. निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि। ६-३७।

वेणीसंहारस्य प्रमुखं पात्रं विद्यते भीमसेनः, स च क्रोध-व्यतिरिक्तेन स्थायिभावेन सम्पृक्तो न कदापि द्रष्टुं शक्यः। भीमस्यैव कार्यकलापो नाटके प्रमुखतामर्हति, रौद्ररसः क्रोधस्थायिभावश्चात्रोत्फुल्ले। दशरूपकावलोके भीम-दुर्योधनयोः कार्यकलापे रौद्ररसस्य निदर्शनं दर्शितम्। यथा—

"वैरिकृताधिर्यथा वेणीसंहारे—

**लाक्षागृहानलविषान्नसभाप्रवेशैः**
**प्राणेषु वित्तनिचयेषु च नः प्रहृत्य।**
**आकृष्टपाण्डववधूपरिधानकेशाः**
**स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः॥ १-८॥**

इत्येवमादिविभावैः प्रस्वेदरक्तवदननयनाद्यनुभावैरमर्षादिव्यभिचारिभिः क्रोधपरिपोषो रौद्रः। परशुराम-भीमसेन-दुर्योधनादिव्यवहारेषु वीरचरित-वेणीसंहारादेरनुगन्तव्यः"।[1]

अनेनोपोद्घातेन धनिकमतेऽपि रौद्र एव रसो विलसति वेणीसंहार इति सुस्पष्टं, यतो हि भीमदुर्योधनावेव नाटकस्य प्रधानौ प्रणायकौ स्तः।

अथ दुर्योधनस्य क्रोधपरिचायकानि वाक्यानि—

१. पाण्डवपक्षपातामर्षितेन सुयोधनेन—प्रथमाङ्के।
२. कर्णाननेन्दुस्मरणात् क्षुभितः शोकसागरः।
वाडवेनेव शिखिना पीयते क्रोधजेन मे॥ ५-१९
३. किं वा नेदं क्रोध-स्थानम्। —पञ्चमाङ्के
४. क्रोधात् किं भीमसेने विहितमसमये यत्त्वयाऽस्तोऽभिमानः॥ ६-८

---

१. दशरूपकावलोकः ४-७४।

अर्जुनवृषसेनयोः संग्रामे कामं विद्यते वीररसनिष्पत्तिः नायं वीरोऽङ्गी-भवितुमर्हति, उभयोरपि प्रमुखपात्रत्वाभावात्, वेणीसंहारदृष्ट्या च वृषसेन-पराजयस्य परमप्रयोजनेन साक्षादसम्बद्धत्वात् । अर्जुनोऽप्यत्र नाटके क्रोधाविष्टः प्रायशो दृश्यते । यथा—

१. अद्य खलु पुत्रवधा**मर्षितेन** गाण्डीविनास्तमिते दिवसनाथे तस्य वधः प्रतिज्ञातः । ( द्वितीयाङ्के )
२. यूनः क्षत्रियवंशजस्य कृतिनः **क्रोधास्पदं** किं न तत् ॥ २-२५
३. अरे रे वृषसेन पितुरपि तावत् ते न युक्तं मम **कुपितस्या**भिमुखं स्थातुम् । ( चतुर्थाङ्के )
४. उभयबलप्रवृत्तसाधुकारा**मर्षितेन** गाण्डीविना ।
५. शक्तिखण्ड**नामर्षितेन** गाण्डीविना भणितम् ।

पाण्डवानां सामूहिकः क्रोधोऽपि नाटके प्रायशः चर्चां गतः । यथा—

१. एवमतिक्रान्तमर्यादे त्वयि निमित्तमात्रेण पाण्डव**क्रोधेन** भवितव्यम् । ( प्रथमाङ्के )
२. ते हि पुत्रबन्धुवधा**मर्षोद्दा**पितकोपानला अनपेक्षितशरीरा वीरा परिक्रामन्ति । ( द्वितीयाङ्के )
३. सर्वजनप्रसिद्धैवामर्षिता पाण्डवानाम् ।
४. **क्रोधान्धैर्य**स्य मोहात् क्षतनरपतिभिः पाण्डुपुत्रैः कृतानि । ६-४२
५. क्रोधान्धैः सकलं हतं रिपुकुलं पञ्चाक्षतास्ते वयम् । ६-४५

सक्रोधेष्वेतेषु पात्रेषु रौद्ररसस्य प्राधान्यं निर्विवादम्, यद्यपि क्रोधः क्वचिद् वीररसनिष्पत्तौ सञ्चारित्वमप्यावहति ।

भीमस्य कार्यकलापे वीररसव्यञ्जना भवितुमनर्हा, तदर्थम् आलम्बनत्वेन उत्तमप्रकृतेर्जनस्य नान्तरीकत्वात् ।[1] भीमो रौद्रस्यैवालम्बनं भवितुमर्हति, धीरोद्धतत्वाद् राक्षसाविष्टत्वाच्च । अन्यच्च—क्रोधस्य स्फुरणाय शत्रोरन्याय-कारिता अपेक्षिता भवति[2], सा च वेणीसंहारे प्रतिनायकस्य दुर्योधनस्य व्यवहारे पूर्णरूपेण व्यक्ता । दुर्योधनः स्वयमेवाह—

---

१. अभिनवभारत्यामुक्तम्—'उद्रिक्तं हन्तृत्वं येषां ते उद्धताः । उद्धत-स्वभावत्वादेव ह्यसौ ( भीमः ) क्रोधपरवशः सन्ननुचितमपि प्रतिज्ञातवान् । षष्ठोऽध्यायः पृष्ठ ५८४ ।

२. अन्यायकारिता प्राधान्येन क्रोधस्य विषयः । तत्रैव पृ० ५८२ ।

कृष्टा केशेषु भार्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा ।

रौद्ररसस्य निष्पत्तये उग्रकर्मालम्बनविभावः नान्तरीयको भवति, भीमश्च तादृश उग्रकर्मा वर्तते । तेन दुःशासनस्य वक्षसो रुधिरं पीतम्, चूर्णितोरोर्दुर्योधनस्य रुधिरमङ्गेऽङ्गे निषक्तं च ।

यत्र पात्रेषु प्रतिस्पर्धाया भावो भवेत् तत्र वीरः, यत्र प्रतिशोधस्तत्र रौद्र इत्युभयो रसयोरवस्थित्योरन्तरम् । प्रतिपक्षस्य दुराचारं स्मृत्वैव पुरुषे क्रोधो रक्तास्यनेत्रता च प्रादुर्भवतः । अभिनवभारतीमतेन रौद्ररसप्रकरणे शत्रुं प्रत्येतावान् रोषोऽपेक्ष्यते, येन न केवलं शत्रोः पराजयोऽपितु तन्मरणमनु तस्य प्रधर्षणमपि जायेत ।[१] दुःशासनोरसो रक्तं निपीय दुर्योधनस्य रक्तेन च स्वात्मानमभिषिञ्च्य भीमेनाभावोऽयं पूरितः ।

रौद्रस्य प्रधानकथांशे सर्वातिशायित्वात्, आद्यन्तं तस्य परिव्यापित्वाच्च, कथाप्रवाह उग्रकर्मणः परिसन्धित्वात्, प्रायशः प्रमुखपात्राणामविनयात्, उत्तमप्रकृतेरनुत्कर्षाच्च वेणीसंहारे रौद्र एवाङ्गी रस इति प्रतिपाद्यते ।

---

१. मारणप्राधान्यं नानाप्रहरणेन दर्शयति । शिरःकर्तनादि मृतशरीरस्यापि क्रोधातिशयात् सूचयन् वीराद् भेदमाह । युद्धवीरे हि तन्नास्ति ।

—अभिनवभा० पृ० ५९२ ।

# व्यञ्जनाविषये महिमभट्टमतसमीक्षा

डॉ० रविशङ्कर नागरः

ध्वनिमुत्पाटयितुं प्रवृत्तेषु प्रतिद्वन्द्विदर्शनेषु महिमभट्टाचार्यस्य अनुमितिवादोऽतीव प्रखरः। तेन व्यक्तिविवेकाभिधो ग्रन्थो ध्वनेः प्राणायितां व्यञ्जनां वृत्तिमुन्मूल्य अनुमाने ध्वनेन्तर्भावं दर्शयितुं प्रणीतः। ध्वनेः प्राणभूता व्यञ्जनैव। अतस्तामुत्पाट्य ध्वनिमर्दनं सुकरं भवतीति पण्डितधुरन्धरेण महिम्ना व्यञ्जनाव्यापार एव प्रथममाक्षिप्तः। महिमभट्टो व्यक्तेः स्वरूपम् उद्घाट्य ध्वनिसिद्धान्तमर्मायिते व्यञ्जनाव्यापारे महतीं कृपाणवृष्टिम् उत्ससर्ज। ध्वनिमार्गाध्वनीना यमर्थं व्यञ्जनव्यापारगम्यं व्यङ्ग्यं संज्ञपयन्ति, स एवार्थोऽनुमेयो व्यपदिष्टो महिम्ना तार्किकप्रवरेण।

'काव्यस्यात्मनि संज्ञिनि रसादिरूपे न तस्य विमतिः।'[1] स एवार्थो वाल्मीकिकालिदासप्रभृतिभिः कविपुङ्गवैरुपात्तः काव्यस्य परमा भूषा। तेनार्थेनोपस्कृतं काव्यं जीवति। परं नासावर्थो व्यङ्ग्यो यत्प्रत्यायनार्थं शास्त्रसिद्धाभिधारितिक्तस्तुरीयो व्यापारः समुपास्यते ध्वनिवादिभिः। परं महिमभट्टमते काव्यवासनापरिपक्वबुद्धिभिः सहृदयैः समास्वाद्योऽसावर्थः अनुमितिवेद्य एव। अतस्तस्यार्थस्यानुमितिप्रत्यायितस्यानुमेयत्वमेव युक्तियुक्तं न तु व्यङ्ग्यत्वम्। व्यापारोऽपि न व्यञ्जना, अपितु कार्यकारणभावमूलाऽनुमितिरेव। यथा मीमांसकैरभिधया व्यङ्ग्यार्थस्य अभिधेयत्वम्, लक्षणावादिभिश्च लक्षणया तस्यार्थस्य लक्ष्यत्वं सिद्धान्तितम्, तथैव महिम्नाऽपि तार्किकोपज्ञया साध्यसाधनभावप्राणया अनुमित्या तस्यार्थस्य अनुमेयत्वं महता संरम्भेण स्वकीये व्यक्तिविवेके ग्रन्थे प्रतिपादितम्।[2]

महिम्नः प्राक् श्रीशङ्कुकेनापि विभावानुभावव्यभिचारिसंयोगात् रसस्य अनुमेयत्वं प्रोक्तम्।

---

१. व्यक्तिविवेकः, पृ० १०५, सं० चौखं० १

२. पक्षधर्मत्वसम्बन्धव्याप्तिसिद्धिव्यपेक्षणात्।
वृक्षत्वाम्रत्वयोर्यद्वद् यद्वाच्चानलधूमयोः॥
अनुमानत्वमेवात्र युक्तं तल्लक्षणान्वयात्।

—व्यक्तिविवेकः, पृ० १०६-७ चौ० सं० १

तार्किकधुरंधरेण जयन्तभट्टेनापि वाक्यार्थप्रतीतिं विचारयता 'भम धम्मिअ वीसत्थो' इत्यादौ भ्रमणाभावरूपिणोऽर्थस्य प्रतीतिर्न व्यञ्जनया, अपि त्वनुमानादिप्रमाणान्तरसहकृतशब्दसामर्थ्यमहिम्ना भवतीति न्यायमञ्जर्यां प्रतिपादितम्। एवं जयन्तभट्टमतेऽपि व्यङ्ग्यार्थप्रत्यायनार्थं व्यञ्जनानोपादेया, तदर्थस्यानुमानादिप्रमाणावगतेः ।[1]

आनन्दवर्धनाचार्येणापि ध्वन्यालोके व्यङ्ग्यार्थं अनुमानेऽन्तर्भावयितृणां मतमुपनिबद्धं[2] पश्चाच्च तन्निराकृतमिति व्यङ्ग्योऽर्थोऽनुमेय इति विचारः परम्पराप्राप्तो महिमभट्टेन स्वकीये व्यक्तिविवेके ग्रन्थे दार्ढ्यमानीतः।

सर्वोऽयं ध्वनिप्रपञ्चो व्यञ्जनपदव्यपदिष्टं तुरीयं व्यापारमेवावलम्ब्य जीवति । सर्वस्य ध्वनिसिद्धान्तस्य प्राणभूता शक्तिर्व्यञ्जनैव । यदि शब्दार्थयोः व्यङ्ग्यव्यञ्जकभावः सिद्धो भवेत्तदैव तद्वतः काव्यस्य ध्वनिरिति व्यपदेश औचित्यं बिभृयात् । अर्थस्य व्यङ्ग्यत्वं व्यञ्जनमुखप्रेक्षम् । व्यङ्ग्य-व्यञ्जकभावो व्यञ्जनशक्तिनिबन्धन एव । यदि शब्दे वाचकलाक्षणिकातिरिक्तो व्यञ्जकत्वभावः सिद्धः स्यात्, तदैव तत्प्रत्यायितोऽप्यर्थो व्यङ्ग्य-व्यपदेश्य उपपद्येत । व्यङ्ग्यत्वे सिद्धे एव ध्वनित्वमव्याहतं भवति । अतो ध्वनतीति ध्वन्यत इति ध्वननमिति सर्वं व्यञ्जनाव्यापारायत्तम् । व्यञ्जनैव ध्वनिसिद्धान्तसञ्जीवनी परमा शक्तिः । अतएव भामहोद्भटप्रभृतिभिरालङ्कारिकैरलङ्काराणां भङ्ग्या व्याकृतो ध्वनिः व्यञ्जना–व्यापारेऽनुद्भावितेऽस्फुटस्फुरित एवासीत् तेषां ग्रन्थेषु । ध्वनिकारेण व्यञ्जनव्यापारमाश्रित्य परवर्तिभिर्ध्वनिमार्गाध्वनीनैराचार्यैस्त्वेमं दृढीकृत्य परमोत्तमं प्रतीयमानार्थप्राधान्यानुप्राणितं ध्वनिप्रस्थानं काव्यशास्त्रे सिद्धान्तितम्। अतएव यावद्ध्वनिसिद्धान्तजीवातुभूता

---

१. एतेन शब्दसामर्थ्यमहिम्ना सोऽपि वारितः ।
यमन्यः पण्डितंमन्यः प्रपेदे कञ्चन ध्वनिम् ॥
'भम धम्मिअवीसत्थो' 'मा स्म पान्थ गृहं विश' ।
विधेर्निषेधावगतिर्विधिबुद्धिर्निषेधतः ।
मानान्तरपरिच्छेद्यवस्तुरूपोपदेशिनाम् ।
शब्दानामेव सामर्थ्यं तत्र तत्र तथा तथा ॥ न्यायमञ्जरी, पृ० ४५

२. व्यञ्जकत्वं शब्दानां गमकत्वं तच्च लिङ्गत्वमतश्च व्यङ्ग्यप्रतीतिर्लिङ्गिप्रतीतिरेवेति लिङ्गलिङ्गिभाव एव एतेषां व्यङ्ग्यव्यञ्जकभावो नापरः कश्चित् ।
—ध्वन्यालोकः, पृ० ४४८

व्यञ्जनाशक्तिः नोपमर्द्यते, तावच्छिन्नशिरस्कोऽप्यं ध्वनिसिद्धान्तो रक्तबीज इव पुनः पुनरुज्जीवितो भवतीति कृत्वा महिमभट्टेन व्यक्तिरेव महता बलेन क्षुण्णा ।

अधुना महिम्नो दर्शनं भवतां पुरतः समुपस्थापयामः । महिमभट्टो व्यक्तेः किंस्वरूपमिति तावदादौ प्रस्फुटयति । तद्यथा—सतोऽसत एव वार्थस्य प्रकाशमानस्य सम्बन्धस्मरणानवेक्षिणा प्रकाशकेन सहैव प्रकाशविषयतापत्तिरभिव्यक्तिरिति तल्लक्षणम्[1] । सदसद्विषयेण व्यक्तिः द्विविधा । तत्र सद्विषया व्यक्तिस्त्रिविधा । दधिवृक्षादयो दृग्गोचरतामापतन्तः पदार्थाः पूर्वं कारणात्मनि पयोबीजादौ तिरोहिताः सन्तस्तिष्ठन्ति । अत एव इन्द्रियविषयतामनापन्ना दधिवृक्षादयः पदार्थाः समुचितसमये यदा पयोबीजादिभ्य आविर्भवन्ति, तदा ते अव्यक्तावस्थाः व्यक्तावस्थां प्राप्ताः सन्तः इन्द्रियग्राह्या भवन्ति । वृक्षो बीजे कारणावस्थायामवतिष्ठमानः सन्नदृश्यः । परं तस्मादेव बीजात् प्रस्फुटितोऽसौ वृक्षः शाखास्कन्धपल्लवरूपतामापन्नः कार्यावस्थायां परिणतो दृग्गोचरतामुपयाति । इत्थं कारणदशायां तिरोभूतानां पदार्थानां कार्यदशायां विपरिणामेनेन्द्रियविषयतापत्तिः सद्व्यक्तेः प्रथमः प्रकारः[2] ।

कारणावस्थायाः कार्यवस्थां प्राप्तानां प्रत्यक्षाणां घटपटादीनां पदार्थानां तमसाच्छन्ने सद्मनि प्रकाशकेन दीपादिना सहैवाभिव्यक्तिः—व्यक्तेर्द्वितीयः प्रकारः । तथाहि—पूर्वं सूर्यालोके दृष्टा घटपटादयः पदार्थाः रात्रावन्धकाराच्छन्ने गृहे वर्तन्ते । परं दीपादिप्रकाशकस्याभावात् घटोऽयं पटो वेति किञ्चिन्न ज्ञायते । परं यदैव दीपप्रकाशो भवति, तदैव तमसा दृग्विषयतामनापन्ना घटपटादयः पदार्थाः प्रकाशे जाते अभिव्यक्तिम् उपयान्ति । अतः प्रकाशकेन दीपादिना सहैव प्रकाश्यस्य घटस्य नयनगोचरतापत्तिर्व्यक्तेर्द्वितीयः प्रकारः[3] ।

---

१. व्यक्तिविवेकः, पृ० ७६.

२. तत्र कारणात्मनि कार्यस्य शक्त्यात्मनावस्थानात् तिरोभूतस्येन्द्रियगोचरत्वापत्तिलक्षण आविर्भाव एका, यथा क्षीराद्यवस्थायां दध्यादेः ।

—तत्रैव, पृ० ७७.

३. तस्यैवाविर्भूतस्य कुतश्चित् प्रतिबन्धादप्रकाशमानस्य प्रकाशकेनोपसर्जनीकृतात्मना सहैव प्रकाशो द्वितीया, यथा प्रदीपादिना घटादेः ।

—तत्रैव पृ० ७७.

अनुभूतपूर्वाणां दृष्टानां श्रुतानां संस्कारात्मना प्रतिपत्तुर्मनसि विद्यमानानां तेषां पदार्थानां प्रबोधकान्तरेण यत्प्रत्यायनमसौ व्यक्तेस्तृतीयः प्रकारः। अयमपि प्रबोधकत्रैविध्यात् त्रिविधः। प्रबोधकञ्च नान्तरीयकं (१) धूमादि (२) सदृशवस्त्वन्तरं (३) वाचकः शब्द इति त्रिविधम्। (१) प्रथमं यथा धूमादग्निज्ञानम्। महानसादौ प्रत्यहं ज्वलन्तं वह्निं दृष्ट्वा तद्गतः संस्कारो द्रष्टुर्मनसि सदा विद्यते। अतः पर्वतादौ पक्षे अदृश्योऽपि लिङ्गी वह्निरनुमात्रा पूर्वदृष्टवह्निधूमयोः नियतं सम्बन्धं प्रत्यभिज्ञाय लिङ्गेन धूमेनानुमीयते। इत्थं प्रबोधकेन धूमेन वह्नेर्यत्प्रत्यायनं परामर्शजन्यं तत्तृतीयस्या व्यक्तेः प्रथमो भेदः। (२) सदृशवस्त्वन्तरेण प्रतिबिम्बालेख्यादिना प्रबोधकेन प्रतिबिम्बिनः प्रबोध्यस्य प्रत्ययः तृतीयस्या व्यक्तेर्द्वितीयो भेदः (३) प्रबोधकाद् वाचकाच्छब्दात् संस्कारप्रबोधः तृतीयस्या व्यक्तेस्तृतीयो भेदः। इत्थं तृतीयस्या व्यक्तेस्त्रैविध्यम्।

असद्विषया व्यक्तिस्त्वेकप्रकारैव। तद्यथा—प्रावृट्समयेऽसतामेवेन्द्रधनुरादीनां सूर्यलोके नभसि दृग्गोचरता असद्व्यक्तिः।[१] तदेवं सद्विषया अभिव्यक्तिस्त्रिधा। असद्विषया त्वेकैवेति चतुर्धा व्यक्तिर्विवेचिता महिमभट्टेन।

इत्थं व्यक्तेः स्वरूपमुद्घाट्य महिमभट्टः सपीठिकाबन्धं ध्वनेः स्वरूपं उन्मूलयन्नाचष्टे प्रतीयमानार्थव्यक्तिसमर्थकस्य ध्वनिवादिनो मते एतासु कतमा व्यक्तिरिष्टा। न तावत् त्रिविधा सद्विषया व्यक्तिः। यतस्तत्र प्रथमे व्यक्तिभेदे व्यङ्ग्यार्थस्याभिव्यक्तिर्न दधिवृक्षव्यक्तिसहोदरा स्वप्नेऽपि संभवा। व्यङ्ग्यार्थस्य दध्यादेरिवेन्द्रियविषयभावमनापन्नत्वात्। द्वितीये भेदेऽपि व्यङ्ग्यार्थस्य व्यक्तिर्न सम्भवति, व्यङ्ग्यार्थस्य प्रकाश्यस्य व्यञ्जकेन प्रकाशकेन सहैवाप्रकाश्यत्वात्। नहि वस्त्वलङ्काररसरूपेषु त्रिविधेष्वर्थेष्वन्यतमोऽर्थः प्रकाशकेन व्यञ्जकेन शब्देन सहैवाभिव्यक्तो भवति। अन्धकारावृते गृहे विद्यमानो घटो यदा प्रकाशकेन दीपेन प्रकाश्यते, तदा प्रकाशकेन दीपेन सहैव तस्य प्रकाश्यस्य घटस्यावभासः। प्रकाशकस्य दीपस्य प्रकाश्यस्य घटस्य च प्रतीतिरेककालावच्छिन्ना। तयोर्मध्ये न कोऽपि सम्बन्धस्मरणादिकोऽन्तरायः। प्रकाशकस्य दीपस्य प्रकाश्यस्य घटस्य च बोधविषयतापत्तिः सहभावनिबन्धना। यस्मिन् क्षणे दीपप्रकाशस्तस्मिन्नेव क्षणे घटावभासः। प्रकाश्यप्रकाशकयोर्युगपत्सहभावनिबन्धनम् अभिव्यञ्जनमेव व्यक्तिः।

---

१. असतस्त्वेकप्रकारैव, तस्य प्रकारान्तरासम्भवाद् यथार्कलोकादिनेन्द्रचापादेः।
—व्य० वि०, पृ० ७८

महिमभट्टमते व्यक्तेरिदं प्रोक्तं स्वरूपं न लक्ष्ये ध्वनौ सङ्गच्छते। नहि व्यञ्जकाच्छब्दात् व्यङ्ग्यार्थावगतिरेककालावच्छिन्ना भवति। वाच्यार्थात् भवन्ती प्रतीयमानार्थप्रतीतिः सहभाविनीति शक्रेणापि नोपपादयितुं शक्यते। यथा सम्बन्धस्मरणादिकमनपेक्ष्य दीपेन घटो ज्ञायते, न तथा वाच्यार्थेन व्यङ्ग्यार्थः अवगम्यते। प्रत्युत प्रथमेक्षणे वाक्यार्थविद्भिः वाच्यार्थोऽवगम्यते, पश्चाच्च तत्सम्बन्धेनापरस्मिन् क्षणे व्यङ्ग्योर्थः प्रतिपद्यते। सम्बन्धेन वाच्यार्थेन प्रत्याय्यमानः सम्बन्धी व्यङ्ग्योर्थः सम्बन्धव्यवधानमन्तरेण प्रतीतिपथमनुपगच्छन् न कदापि व्यङ्ग्यत्वेन व्यपदेश्यः। अतः प्रदीपघटवद् वाच्यार्थव्यङ्ग्यार्थयोः साहित्येनाप्रकाशनान्न व्यक्तेर्द्वितीयं स्वरूपमपि लक्ष्यानुकूलम्।[१]

तृतीये भेदे व्यक्तेः स्वरूपं नानुमानबाह्यम्।[२] अव्यभिचारिणो लिङ्गादनुभूतपूर्वस्य संस्कारात्मनान्तर्विपरिवर्त्तिनोऽर्थान्तरस्य या प्रतीतिर्भवति, सा अनुमानस्यैव विषयः। यथा लिङ्गेन धूमेन लिङ्गिनो वह्नेर्ज्ञानमनुमानमूलम्, तथैव गमकेन वाच्यार्थेन प्रतिपद्यमानो गम्योऽर्थः प्रतीयमानोऽपि अनुमेय एव। वाच्यार्थस्य व्यङ्ग्यार्थेन सह यं कमपि सम्बन्धमवधार्यैव तत्प्रतीतिरतस्तयोः परस्परमुपायोपेयत्वं निर्बाधम्। अङ्गीकृते चोपायोपेयभावे कारणाद् भवन्ती कार्यप्रतीतिर्नियमेनैव भवतीति स्वीकार्यम्। कार्यकारणभावश्चाविनाभावमूलः साध्यसाधनभावप्राणायामनुमित्यामेव पर्यवस्यतीति स्वरूपासंस्पर्शिनि व्यक्तिलक्षणे सति, तन्निबन्धनं शब्दस्य व्यञ्जकत्वं अर्थस्य व्यङ्ग्यत्वं तत्प्रत्यायनार्हस्य व्यापारस्य च व्यञ्जनेत्यभिधानं सर्वमसमञ्जसमेव महिमभट्टमतेन।

नाप्यवशिष्टा असद्विषया व्यक्तिर्लक्ष्ये ध्वनौ संघटते। व्यङ्ग्यार्थस्य असद्विषयत्वस्य वक्तुमशक्यत्वात्। अतो लक्ष्यासंस्पर्शिनि व्यक्तिलक्षणे सति प्रतीयमानार्थस्य व्यङ्ग्यत्ववचनं सर्वथा असंगतमिति महिमभट्टस्याशयः।

---

१. सतोऽभिव्यक्तिराद्ययोरर्थयोर्लक्षणं न प्रतीयमानेष्वेकमपि संस्प्रष्टुं क्षमते, तस्य दध्यादेरिवेन्द्रियविषयभावापत्तिप्रसङ्गाद् घटादेरिव वाच्यार्थसहभावेनेदन्ताप्रतीतेरसम्भवात्। न च स्वरूपासंस्पर्शि लक्षणं भवति। —व्य०वि०, पृ० ७८

२. तृतीयस्यास्तु यल्लक्षणं तदनुमानस्यैव सङ्गच्छते, न व्यक्तेः। यदुक्तम्—'त्रिरूपाल्लिङ्गादनुमेये ज्ञानं तदनुमिति।' तच्चानुमानमेव।
—तत्रैव, पृ० ७८

महिमभट्टमते शब्दस्यैक एवाभिधाख्यो व्यापारः[1] अन्यः सर्वोऽपि व्यापारोऽर्थगतः कार्यकारणभावमुपजीव्य प्रवर्तमानोऽनुमितिमूलक एव। तथा हि—शब्देनाभिधया यो वाच्यार्थोऽभिधीयते तद्द्वारा सम्बन्धिनो ऽर्थान्तरस्य ज्ञानं भवति। अतो यत्र कुत्रचिदर्थादर्थान्तरप्रतीतिर्भवति, तत्तयोः परस्परं सम्बन्धमवधार्यैव। सम्बन्धसम्बन्धिभावे चाभ्युपगते तयोर्नियमेनैव प्रतीतिः स्वीकार्या। यथा धूमादग्नेः प्रतीतिः क्रमेण व्याप्त्यादिसम्बन्धमपेक्ष्य भवति।

यतो हि ध्वनिकारो व्यङ्ग्यव्यञ्जकयोः क्रमेण प्रतीतिमभ्युपगच्छति,[2] अतः तस्य वचनप्रामाण्यादेव व्यक्तेः प्राणायितः सहभावोऽपहस्तितो भवति। यदि क्रमेण प्रतीतिर्व्यङ्ग्यव्यञ्जकयोस्तर्हि न तत्र सहभावस्य गन्धोऽप्याघ्रातो भवति। सहभावेऽभ्युपपन्ने घटप्रतीवद् व्यङ्ग्यव्यञ्जकप्रतीतिरभ्युपगन्तव्या। सा एवात्र न भवति। अत आदौ वाच्यार्थोऽवगम्यते, अनन्तरञ्च तत्सम्बन्धात् सम्बन्धिनो व्यङ्ग्यार्थस्य प्रतीतिः क्रमेणैव भवतीति काममभ्युपेयम्। एवं सहभावेऽसम्भवति अविनाभावमूलाया अनुमितेर्विना व्यक्तेर्नान्यः कोपि प्रकारोऽवशिष्यते।

ननु मास्तु वस्त्वलङ्काररूपिणोर्व्यङ्ग्यर्थयोः सहभावेन प्रतीतिः, परं व्यङ्ग्यो रसस्तु क्रमव्यवधानं विना अनुभूयते। अत एव रसध्वनेरसंलक्ष्यक्रमव्यङ्ग्यताभिधानमित्यतो घटप्रदीपन्यायेन व्यक्तिलक्षणं स्वरूपसंस्पर्शि सन्निरवद्यमिति चेन्न, वस्त्वलङ्कारध्वन्योः पूर्वोक्तव्यक्तिलक्षणस्याव्याप्तौ, अव्याप्तिलक्षणदोषप्रसङ्गात्[3]। तेन च रसस्यैव ध्वनेः व्यङ्ग्यत्वं स्यान्न वस्त्वलङ्कारध्वन्योः। परं नैतद् ध्वनिवादिन इष्टम्।

महिमभट्टमते रसादीनामर्थानामपि प्रतीतिर्न घटप्रदीपवत् सहभावनिबन्धना। नहि विभावादिज्ञानमेव रत्यादिसंवित्। विभावानुभावद्वारिका रस-

---

१. अत्रोच्यतेऽभिधासंज्ञः शब्दस्यार्थप्रकाशने।
व्यापार एक एवेष्टो यस्त्वन्योऽर्थस्य सोऽखिलः॥
—व्यक्तिविवेकः, १७१

२. ध्वन्यालोकः, पृ० ४०४।

३. अथ रसाद्यपेक्षया तयोः सहभावेन प्रकाशोऽभिमत इत्युच्यते, अव्याप्तिस्तर्हि लक्षणदोषः, वस्तुमात्रालङ्कारप्रकाशस्य प्रकाशकासहभावेनाव्याप्तेः। —व्यक्तिविवेकः, पृ० ७९

प्रतीतिरिति सर्वेषां ध्वनिवादिनां सिद्धान्तः। तथा सति विभावादीनां कारणत्वं रसादेश्च कार्यत्वं दैवसिद्धम्। नहि कारणज्ञानकाले एव कार्यस्य ज्ञानं भवति। प्रत्युत कारणात् कार्यप्रतीतिः सदैव क्रमपूर्विकेति विभावादिभ्यः कारणेभ्यो रत्यादीनां कार्याणां प्रतीतावपि क्रमभावोऽवश्वमभ्युपेयः। इत्थं विभावानुभाव रसाद्यर्थानां कार्यकारणभावेनावस्थानात् साध्यसाधनभावमूला अनुमितिरेवात्र अभ्युप गन्तव्या, न तु व्यङ्ग्यव्यञ्जकभावप्राणो ध्वनिः।[1]

यदि रसादिरूपिणोऽर्थस्य व्यङ्ग्यत्वमिष्टमेव, तदा न तन्मुख्यया वृत्त्या उपपादयितुं शक्यते। विभावानुभावरसादीनां कार्यकारणभावस्थानीयत्वात्। केवलमुपचारतो रसरूपिणोऽर्थस्यैव व्यङ्ग्यत्वं सम्भावयितुं शक्यते। न तु वस्त्वलङ्काररूपिणोरर्थयोः। उपचारस्य प्रयोजनं रसस्य निरतिशयानन्दरूपत्वम्। यतो हि वस्त्वलङ्काररूपोऽर्थो न तथा चमत्कारमातनोति, यथा हृदयसंवादवशादास्वाद्यमानो रसरूपोऽर्थः। एवं लक्षणया रसरूपिणोऽर्थस्य व्यङ्ग्यत्वं भवेन्नाम, परं न कदापि वस्त्वलङ्काररूपिणोरर्थयोः। तथा सति घटप्रदीपन्यायमाश्रित्य मुख्यया वृत्त्या रसादीनां व्यङ्ग्यत्वेऽसम्भवति, व्यक्तेः सहभावनिबन्धनं स्वरूपं लक्ष्यं त्रिविधं प्रतीयमानमर्थमेव न स्पृशतीति रसादीनां व्यङ्ग्यत्ववचनमसम्भवदोषदुष्टमिति महिमभट्टमतहृदयम्।

व्यङ्ग्यार्थस्य च प्रतीतिः कथं लिङ्गलिङ्गिभावमूलेति प्रस्तूयमाने उदाहरणे स्पष्टम्—

**भ्रम धार्मिक विस्रब्धः स शुनकोऽद्य मारितस्तेन।**
**गोदानदीकूललतागहनवासिना दृप्तसिंहेन॥**

अत्र आनन्दवर्धनाचार्येण निषेधरूपिणोऽर्थस्य व्यङ्ग्यत्वं समाख्यायि। तत्सर्वं विविच्यमानमनुमानेऽन्तर्भवति, त्रिरूपाल्लिङ्गाल्लिङ्गिज्ञानमनुमानमिति तल्लक्षणात्। अनुमितेः द्वे अङ्गे। पक्षधर्मता, व्याप्तिश्च। पूर्वं व्याप्त्या साध्यसामान्यस्य सिद्धिः, पश्चात् पक्षधर्मतया साध्यस्य सम्बन्धविशेषः सिध्यति। पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृत्तत्वेन अनुमितेः त्रिरूपाणि लिङ्गानि। अन्वयव्य-

१. अतएव श्रूयमाणानां शब्दानां ध्वनिव्यपदेश्यानामन्तःसन्निवेशिनश्च स्फोटाभिमतस्यार्थस्यव्यङ्ग्यव्यञ्जकभावो न सम्भवतीति व्यञ्जकत्वसाम्याद् यः शब्दार्थात्मनि काव्ये ध्वनिव्यपदेशः सोऽप्यनुपपन्नः, तत्रापि कार्यकारणभावमूलस्य गम्यगमकभावस्योपगमात्। —तत्रैव, पृ० ५७

तिरेकाभ्यां लिङ्गलिङ्गिनोरविनाभावः सिध्यति । अविनाभाव एव व्याप्तिः। अन्वयव्यतिरेकाभ्यां अनया व्याप्त्या हेतोः शुद्धत्वं निश्चितं भवति। तेन चादुष्टेन हेतुना नियतस्य साध्यस्य पक्षे सिद्धिः ।

पूर्वोक्ते पद्ये यो भीरुभ्रमणाभावरूपोऽर्थ आनन्दवर्धनाचार्येण वस्तुध्वनि-व्यपदेशेन प्रतिष्ठापितोऽसौ गोदातटे पद्ये दृप्तसिंहसद्भाववत्त्वेन उपात्तेन हेतुना साध्यो लिङ्गी सन्ननुमेय एव महिमभट्टमतेन । अत्र परपुरुषचौर्यरतिसुख-लुब्धया कुलटया कयाचिच्छुनो बिभ्यत् कश्चन धार्मिको निश्शङ्कं गोदातटे विधिमुखेन भ्रमेत्यादिना भ्रमणार्थमुक्तः । यतस्तस्य भीरुधार्मिकस्य भयप्रकम्प-मानामङ्गलतिकां प्रकुर्वाणः श्वा गोदानदीतटवासिना दृप्तसिंहेन पञ्चत्वं प्रापितः । अतो भयकारणस्य शुनोऽभावाद् धार्मिकस्य निष्कण्टकं वने भ्रमणं जातमिति सामान्येन रतिलम्पटायाः स्वैरिण्याः कस्याश्चिदुक्तिः । वस्तुतस्तु निरन्तरं धार्मिकेन पल्लवपुष्पावचयकारणात् प्रकाशतामुपयत् गोदानदीतट-स्थितं चौर्यरतस्थानं कुञ्जं धार्मिक विहरणविरहितं भवेदिति साध्यं पुंश्चल्याः। अत एव शुनो बिभ्यत् धार्मिको दृप्तसिंहनामश्रवणादवश्यं तच्चौर्यरतसङ्केत-स्थानात् सुगोप्यत्वात् पराङ्मुखीभविष्यतीति विधिमुखेन असाध्व्या भीरुधार्मिको गोदानदीतट-कुञ्जभ्रमणान्निवार्यते ।

एवमत्र आनन्दवर्धनोक्ते वस्तुध्वनौ सुनिपुणं पर्यालोचने क्रियमाणे निषेधरूपिणो ध्वन्यमानस्यार्थस्य अनुमेयत्वमेवोपपन्नं भवति नतु व्यङ्ग्यत्वम्। तथाहि—अनुमितेः पञ्चावयवं वाक्यमत्र प्रस्तूयमानया दिशा विनियोज्यम्। अयं देशो भीरुभ्रमणायोग्यो दृप्तसिंह सद्भाववत्त्वादित्यनुमानस्वरूपम् । तत्र—

१. अयं देशः भीरुभ्रमणायोग्य इति प्रतिज्ञावाक्यम् ।

२. दृप्तसिंहसद्भाववत्त्वादिति हेतुः ।

३. (i) यत्र यत्र दृप्तसिंहसद्भावस्तत्र तत्र भीरुभ्रमणायोग्यत्वम् ।
(ii) यत्र यत्र भीरुभ्रमणायोग्यत्वं तत्र तत्र दृप्तसिंहसद्भाव यथा अरण्यमिति दृष्टान्तः ।

४. तद्यथेति उपनयः ।

५. तस्मात्तथेति निगमनम् ।

अनया दिशा अन्येष्वपि ध्वनिनिदर्शनेषु व्यङ्ग्यार्थस्यानुमेयत्वमूह्यम् ।

---

१. इत्थञ्च गम्यमानार्थस्पर्शमात्रमलङ्कृतिः ।
वाच्यस्येत्येतदुक्तं स्यान्मता सैवानुमा ततः ॥
—व्यक्तिविवेकः, पृ० १४३

किञ्च प्रतीयमानार्थस्य प्रधानगौणभावस्तद्वशाच्च काव्यस्य ध्वनिगुणीभूतव्यङ्ग्यव्यपदेशाभ्यामुत्तमकाव्यमध्यमकाव्येतिरूपेण विभागकरणं, ध्वनिकाव्यस्य च तन्निबन्धनं वैशिष्ट्यं सर्वथानुपपन्नं रस्यमानतासारैकप्राणस्य काव्यस्योत्तममध्यमविभागासंभवात् । नह्यखण्डास्वादरूपिणि काव्ये प्रधानगुणभावेन क्वचिदपोद्धारबुद्धिः कृता भवति[1] य एव प्रतीयमानोऽर्थोऽनुमीयमानः प्रधानः सन् उत्तमे काव्ये चारुत्वाधायकः स एव गुणीभूतः सन् मध्यमे काव्येऽपि । नहि हृदयसंवादवशादास्वाद्यमानस्य सहृदयहृदयानुभवसिद्धस्य शब्दनाख्येयस्य काव्यानन्दस्येयत्ता न्यूनता अधिकता वा निर्णीता भवति, येन निरतिशयानन्दरूपिणः काव्यस्य उत्तममध्यमव्यपदेशः समीचीनः स्यात् । नहि प्रतीयमानेऽर्थे वाच्यादतिशयिनि सति काव्यानन्दस्य कश्चिदुत्कर्षः, तस्मिंश्च वाच्यार्थादप्रधाने सति कश्चिदपकर्षः । ध्वनिकारेण स्वयं प्रतीयमानार्थवशात् काव्यस्य सौभाग्यं स्वीकृतम्[2] तथा सति काव्ये चारुत्वाधायकः प्रतीयमानोऽर्थ उत्तमकाव्यमध्यमकाव्ययोः समानभावेन व्याप्तः । तेन यत्र प्रतीयमानार्थ परिस्फुरणं तत्सर्वं काव्यं वक्तव्यं भवति, न तुतस्य काव्यस्य प्रतीयमानार्थप्राधान्याप्राधान्येन कश्चित् विवेकः कर्त्तव्यो भवति । नहि निरतिशयानन्दमयस्य काव्यचारुत्वस्येयत्तापरिमापकः कश्चिद्विभागो युक्तियुक्तः । चारुत्वं हि काव्यव्यपदेशभाक्, तच्च परमसौभाग्याधायकस्य प्रतीयमानार्थस्य सद्भावे सर्वस्मिन् काव्येऽस्ति प्रधानगौणभावमनपेक्ष्य । तद्यथा—

व्रज ममैवैकस्या भवन्तु निश्वासरोदितव्यानि ।
मा तवापि तया विना दाक्षिण्यहतस्य जनिषत ।।[3]

अत्र वस्तुरूपिणः प्रतीयमानार्थस्य प्राधान्याद् ध्वनिवादिनोत्तमं काव्यं व्यपदिश्यते—

[4]लावण्यसिन्धुरपरैव हि केयमत्र
यत्रोत्पलानि शशिना सह संप्लवन्ते ।
उन्मज्जति द्विरदकुम्भतटी च यत्र
[5]यत्रापरे कदलिकाण्डमृणालदण्डाः ।।

---

१. न च तस्य विशेषः संभवति, निरतिशयसुखास्वादलक्षणत्वात्तस्य । —व्य० वि०, पृ० ९४

२. सर्वथा नास्त्येव हृदयहारिणः काव्यस्य स प्रकारः, यत्र प्रतीयमानार्थसंस्पर्शेन न सौभाग्यम् । ध्वन्यालोकः, पृ० ६३

३-४. तत्रैव, पृ० ४५६

५. 'उत्तममध्यमाधमे'—ति काव्यकोटयो ध्वन्यालोके न लभ्यन्ते, न च व्यक्तिविवेके । —संपादकः

इत्यत्र तस्यैव वस्तुरूपिणोऽर्थस्य अप्राधान्यात् गुणीभूतव्यङ्ग्यं मध्यमं काव्यं व्यपदिश्यते ध्वनिवादिना। वस्तुतः प्रतीयमानार्थसद्भावसौभाग्यवशात् द्वयोः पद्ययोस्तुल्यमेव हि चारुत्वम्। यदि 'लावण्य सिन्धुरि'-त्यत्र प्रतीयमानार्थसद्भावो न स्यात्, तदा वाच्यार्थस्य प्राधान्येऽपि तत्र चारुत्वं न स्यात्। एवं काव्यस्य चारुत्वं सर्वथा प्रतीयमानार्थाश्रितम्। तद्यथा—

उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद् गलितं न लक्षितम्।

इत्यत्र गुणीभूतव्यङ्ग्ये मध्यमेऽपि काव्ये यदि नायकनायिकारूपिणः प्रतीयमानार्थस्य प्रतीतिर्न भवेत्तदा वाच्यार्थस्यापि चारुत्वं कथं स्यात्। अतोऽत्रापि प्रतीयमानार्थेनैव काव्यस्य रमणीयता। एवं प्रतीयमानोऽर्थः प्रधानो वा भवेदप्रधानो वा काव्यस्य चारुत्वं तु तन्मूलमेवेति ध्वनिगुणीभूतव्यङ्ग्याभ्यां यः काव्यस्योत्तममध्यमविभागः कृत आनन्दवर्धनेन, सोऽप्यनुपन्नो महिमभट्टमतेन। तथा सति प्रतीयमानार्थस्य व्यक्तेरसम्भवात् अनुमितेश्च ध्वन्यपेक्षया महाविषयत्वात्—प्रधानव्यङ्ग्यगुणीभूतव्यङ्ग्योभयलक्ष्यव्यापित्वाच्च काव्यानुमितिरेव स्वीकार्या न तु ध्वनिरिति महिमभट्टमतनिष्यन्दः।

साम्प्रतं ध्वनिवादिनः पक्षः प्रस्तूयते। निमित्तनैमित्तिकभावमवलम्ब्य व्यङ्ग्यव्यञ्जकयोरविनाभावसम्बन्धं समर्थयता अनुमितिवादिना महिमभट्टेन व्यक्तेर्यत्स्वरूपं दूषितं, तत्स्थाने च लिङ्गलिङ्गिभावप्राणा अनुमितिः सिद्धान्तिता तन्नत्र क्षोदक्षमं तत्त्वम्। न हि ध्वनिवादिनां मते व्यक्तेस्तादृशं स्वरूपमीप्सितं यादृशं महिम्ना लक्षितम्। व्यङ्ग्यव्यञ्जकयोः निमित्तनैमित्तिकभावो नापह्नूयते ध्वनिवादिना। परं नासावनुमितिपर्यवसायी। "नहि व्यङ्ग्ये प्रतीयमाने वाच्यबुद्धिर्दूरीभवति, वाच्याविनाभावेन तस्य प्रकाशनादि'-दिति[1] ध्वनिकारवाक्येऽविनाभावशब्दो न तार्किकानुकूले व्याप्त्यर्थे प्रयुक्तः। अत्र अविनाभावस्तु सम्बन्धमात्रेऽर्थे इष्टः। यथा "अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते"[2] इत्यत्राविनाभावस्यार्थः संबन्धमात्रार्थे पर्यवसितः। एवं व्यङ्ग्यव्यञ्जकयोर्निमित्तनैमित्तिकभावः पारिभाषिकेऽर्थे नोपादेयः। परमविनाभावस्य सम्बन्धमात्रोऽर्थ एवात्र विवक्षितः।

१. ध्वन्यालोकः, पृ० ४२०
२. काव्यप्रकाशः, पृ० ५०

सदसद्विषया या चतुर्धा व्यक्तिर्महिम्ना प्रतिपादिता तासु घटप्रदीपन्यायेनैव व्यङ्ग्यार्थस्याभिव्यक्तिर्ध्वनिवादिमतानुकूला। नहि कारणात् पयसो दध्यादीनामिन्द्रियविषयतापत्तिर्व्यक्तिरिति केनचित् सुमतिना व्यक्तिलक्षणं सम्प्रतिपद्यते। अत एवात्मीयेन व्यक्तिलक्षणेन लक्ष्यस्य ध्वनेः परीक्षा न युक्तियुक्ता। यदपि घटदीपकन्यायेन प्रतीयमानार्थस्य व्यङ्ग्यत्वं ध्वनिवादिन इष्टं तदपि न तथा यथा अनुमानवादिना महिम्ना प्रतिपादितम्। नहि व्यञ्जकेन सहैव व्यङ्ग्यप्रतीतिर्भवतीति ध्वनिवादिन आशयः। प्रस्तुतव्यङ्ग्यार्थप्रतीतिसमये व्यञ्जकबुद्धिर्न दूरीभवतीत्याशयेन ध्वनिवादिना व्यक्तिः समर्थिता। यथा घटप्रकाशवेलायां प्रदीपप्रकाशो न निवर्तते, तद्वत् व्यङ्ग्यार्थप्रतीतिसमये व्यञ्जकप्रतीतिरपि न दूरीभवतीति ध्वनिवादिन आशयः। नहि शब्दच्छलेन परकीयं मतं दूषयितुं युक्तम्। यदा व्यञ्जकप्रतीतिसमय एव व्यङ्ग्यस्य प्रतीतिर्व्यक्तिवादिन इष्टा स्यात्तदैव व्यक्तिं विदूष्य ध्वनिध्वंसो न्यायः, न तु तद्वैपरीत्येन। अतो व्यक्तिवादिनो मते व्यंग्यव्यञ्जकयोर्घटप्रदीपन्यायमूलमवगमनमदूषणमेव। यथा पदार्थद्वारेण वाक्यार्थः प्रतीयते प्रदीपेन च घटः प्रकाश्यते तथैवास्माकं मते वाच्यार्थावबोधपूर्विका व्यङ्ग्यर्थप्रतिपत्तिः। कार्यकारणभावेनापि व्यङ्ग्यार्थप्रतीतिर्न तथा नियता यथा लिङ्गाल्लिङ्गिज्ञानं नियतम्। केवलं वाच्यार्थ उपायः सन्नौपयिकमर्थं प्रत्यायति, प्रत्याय्यप्रतीतिकाले प्रत्यायकस्यापि प्रतीतिर्न विरमतीति ध्वनिवादिनोऽभिमतम्। तन्नानेन स्वकृतेन व्यक्तिलक्षणेन ध्वनिध्वंसनमुचितम्।

यच्चापि महिम्ना नियमेन विभावानुभावव्यभिचारिभिः रसप्रतिपत्तिर्भवतीति मुख्यया वृत्त्या रसस्य व्यङ्ग्यत्वं विदूष्य तस्योपचारेण व्यङ्ग्यत्वं प्रोक्तं तदपि न शोभनम्। यद्यपि रसप्रतीतिकाले क्रमोऽस्ति परमसावलक्ष्यः सूचीभिन्नशतदलवत्। नापि रसप्रतीतौ सम्बन्धस्मरणादिव्यवधानं किञ्चिदनुभूयते यथानुमितौ। निमित्तनैमित्तिकभावस्त्वस्ति, विभावादीनां कारणत्वात् रसस्य च कार्यत्वात्। परं नानेन क्रममूला साध्यसाधनभावावलम्बिनी रसप्रतीतिरिति विनिगमयितुं शक्यम्। विभावानुभावादिभिरास्वाद्यमाना एव रत्यादयो भावाः स्वसंविदानन्दे पर्यवस्यन्तः ब्रह्मानन्दसहोदरं रसरूपिणं परमानन्दमनुभावयन्तीति व्यञ्जकेभ्यो विभावादिभ्योरसोऽभिव्यक्तो भवति, सम्बन्धस्मरणादिव्यवधानं विनेति मुख्ययैव वृत्त्या रसस्य व्यङ्ग्यत्वं सिद्धं न तूपचारेण।

वस्त्वलङ्कारध्वन्योः प्रतीतिः क्रममूला अस्ति, परं नैतावता तयोरनुमेयत्वं

शक्यसम्पादम्। तत्राप्यभिधालक्षणानुमानव्यतिरिक्तस्य व्यञ्जनव्यापारस्यावश्यमाश्रयणीयत्वात्। नहि वस्त्वलङ्काररूप्यर्थः क्रमेण संवेद्य इति तस्यानुमेयत्वमिति युक्तम्। 'मम धम्मिअ' इति पूर्वोक्ते उदाहरणे हेतुदोषादनुमानस्वरूपमेव दूषितं भवतीति भ्रमणाभावरूपिणो व्यङ्ग्यार्थस्य अनुमेयत्वं सर्वथाऽनुपपन्नम्। एवं वस्त्वलङ्काररूपिणोरर्थयोरपि व्यङ्ग्यत्वमविरुद्धम्। तत्रापि अभिधालक्षणादिव्यापारस्य प्रवेष्टुमशक्यत्वात्।

किञ्चोपचारबलेन रसस्य व्यङ्ग्यत्वं संप्रतिपद्यमानेन महिमभट्टेन व्यक्तिपक्षः भङ्ग्यन्तरेण स्वहस्तित एव। रसस्य व्यङ्ग्यत्वमिति तावन्न विप्रतिपत्तिः महिम्नः। तच्च मुख्यया वृत्त्योपचारेण वेत्यन्यदेतत्।

यच्चापि महिम्ना भ्रम धार्मिकेत्यत्र वस्तुध्वनेरनुमेयत्वं प्रोक्तम्, तदप्यनुमितिस्वरूपमपर्यालोच्यैव। तथाहि—निर्दुष्टेन हेतुना नियतस्य साध्यस्य पक्षे सिद्धिरिति सर्वजनाभ्युपगतमनुमितिस्वरूपम्। यदि हेतुर्दुष्टस्तदा पक्षे साध्यस्यानुमितिरपि विदूषिता भवति। अत एवानुमितौ हेतुना सर्वथा निर्दोषेण भाव्यम्।

हेतुत्वञ्च अनुमितिकारणीभूतलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकसाध्याविषयकशाब्दधीजनकविभक्तिमच्छब्दत्वम्। यथा—पर्वतादिपक्षकवह्न्यादिसाधकस्थले धूमादिः। (२२) यत्र हेतोर्हेतौ वा आभास स हेत्वाभास इति व्युत्पत्त्या हेत्वाभासपदस्य हेतुदोष इत्यर्थः। स चानुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयरूपः। यथा—ह्रदो वह्निमान् धूमादित्यस्मिन्नुदाहरणवाक्ये वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयकनिश्चयानन्तरं ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकानुमितेः कदाचिदप्यनुदयात्। एवं ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभाववत् ह्रदादिरूपो दोषो हेत्वाभासः।

प्रस्तुते च दृप्तसिंहसद्भावरूपः साध्यस्य भीरुभ्रमणाभावस्यानुमापको हेतुरनैकान्तिको हेत्वाभासः। अनैकान्तिकश्च साध्यसंशयहेतुः। यथाहि—नित्यः शब्दः स्पर्शत्वादित्यत्र स्पर्शत्वादित्यनैकान्तिको हेतुः। यत्र यत्र नित्यत्वाभावः तत्र तत्र स्पर्शत्वाभावः, यथा कुम्भः। तत्र हि स्पर्शवत्वमनित्यत्वञ्च। पूर्वप्रतिपादितस्यानुमानाकारस्य दुष्टहेतुवशाद्धेत्वाभासाकारस्तु निम्नलिखितप्रकारेण बोध्य—

अयं देशो भीरुभ्रमणायोग्यो दृप्तसिंहसद्भावादित्यनुमितौ राजाज्ञया

२२. झलकीकरकृतः न्यायकोशः, पृ० १०७१।

अन्येन केनचिद् वा कारणेन दृतसिंहसद्भावेऽपि भीरुभ्रमणयोग्यतायाः सम्भावनादनैकान्तिको हेत्वाभासः। पूर्वप्रतिपादिते व्याप्तिस्वरूपे हेतुदोषसङ्गमनम् यथा—यत्र यत्र दृतसिंहसद्भावस्तत्र तत्र भीरुभ्रमणायोग्यत्वमित्यस्या अन्वयव्याप्तेः राजाज्ञया दूषितत्वात्। अपि च पूर्वोक्तेऽनुमानशरीरे दृतसिंहसद्भावरूपो हेतुर्विरुद्धोऽपि अस्पर्शत्वादेर्हेतोः शुनो बिभ्यतोऽपि धार्मिकस्योत्साहवशात् मृगयादिकुतूहलेन वा दृतसिंहसद्भाववति गोदानदीतटे भ्रमणसम्भवात्। गोदातीरे दृतसिंहसद्भावो न प्रत्यक्षप्रमाणेन सिद्धः। पुंश्चल्या वचनमेव तत्र प्रमाणम्। न च तद्वचनं सर्वथा सत्यम्। सुरतसुखविघ्नकोपाकुलायास्तस्यावचनेऽविश्वासात्। अतो गोदातटं भीरुभ्रमणायोग्यं दृतसिंहसद्भावादित्यनुमानेऽसिद्धो हेत्वाभासोऽपि दृश्यते। एवञ्च यद्भीरुभ्रमणं तद्भयकारणनिवृत्त्युपलब्धिपूर्वकमिति व्यतिरेकव्याप्तेः दूषितत्वादनुमान शरीरं सर्वथा दुष्टम्। तत एव भीरुभ्रमणाभावो व्यङ्ग्य एव नत्वनुमेयः।

किञ्च लिङ्गात् यल्लिङ्ग्यनुमीयते, असौ सर्वदा नियत एव। धूमादनुमीयमानोऽग्निस्तदुत्पत्तिसम्बन्धात् सदा नियतरूपः। परं व्यङ्ग्योऽर्थो न सदा नियतः। नापि च तत्प्रत्यायको वाच्योऽर्थस्तेन सह सदा सम्बद्धः। परन्तु वक्तृबोद्धव्यकाक्वादीनामुपाधीनां बलादनुभूयमानो व्यङ्ग्योऽर्थ औपाधिकः सन्ननियतसम्बन्धोऽपि दृश्यते। अतएव 'सूर्योऽस्तगतः' इत्यत्र नियताद् वाच्यार्थादुपाधिभेदेन अनियता अनवधयोऽर्था अवभासन्ते। यदि व्यङ्ग्योऽर्थोऽनुमेय एव स्यात्तदा धूमाद् यथा वह्निज्ञानं नियतं तथा प्रस्तुताद् वाक्यादपि नियतस्यैवार्थस्य प्रतीतिः संभवेत्। परं 'गावः संह्रियन्ताम्' 'दूरं मा गाः' इत्यादयोऽनवधयोऽर्था वक्तृबोद्धव्यादीनामुपाधीनां महिम्ना बोद्धरि बोद्धरि भासन्ते। नहि 'सूर्योऽस्तं गतः' इत्यस्य वाक्यस्य 'गावः संह्रियन्ताम्' इत्येव नियतोऽर्थो व्यङ्ग्यार्थः, येन तस्यानुमेयत्वं स्यात्। प्रत्युत पूर्वोक्तदिशा वक्तृबोद्धव्यवैशिष्ट्यमहिम्ना असंख्या अर्थाः परिस्फुरन्ति।

अपि च व्यङ्ग्योऽर्थो यद्यनुमेयः स्यात्तदा शब्दार्थविषये मिथ्याविवादा एव न प्रवर्त्तेरन्। सर्वस्यार्थस्य अनुमेयत्वेन नियतत्वात्, तत्र च विसंवादानामनवकाशत्वात्। अतस्तुरीयस्यार्थस्य व्यङ्ग्यत्वं सर्वथा दुरपह्नवम्।

ननु मास्तु व्यङ्ग्योऽर्थोऽनुमितिवेद्यः परं 'जीवति चात्र गोष्ठ्याम् अविद्यमानश्चैत्रः' इत्यादौ यथा अर्थयित्या चैत्रस्य गोष्ठ्या बहिर्निवासः सम्भाव्यते, तद्वत् 'भ्रम धार्मिक' इत्यादौ भीरुभ्रमणाभावरूप्यर्थोऽर्थापत्तिप्रमाणवेद्यः स्वीकार्यः, किमनया व्यञ्जनया शशशृङ्गायमाणयेति चेन्न, अर्थापत्तिप्रमाण

स्याप्यनुमानेऽन्तर्भावात्तत्रापि च व्याप्त्यादिसम्बन्धस्यावश्यमपेक्षणीयत्वात्। अयमाशयः। इह हि द्विविधा अर्थापत्तिः। श्रुतार्थापत्तिरर्थापत्तिश्चेति। यत्रानुपपद्यमानः शब्दः शब्दान्तरं कल्पयति सा श्रुतार्थापत्तिः। यथा द्वारमिति शब्दः पिधेहीति क्रियापदं कल्पयति। अतः श्रुताच्छब्दाच्छब्दस्याध्याहारे श्रुतार्थापत्तिः। यत्र च दृष्टः श्रुतो वार्थोऽनुपपन्नोऽर्थान्तरं कल्पयति सा अर्थापत्तिः। यथा तत्रैव द्वारमित्यर्थोऽनुपपन्नः पिधेहीत्यर्थं कल्पयति। अतोऽत्रानुपपन्नादर्थादर्थान्तराध्याहारे कृतेऽर्थापत्तिः। 'पीनो देवदत्तो दिवा न भुंक्ते' इत्यत्र दिवाभोजनाभाववत् पीनत्वं रात्रिभोजनं विनानुपपन्नमित्यनुपपत्त्या श्रुतार्थापत्तौ 'रात्रौ भुंक्ते' इति शब्दोऽर्थापत्तौ च तदर्थमात्रं कल्प्यते। एवमर्थापत्तिवशात् 'रात्रिभोजनवान् देवदत्तः' इत्यर्थो गृह्यते। 'पर्वतो वह्निमान् धूमात्' इत्यत्र यथा धूमवह्न्योर्व्याप्त्यादिसम्बन्धं पर्यालोच्य पर्वते वह्निज्ञानं भवति तथैवार्थापत्तावपि 'रात्रिभोजनवान् देवदत्त' इत्यर्थो व्याप्त्यादिसम्बन्धपर्यालोचनया प्रतीयते। यथा—यः यः पीनः स स भोजनवान्, देवदत्तः पीनोऽतो रात्रौ भोजनवानित्यादिना पीनत्वभोजनत्वयोः व्याप्त्यादिसम्बन्धं पर्यालोच्य दिवा भोजनाभाववतो देवदत्तस्य रात्रिभोजनत्वं कल्प्यते। एवमर्थापत्तिर्नानुमानबाह्या। यतो हि व्यङ्ग्यार्थस्य अनुमेयत्वमेव नोपपद्यते तत एव अनुमानपुच्छभूतया अर्थापत्त्या असौ ललनालावण्यरमणीयो व्यङ्ग्यार्थः कथं प्रत्याय्यः। अतोऽवश्यमाश्रयणीयायाः ध्वननवृत्तेरनुमानादिना प्रकारेण खलीकरणप्रयासः सर्वथा दूरमपास्तो भवति।

यच्चापि प्रधानव्यङ्ग्यगौणव्यङ्ग्याभ्यां काव्यस्योत्तममध्यमविभागौ महिमभट्टाचार्येण विप्रतिपद्येते तदपि ध्वनिवादिनामभिप्रायमपर्यालोच्यैव। यद्यपि अखण्डास्वादविषयः काव्यार्थ इत्यत्र नास्ति विप्रतिपत्तिः; परं तथापि विवेकिभिरवान्तरव्यङ्ग्यं वाच्यसमुदायमधिकृत्य जीवितान्वेषणे क्रियमाणे क्वचित् प्रतीयमानं भृत्यवद् वाच्यार्थमेवोपस्कुर्वाणं सत् गुणीभावम् आप्नोति, क्वचिच्च मूर्धाभिषिक्तभूपतिवदुयस्कार्यं सत् प्रधानभावम् आसादयतीति प्रतीयमानार्थस्य प्राधान्ये ध्वनिर्गौणभावे च गुणीभूतव्यङ्ग्यं काव्यं सहृदयहृदयानुभवबलात् सिद्धम्। उत्तमे ध्वनिकाव्ये प्रतीयमानार्थस्य प्राधान्येनास्वादः मध्यमे काव्ये च तस्याप्राधान्येन अन्यादृश्येव चारुता। चारुत्वं तु प्रतीयमानार्थकृतमित्यत्र न विवदामहे। परं प्रतीयमानार्थप्राधान्याप्राधान्येन कृतः काव्यस्योत्तममध्यमभेदः सहृदयहृदयसाक्षिकः। प्रसिद्धं हि लक्ष्यमाश्रित्य लक्षणं प्रवर्त्तते। अयञ्चोत्तममध्यम-

व्यवहारः सहृदयहृदयानुभवसिद्धो न केनाप्यपह्नूयते। ध्वनिकाव्ये चारुत्वम् अधिकं जातं, गुणीभूतव्यङ्ग्ये काव्ये च व्यङ्ग्यार्थस्य गौणभावे का चारुता ध्वनिकाव्यापेक्षया लघ्वीभूतेति सहृदया एवात्र प्रमाणम्। प्रधानव्यङ्ग्यं यथा हृदयमावर्जयति, न तथा दास्यमनुभवद् राजकलत्रमिव गुणीभूतं व्यंङ्ग्यम्। अतएवोत्तममध्यमकाव्यव्यपदेशः परम्पराप्राप्तः प्रत्याख्यातुमशक्यः। तदनुरुध्यैव ध्वनिवादिभिः प्रधानगुणीभूतव्यंग्यमवलम्ब्य काव्यस्योत्तममध्यमविभागः कृतः। इत्थं काव्यवैशिष्ट्ये सिद्धे ध्वनित्वमव्याहतमेव।

अस्य विवेचनस्यायं निष्कर्षो यन्महिममहानन्दवर्धनाचार्ययोः कुत्रचित् सम्मतिः कुत्रचिच्च विमतिः। तदेवाधस्तात् समुल्लिख्यते।

## महिमभट्टानन्दवर्धनाचार्ययोरैकमत्यम्

१. काव्यस्यात्मा प्रतीयमानोऽर्थः।
२. स त्रिविधो वस्त्वलङ्काररसरूपः।
३. रसो न कदापि वाच्यः।
४. कविशक्त्यर्पिता भावाः काव्ये चारुत्वाधायकाः।

## तयोर्विमतिः

| महिमभट्टमते | आनन्दवर्धनमते |
|---|---|
| १. प्रतीयमानार्थस्य गम्यत्वम् | १. तस्य व्यङ्ग्यत्वम् |
| २. प्रतीयमानार्थप्रतिपादनपरो व्यापारोऽनुमितिः। | २. असौ व्यञ्जना। |
| ३. वाच्यप्रतीयमानार्थयोः क्रमेण प्रतीतिः। | ३. तयोः साहित्येन प्रकाशः। |
| ४. शब्दः सदा वाचक एव। | ४. शब्दस्य व्यञ्जकत्वप्युपपन्नम्। |
| ५. प्रतीयमानार्थस्य प्राधान्याप्राधान्येन काव्यस्योत्तममध्यमभेदकरणमनुपपन्नम्। | ५. आनन्दवर्धनमते काव्यस्योत्तममध्यमविभागः प्रतीयमानार्थप्रधानगौणभावकृतो युक्तियुक्तः। |
| ६. उपचारेणैव रसध्वने र्व्यङ्ग्यत्वव्यपदेशः समीचीनः न मुख्यया वृत्त्या। | ६. मुख्ययैव वृत्त्या प्रतीयमानार्थस्य व्यक्तिवेद्यत्वमुपपन्नम्। |

अनेन पर्यालोचनेनैतत्स्पष्टं प्रतिपद्यते यन्महिमभट्टोऽतीव सूक्ष्मेक्षिकया

स्वमतं प्रतिष्ठापयति । तस्यानुमितिवादोऽलङ्कारशास्त्रपाण्डित्यस्य चूडान्तं निदर्शनम् । तथापि ध्वनिकारानुयायिभिराचार्यैस्तस्य दर्शनमुपेक्षितम् । अस्यामुपेक्षायामधोलिखिता हेतवः संभाव्यन्ते—

(१) महिमभट्टेन स्वयशःप्रख्यापनार्थं ध्वनिसिद्धान्तो ध्वंसितः । अतस्तेन प्राधान्येन ध्वनिसिद्धान्ते दोषा एवान्वेषिताः ।

(२) ध्वनिसिद्धान्तोऽभिनवगुप्तपादाचार्येण प्रौढं लोचनभाष्यं विरचय्य सुस्थापितः मम्मटादिभिः परवर्तिभिराचार्यैश्चायं युक्ताभिर्युक्तिभिः परां पुष्टिं प्रापितः । परं व्यक्तिविवेकग्रन्थस्य टीकाकर्त्रा रुय्यकाचार्येण पदे पदे महिमभट्टस्य दर्शनं कटाक्षितम् । अतो महिमभट्टदर्शनं युक्ताभिर्युक्तिभिर्युक्तमपि परवर्तिभिरालङ्कारिकैर्न समादृतम् ।

(३) सहृदयसंवेद्यः प्रतीयमानोऽर्थो हृदयसंवादवशादास्वाद्यते, न तु शुष्कतर्कोपक्रमकर्कशधिया । परमाह्लादजनकं काव्यं हृदयादेवाविर्भवति, हृदयमेव स्पृशति हृदयेनैव चास्वाद्यते ।

(४) अविनाभावमूलं महिमभट्टप्रपञ्चितं प्रतीयमानार्थस्यानुमेयत्वं कार्यकारणभावादिसम्बन्धमपेक्ष्यैव प्रवर्तते, परं रतिहासभावाद्युपस्कृतं काव्यं दर्शनाच्छ्रवणादेव विदग्धानां मनस्स्वानन्दसन्तानमातनोति । न तत्रानुमेयार्थावगतिहेतुका शुष्कतर्ककर्कशधीग्राह्या लिंगलिंगिभावपर्यालोचनापि ।

(५) अनुमेयार्थप्रतीतिर्नियतेनैव हेतुना सम्पद्यते । अतोऽनुमेयार्थः सदा नियत एव । परं व्यंग्यार्थस्य प्रतीतिर्न नियता सदा । नापि च तद्द्योतनपरा विभावानुभावादयो धूमाद्वह्न्यनुमितिवन्नियताः । परं वक्तृबोद्धव्यादीनामुपाधीनामानन्त्यान्निरवधिरनुरणनात्मकोऽनियतः अर्थः काव्यतत्त्वविद्भिः सहृदयैरास्वाद्यते ।

अतएव ध्वनिसिद्धान्तप्रखरभास्करालोके प्रकाण्डपाण्डित्येन तार्किकोपज्ञया प्रतिभया च उपनिबद्धोऽपि महिमभट्टाचार्यस्य अनुमितिवादः खद्योतायितः ।

———

# काशिका-सिद्धान्तकौमुद्यो-र्वेदवचनानि

महेशदत्तशर्मा

शब्दशास्त्रविचक्षणैर्वेदविद्यानिष्णातसायणाचार्यप्रभृतिभाष्यकारैश्च पाणिनिव्याकरणं वेदाङ्गत्वेन स्वीकृत्य तदध्ययनं वेदव्याख्यानावसरे च तदनुगमनं कृतमिति लोकविदितो वृत्तान्तः। यथा च तत्रभवता आचार्यकात्यायनेन पाणिनिसूत्राणां भाषासंबन्धिसूत्रेषु कानिचिद् वार्त्तिकानि विरचितानि तथैव तेन वैदिकसूत्रेष्वपि तेषां प्रणयनं कृतमासीत्। अतः सवार्त्तिकमेवेदं पाणिनीयशब्दशास्त्रं भाषाया वेदस्य च ज्ञानं प्रददाति न तु केनचिदन्यतरेण विधिना। परन्तु भाषागतानां वेदस्थवचसां च उदाहरणरूपेण या सुस्पष्टा स्थितिः सूत्रार्थप्रकाशिकायां काशिकायां व्याकरणसिद्धान्तप्रतिपादिकायां वैयाकरणसिद्धान्तकौमुद्यां च वरीवर्त्ति तदपेक्षया उभयविधोदाहरणानां स्थितिर्महाभाष्येऽस्पष्टा असंपूर्णा च। वर्तन्ते हि महाभाष्येऽनुपलब्धभूतानि बहूनि कानिचिद् वेदविद्यानियमसहकारीणि सूत्राणि। द्वितीयं च—काशिकासिद्धान्तकौमुदीमध्ये उदाहरणप्रदानावस्थायां काशिकैव गरीयसी; यतोऽस्यां वृत्तौ कानिचित्तादृशानि वार्त्तिकानि समुपलभ्यन्ते येषां सिद्धान्तकौमुद्यादिष्वभावः[1]। अत एव काशिका—सिद्धान्तकौमुद्योर्वैदिकोदाहरणानां कीदृशी स्थितिरित्यस्मिन् निबन्धे विचार्यते।

काशिका अष्टाध्यायीक्रममालम्बते, तस्मात्तस्यामिदं निर्णेतुमशक्यं यत्तत्र वृत्तिकाराभ्यां (वामनजयादित्याभ्यां) किं सूत्रं वैदिकत्वेनाभिमतम्। तत्र बहुत्रेयं स्थितिर्यद् यानि सूत्राणि न सन्ति छन्दोविषयकाणि तत्रापि ग्रन्थकाराभ्यां वैदिकवचनमुदाहरणत्वेनोपन्यस्तम्[2]। इतश्च सिद्धान्तकौमुद्यां भट्टोजि

---

१. का० वृ० ४।४।१२८—'लुगकारेकाररेफाश्च वक्तव्याः' (वार्त्तिकम्)।
का० वृ० ४।४।१४०—'वसुशब्दादपि यद्वक्तव्यः' (वार्त्तिकम्)।
इमे द्वे अपि छन्दोविषयकवार्तिके सिद्धान्तकौमुद्यां नोपलभ्येते।

२. का० वृ० २।२।१६; २।३।६५—'पुरां भेत्ता' (ऐ० ब्रा० ८।१२।५; शांखायन श्रौ० ८।१७।१; 'वज्रस्य भर्ता' (तै० सं० २।४।२८।१; शांखायनश्रौ०

दीक्षितेन प्रकरणविभजनावसरे वैदिकप्रक्रियां स्वरप्रक्रियां च पृथक्त्वेन स्थापयित्वा मुख्यत्वेन वैदिकी प्रक्रियायां छन्दोविषयकसूत्राणि ( येषां विषये नास्ति कोऽपि विवादः ) समावेश्य लोकवेदयोः समाधानं कृतम्[3] । अपि च सिद्धान्तकौमुद्यां ग्रन्थकारेण वैदिकोदाहरणप्रदाने काशिकातः प्राचुर्येण साहाय्यं परिगृहीतमित्यपि कथनं नानुचितम् ।

ग्रन्थद्वयेऽपि संहिता–ब्राह्मण–आरण्यक–उपनिषद्–सूत्रादिग्रन्थेभ्यो वैदिकोदाहरणान्युपलभ्यन्ते ।

काशिकावृत्तिस्थवैदिकवचांसि प्राधान्येन ऋग्वेदे यजुषि चोपलभ्यन्ते । काशिकासिद्धान्तकौमुदीग्रन्थद्वयेऽपि कानिचिद् वचांसि अथर्ववेदात् ( शौनकशाखावलम्बिनः ) परिगृहीतानि । परं तेषां सङ्ख्या नास्ति अधिका ।

काशिकायामेतादृशमपि दृश्यते यद् येषाम् ऋग्वेदस्थमन्त्राणां शाखान्तरेषु शब्दमात्राविपर्ययेण पाठो विद्यमानस्तर्हि काशिका यजुर्वेदस्थमेव वचनं प्राधान्येन उदाहरति ।[4] यथा—का० वृ० ६ । १ । १३३ सूत्रे—'एष स्य वाजी

---

८।१७।१)—इमे द्वे अपि उदाहरणे वैदिकवाङ्मये उपलभ्येते । एवं च का० वृ० २।३।१६—'नमो देवेभ्यः' ( वा० सं० २।७ ); 'स्वधा पितृभ्यः' (वा० सं० २।७); 'स्वाहाग्नये' (वा० सं० ३८।११)—इत्यादीन्युदाहरणानि वेदे एवोपलभ्यन्ते ।

३. यद्यपि सिद्धान्तकौमुदीकारेण प्रकरणसंस्थापनवेलायां लोकवेदयोः पृथक् पृथग् उपन्यासः कृतस्तथापि तत्र लौकिकप्रकरणेष्वपि कानिचित्तादृशानि सूत्राणि वार्त्तिकानि च दरीदृश्यन्ते येषामुदाहरणानि केवलं वैदिकवाङ्मये एवोपलभ्यन्ते ।

यथा—

४।१।६२ ( ५१६ ) सूत्रे—'दित्यवाट् च मे दित्यौही च मे' ( वा० सं० १८।२६ ) ।

३।२।१३७ ( ३११७ ) सूत्रे—'वीरुधः पारयिष्णवः' (ऋ० १०।९७।३) ।
३।२।१३९ ( ३११९ ) वार्त्तिके—'दङ्क्ष्णव. पशवः' (वा० सं० १५।१५) ।

३।२।१७० ( ३१५० ) सूत्रे—'देवाञ्जिगाति सुम्नयुः' (ऋ० १।७९।१०। एवं च ३।२।१७१ ( ३१५१ ) सूत्रस्थोदारणान्यपि ऋग्वेदे समुपलभ्यन्ते ।

४. तुलना—Ramgopal, "Vedic quotations in the Kasika and Siddhantakaumudi", ABORI, Vol. XLVIII–XLIX, p. 228.

'क्षिपणि तुरण्यति' वाजसनेयिसंहितास्थं (९।१४) वचनं वर्तते। परन्त्विदं ऋग्वेदे (४।४०।४) 'उत स्य वाजी क्षिपणि तुरण्यति' इति रूपेण पठ्यते।

वृत्तिद्वयेऽपि शुक्लयजुर्वेद—शतपथब्राह्मणापेक्षया कृष्णयजुर्वेद—शाखावलम्बिनी तैत्तिरीय-मैत्रायणी-काठक-संहितादिभ्य एवाधिक्येनोदाहरणानि प्रस्तुतानि। परं यत्र काशिका कृष्णयजुर्वेदादुदाहरणानि प्रस्तौति तत्र सिद्धान्तकौमुदी प्राय ऋग्वेदस्थवचनान्येवोदाहरति।
यथा—

का० वृ० ७।२।६४—त्वं हि होता प्रथमो बभूथ (तै० सं० ३।१।४।४) सि० कौ० ३५८२—विद्मा तमुत्सं यत आ बभूथ (ऋ० १०।८४।५)।

यतो हि काशिका कृष्णयजुर्वेदस्थवचनान्येव प्रायः प्रस्तौति, तत्रेदं कारणं संभाव्यते यत् पाणिनिना 'देवसुम्नयोर्यजुषि काठके' (७।४।३८) इत्यस्मिन् सूत्रे काठकसंहिताया उल्लेखः कृतः। तथा च तेन 'साढ्यै साढ्वा साढेति निगमे' (६।३।११३) इत्यस्मिन् सूत्रे तादृशं-शब्दस्वरूपं विन्यस्तं यत् केवलं मैत्रायणीसंहितायामेवोपलभ्यते।[5] अथ किम् ? पाणिनिना स्पष्टरूपेण 'यजुष्युरः' (६।१।११७) इत्यस्मिन् सूत्रे यजुष उल्लेखः कृतः। यस्योदाहरण यजुषि यजुः—सम्बन्धिश्रौतादिग्रन्थेषु च केवल दृश्यते।[6] अनेन प्रकारेणेदं प्रतीयते यत् कृष्णयजुषस्तच्छाखानां च प्रचारो भारतस्य पश्चिमोत्तरभागे एव प्राधान्येन समभवत् यत्र भगवान् पाणिनिः प्रादुर्बभूव तत्प्रणीतं व्याकरणं च यत्र प्रथमं प्रसिद्धि भेजे। इदमेव कारणं यत् काशिका कृष्णयजुर्वेदस्थवचनान्येव प्राधान्येनोदाहरति। एवं भूत्वापि ऋग्वेदमन्त्रापेक्षया कृष्णयजुर्वेदस्थवचसां स्थानं काशिकायामपि न्यूनातिन्यूनं वर्तते।[7]

---

५. साढ्यै (मै० सं० १।६।३१); साढ्वा (मै० सं० ३।८।५)। अत्र सूत्रस्थं 'साढा' इति पदं पदमञ्जरीकारोऽपपाठत्वेन स्वीकरोति।

यतो हि संहितासु 'आषाढः', 'आषाढम्' इत्यादीनि पदान्युपलभ्यन्ते। परं पै० सं० १०।४।१२ मन्त्रे 'साढामित्रम्' इत्यपि दृश्यते; तत्र साढ+अमित्रम् अथवा साढा+अमित्रम् इति सन्धिविच्छेदः कर्तुं शक्यते।

६. द्र०—क्षितीशचन्द्रचट्टोपाध्यायः, "पाठविमर्शः", मञ्जूषा, सितम्बर १९५०, पृ० ३०।

७. द्र०—Ramgopal, ABORI, Vol. XLVIII–XLIX, p. 228.

काशिकापेक्षया सिद्धान्तकौमुद्यां पैप्पलादसंहितास्थमन्त्राणां स्थितिर्नाममात्रेण दृश्यते । यतो हि 'इन्द्राग्नी हुवे'; 'ह्वयामि मरुतः शिवान्'; 'ह्वयामि विश्वान् देवान्'[८] इत्यादीनि बहूनि पैप्पलादवचांसि सिद्धान्तकौमुद्यां न वर्तन्ते ।

बहुषु सूत्रेषु काशिकायाः सिद्धान्तकौमुद्याश्च वैदिकोदाहरणानामेतादृशी स्थितिर्यत्र काशिका केवलमुदाहरणमात्रं प्रस्तौति तत्र सिद्धान्तकौमुदी तदुदाहरणसमन्वितं कञ्चिदधिकमपि मन्त्रभागं स्थापयति । यथा—

का० वृ० ३ । ४ । ९४—ज्योषिषत् ( ऋ० २ । ३५ । १ ) । सि० कौ० ३४२७—सुपेशस्करति जोषिषद्धि ( ऋ० २ । ३५ । १ ) । का० वृ० ३ । ३ । ९६—मतिः ( ऋ० १ । १४१ । १ ) । सि० कौ० ३४२०—इयं ते नव्यसी मतिः ( ऋ० १ । १४१ । १ ) ।

तथा च यत्र सिद्धान्तकौमुद्यां केवलमुदाहरणमात्रं वर्तते तत्र काशिकायां तदपेक्षयाधिको मन्त्रभागः । यथा—का० वृ० २ । ४ । २८—अहोरात्रे इदं ब्रूमः ( अथ० १ । १६ । ५ ) । सि० कौ० ३३९९—अहोरात्रे ( अथ० १ । १६ । ५ ) ।

सिद्धान्तकौमुद्यां बहूनि वैदिकोदारणानि काशिकाप्रदत्तानि वर्तन्ते । परं कुत्रचित् सिद्धान्तकौमुद्यां नवीनमपि परिवर्तनं कृतम् । यथा—

का० वृ० ७।२। ३४—वरूत्रीष्ट्वा देवीर्विश्वदेव्यावती (वा० सं० ११।६१) सि० कौ० ३५८२—त्ररूत्रीभिः सुशरणो अस्तु (ऋ० ७।३४।२२) ।

बहुषु स्थलेषु काशिकापेक्षया सिद्धान्तकौमुदीस्थवैदिक-वचसां स्थितिः शुद्धा । यथा—

का० वृ० ७।१।४१—वत्सं दुहन्ति कलश चतुर्बिलम् । सि० कौ० ३५६३—उत्सं दुहन्ति (कलशं चतुर्बिलम्) (तै० ब्रा० ३।७।४।१६) इदं वचनं अथर्ववेदे (१८।४।३०)—'कोशं दुहन्ति कलशं चतुर्बिलम्' इति रूपेण वर्तते । परं काशिकोद्धृतं वैदिकवचनं केनापि सह न सङ्गच्छते ।

कुत्रचित् सिद्धान्तकौमुदीस्थवैदिकोदाहरणानां स्थितिरत्यद्भुता विक्षोभकरी च विद्यते । यथा हि तत्र—१।२।६१ (३३८७) सूत्रे—'पुनर्वसुर्नक्षत्रं पुनर्वसू वा' १।२।६२ (३३८८) सूत्रे च—'विशाखा नक्षत्रं विशाखे वा' इत्युदाहरणस्वरूपम् । परमेतेषां सिद्धान्तकौमुद्योदाहृतानां वचसां संहिताग्रन्थेषु—'पुनर्वसुर्नक्षत्रम्'

---

८. का० वृ० ६ । १ । ३४; पै० सं० १५ । २२ । १
इन्द्राग्नी हुवे ह्वयामि मरुतः शिवान् ।
ह्वयामि विश्वान् देवान् इमं होममवन्तु मे ॥

(मै० सं० २।१३ २); 'पुनर्वसू नक्षत्रम्' (तै० सं० ४।४।१०।१); विशाखा नक्षत्रम्' काठक सं० ३९।१३); 'विशाखे नक्षत्रम्' (तै० सं० ४।४।१०।२)इत्यादि-रूपेणैव पृथक् पृथक् स्थलेषु विद्यमानात् सिद्धान्तकौमुद्यामपि तेनैव प्रकारेण पृथक् स्थापनं समुचितमासीत्, नान्येन विधिना। अत एव काशिकायां सूत्रद्वयेऽपि उदाहरणानां विकल्पविधानतया पृथक् पृथग् उपन्यासः कृतः।

बहूनां छन्दोविषयकसूत्राणामुदाहरणानि सिद्धान्तकौमुद्यां न प्रदत्तानि। यथा—१।२।३६ (३६६५), ३।४।१० (३४३७); ३।४।११ (३४३८) इत्यादीनां बहूनां सूत्राणामुदाहरणानि तत्र न वर्तन्ते।

काशिकायां लेखकप्रमादाद् मुद्रणदोषाद् वा बहूनि उदाहरणानि दुष्टानि प्रतीयन्ते। यथा काशिकायां 'उभे वनस्पत्यादिषु युगपत्' (६।२।१४०) इत्यत्र 'तृष्णावरूत्री' इत्युदाहरणम्। परन्त्विदमुदाहरणं कुत्रापि नोपलभ्यते। मैत्रा-यणीसंहितायां (४।८।१)–'तृष्टावरूत्री' काठकसंहितायां (३०।१)–'त्रिष्टावरूत्री'; कपिष्ठलकठसंहितायां (४६।२)–'त्वष्टावरूत्री' इत्यादीनि वचनानि समुपलभ्यन्ते। अतः काशिकायां 'तृष्णावरूत्री' इत्यस्य स्थाने मैत्रायणी संहितानिर्दिष्टं 'तृष्टा-वरूत्री' इत्येव पदं समीचीनं प्रतीयते।

काशिकास्थवैदिकोदाहरणानां काचिद् विचित्रापि स्थितिः परिलक्ष्यते। यतो हि यदि किमपि वैदिकवचनं काशिकाप्रदत्तेन वैदिकोदाहरणेन सह किञ्चिद् साम्यं धत्ते तदा पाठकस्तस्मिन् स्थले भ्रान्तो जायते। स तत्रोभयोर्वचनयोः (वेद-काशिकाप्रदत्तयोः) किं समुचितमिति निर्णेतुमशक्यः। यथा 'ग्रसित-स्कभित—' (७।२।३४) सूत्रे काशिकायां 'च ता वर्षेण विद्युत्' इत्युदा-हरणम्। इदमुदाहरणं वैदिकवाङ्मये साम्प्रतं कुत्रापि नोपलभ्यते। परमस्य साम्यं पैप्पलादसंहितास्थेन (१७।१२।१०)—'च ता वर्षेण विद्युता' इत्यनेन सह स्थापयितुं शक्यते।

कुत्रचित् काशिकासिद्धान्तकौमुद्योस्त्रुटिपूर्णानि वैदिकवचनानि। यथा 'तप्तनप्तनथनाश्च' (७।१।४५) इत्यस्मिन् सूत्रे काशिकायां 'यदिष्ठन' इत्यु-दाहरणम्। पदमञ्जर्यां च 'यतिष्ठान' इत्युल्लेखः। अत्र सिद्धान्तकौमुद्यां (मोती-लाल-बनारसीदाससंस्करणे, सूत्रसंख्या ३५६७) 'विश्वेदेवासो मरुतो यतिष्ठन'; अथवा (अन्येषु संस्करणेषु) 'विश्वे देवासो मरुतो यति ष्ठन' इति लेखः। परन्तु ऋग्वेदे (१०।६३।६)—'विश्वे देवासो मनुषो यति ष्ठन' इत्यनेन रूपेणोपलभ्यते। स एव पाठः शुद्धः। तथा च वृत्तिद्वये—(७।१।४५ सूत्रे) ऽपि 'ठन' इत्यन्तेन वैदिकप्रयोग उदाहृतः। परमुपर्युक्तमुदाहरणं सर्वथा अनु-चितम्। काशिकायां 'यदिष्ठन' इत्यस्मिन् स्थले 'इष्ठन' इति प्रयोगो व्युत्पादितः।

तत्र ( काशिकामते ) 'इष्ठन' इति प्रयोगो लोड्मध्यमपुरुषबहुवचनस्य स्थाने स्वीक्रियते । यथा हि काशिकायामुपन्यासः—"यदिच्छतेति प्राप्ते' इति । अतः काशिकायां 'यदिष्ठन' इत्यत्र 'इष्' इति धातुर्गम्यते । सिद्धान्तकौमुद्यां च 'ष्ठन' इति प्रयोगः । यस्य 'स्थन' इति पदपाठः । अतो भट्टोजिदीक्षितेनायं प्रयोग 'अस्' इति धातोर्लोड्मध्यमपुरुषबहुवचने कल्पितः । यथा स लिखति—'यत्सं-ख्यकाः स्थेत्यर्थः । यच्छब्दाच्छान्दसो डतिः । अस्तेस्तस्य थनादेशः" इति । वस्तुतस्तु 'ष्ठन' इत्युदाहरणं ऋग्वेदे ( १०।६३।६ ) 'अस् भुवि' इत्यस्माद् धातोर्लट्लकारमध्यमपुरुषबहुवचनस्यैव वर्तते ।[९]

ग्रन्थद्वये कानिचिद् एतादृशानि वैदिकवचनानि येषु छन्दोविषयकसूत्राणां विधिर्यथार्थरूपेण न सङ्गच्छते । यथा 'बहुलं छन्दस्यमाङ्योगेऽपि' ( ६।४। ७५ ) इत्यत्र 'मा······अवाप्सुः' इत्युदाहरणम् । अत्र लुङ्लकारे 'मा' इति प्रयुज्य-मानेऽपि अडागमस्य विधिर्निर्दिष्टः । यथा—'मा वः क्षेत्रे परबीजान्यवाप्सुः' इति । इदमुदाहरणं वैदिकवाङ्मये आपस्तम्बधर्मसूत्रे ( २।६।१३। ६ ), बोधा-यनधर्मसूत्रे ( २।२।३।३४ ) चोपलभ्यते । नान्यत्र । परं ग्रन्थद्वयेऽपि (आप०धर्म०, बोधा०धर्म० ) अवाप्सुः' इत्यस्य स्थाने 'वाप्सुः' इत्येव लेखः । अतः काशिका-सिद्धान्तकौमुदीविनिर्दिष्टमुक्तमुदाहरणमसाम्प्रतमेव जायते ।[१०]

केषाञ्चिद् वैदिकस्थलानां काशिकासिद्धान्तकौमुदीकृतं व्याख्यानमसङ्गतम-स्वीकार्यं च वर्तते । यथा 'आडयाजयारामुपसंख्यानम्' ( ७।१।३९ वा०, सि० कौ० ३५६१ सूत्रस्थले ) इत्यस्मिन् वार्त्तिके 'प्र बाहवा सिसृतम्' इत्युदाहरणम् । अत्र काशिकायां सिद्धान्तकौमुद्यां च 'बाहवा' इति पदं 'बाहुना' इति तृतीयैक-वचनस्य स्थाने स्वीक्रियते[११] । वस्तुतस्तु ऋग्वेद—( ७।६२।५ ) मन्त्रप्रमाणेन 'बाहवा' इति द्वितीयाद्विवचनस्य रूपम् ।[१२]

९. ऋ० १०।६३।६ मन्त्रे सायणः
हे विश्वे देवासः देवा यूयं यति यत्संख्या स्थन भवथ ॥ अपि च द्र०—Ramgopal, ABORI, Vol. XLviii—XLix, p. 229.

१०. रामगोपालमहोदयस्यैव शोधपत्रे, पृ० २२९ ।

११. का० वृ० ७।१।३९: 'प्र बाहुनेति प्राप्ते' प्रति । अत्र सि० कौ० अपि द्रष्टव्या ।

१२. ऋ० ७।६२।५ :
प्र बाहवा सिसृतं जीवसे न आ नो गव्यूतिमुक्षतं घृतेन ।
आ नो जने श्रवयतं युवाना श्रुतं मे मित्रावरुणा हवेमा ॥

अष्टाध्याय्यां यदि कस्मिन्नपि छन्दोविषयकसूत्रे विकल्पविधानं वर्तते तत्र काशिकायां विकल्पनिर्देशार्थमुदाहरणद्वयं पृथक् पृथक प्रस्तुतम् । परन्तु बहुत्र काशिकाप्रदर्शितोदाहरणस्वरूपद्वयेऽन्यतरस्य मूलस्थलं वैदिकवाङ्मये नोपलभ्यते । यथा—

| सूत्राणि | उदाहरणानि | मूलस्थलानि |
|---|---|---|
| १।४।९ | कुलुञ्चानां पतये नमः | वा० सं० १६।२२ |
| ,, | कुलुञ्चानां पत्ये नमः | × |
| २।३।३ | यवाग्वाग्निहोत्रं जुहोति | काठ० सं० ६।३ |
| ,, | यवागूमग्निहोत्रं जुहोति | × |
| ६।४।६ | त्वं नृणां नृपते | ऋ० २।१।१ |
| ,, | त्वं नृणां नृपते | × |

अत्र सिद्धान्तकौमुद्यां (१।४।९; ३३८९) – 'क्षेत्रस्य पतिना वयम्' (ऋ० ४।५७।१); (२।३।३; ३३९४) - 'यवाग्वाग्निहोत्रं जुहोति' (काठ० ६।३) इति एकैकमेवोदाहरणं प्रदत्तम् । तथा च ६।४।६ सूत्रं सिद्धान्तकौमुद्यां लौकिकत्वेनैव स्वीकृतम् । अत एव ज्ञायते यत् सिद्धान्तकौमुदीकारः प्राय उपलब्धमेव वैदिकवचनमुदाहरणत्वेनोपस्थापयति, नान्यत् ।

ग्रन्थद्वयस्य कानिचिद् वैदिकोदाहरणानि सांप्रतमनुपलब्धमूलकानि सन्ति । यथा ७।१।१० सूत्रे काशिकास्थं नद्यैः' इत्युदाहरणं वैदिकवाङ्मये कुत्रापि नोपलभ्यते[१३] । काशिकायां ३।१।३४; ३।४।७; ३।४।९४; ६।४।९७ सूत्रेषु 'मन्दिषत्' इति वैदिकमुदाहरणमनुपलब्धमूलकम् । अपि च काशिकायां सिद्धान्तकौमुद्यां च ३।१।८५ (३४३३); ३।४।१३ (३४४०); ३।४।१४ (३४४१) इत्यादीनां सूत्राणां कानिचिद् वैदिकवचांसि सांप्रतं नोपलभ्यते ।

यथा काशिकावृत्तिश्छन्दोविषयकसूत्राणां व्याख्याने तेषां प्रत्युदाहरणप्रदर्शनार्थमपि प्रयतते न तथा सिद्धान्तकौमुदी । यतः 'चतुर्थ्यर्थे बहुलं छन्दसि–(२।३।६२) इत्यत्र काशिकायां बहुलमित्यस्य कृते 'कृष्णो रात्र्यै' (वा० सं० २४।३६), 'हिमवतो हस्ती ((तै० सं० ५।५।११।१) इति प्रत्युदाहरणद्वयं प्रवर्तते ।

तुलना—रामगोपाल, वैदिकव्याकरण, भाग १, दिल्ली, १९६५, पृ० ३७९, टिप्पणी १७४ । अपि च तस्य उपरिकथितं शोधपत्रं, पृ० २३० ।

13. G. T. Deshpande, "Panini; sutras vii. 1. 9 and 10" Praci-Jyoti, vol. vi, part 1 (June, 1968), p. 89, तुलना—रामगोपाल, वैदिकव्याकरण, भाग १, भूमिका, पृ० १०.

परं सिद्धान्तकौमुद्यां किमपि प्रत्युदाहरणं न प्रदत्तम् । तथा हि 'घसिभसोर्हलि च' (६।४।१००) इत्यत्र काशिकायां स्पष्टरूपेण क्ङित्यनुवर्तनात् 'अंशून् बभस्ति' (अथ० ६।४९।२) इति प्रत्युदाहरणं प्रस्तुतम् । परं सिद्धान्तकौमुद्यामस्य सूत्रस्य किमपि व्याख्यानं न वर्तते, न च विद्यते तत्र प्रत्युदाहरणम् । अतो ज्ञायते यत् सिद्धान्तकौमुदीकारश्छन्दोविषयकसूत्राणां प्रत्युदाहरणविषौ नास्ति काशिकाकारवद् दत्तावधानः ।

क्वचिद् वैदिकसूत्रव्याख्यानावसरे काशिकासिद्धान्तकौमुदीग्रन्थद्वयस्यापि वेदव्याख्यानकर्तॄणां सायण-उवटमहीधराद्याचार्याणां व्याख्यानेन सह परस्परं भेदः । यतो हि काशिकायां 'वृकज्येष्ठाभ्यां तिल्तातिलौ च छन्दसि' (५।४।४१) इत्यत्र "प्रशंसायामित्येव । वृकज्येष्ठाभ्यां प्रशंसोपाधिकेऽर्थे वर्तमानाभ्यां यथासंख्यं तिल्तातिलौ प्रत्ययौ भवतश्छन्दसि विषये । रूपपोऽपवादः । वृकतिः । ज्येष्ठतातिः" इति व्याख्यानम् । परं सिद्धान्तकौमुदीकारेण इमौ तिल्तातिल्-प्रत्ययौ "स्वार्थे" एव स्वीकृतौ । यथा हि 'स्वार्थे' इत्यस्य व्याख्याने लघुशब्देन्दुशेखरे नागेशः[14] कथयति "स्वार्थे इति । प्राशस्त्यविशिष्टे स्वार्थ इत्यर्थः" इति । ऋग्वेदस्य २।३४।९ मन्त्रस्थस्य 'वृकतातिः' इत्यस्य व्याख्याने सायणाचार्यो 'वृक' इत्यस्मात् स्वार्थे तातिल्प्रत्ययं स्वीकृत्य कथयति "वृकताति आदाता वृकः । वृक् आदाने । 'वृकज्येष्ठाभ्यां तिल्तातिलौ च छन्दसि' (५।४।४१) इति स्वार्थिकस्तातिल्प्रत्ययः" इति । परं विचित्र-मेतत् यत् काशिकायां सिद्धान्तकौमुद्यां च 'वृक' इत्यस्मात् तिल्प्रत्ययस्यैव विधानम् । अपि च ऋग्वेदे ४।४१।४ मन्त्रे सायणाचार्येण 'वृकतिः' इत्यस्य "अतिशयेन दाता" इत्यर्थः कृतः । तथा च वाजसनेयिसंहितायां ७।१२ मन्त्रे 'ज्येष्ठतातिम्' इति पदं दृश्यते । तत्र उवटमहीधरौ द्वावपि तातिल्प्रत्ययं विकल्पेन प्रशंसार्थे स्वीकुरुतः । यथा महीधरो वदति "प्रशस्तो ज्येष्ठो ज्येष्ठेषु प्रशस्यो वा ज्येष्ठतातिः" इति । परं काशिकासिद्धान्तकौमुदी-व्याख्याप्रमाणेन 'ज्येष्ठतातिम्' इत्यत्र 'तातिल्' इति प्रत्ययो नित्यत्वेन भाव्यः ।[15] अत एव ज्ञायते यत् काशिकासिद्धान्तकौमुदीकृतं वैदिकसूत्राणां व्याख्यानं न सर्वजनसंमतम् ।

---

१४. अत्र भ्रान्तिवशात् डॉ० रामगोपालमहोदयेन (वैदिकव्याकरण, भाग १, पृ० ४६६, टि० ७९) तत्त्वबोधिनीकारस्य ज्ञानेन्द्रभिक्षोः नामनिर्देशः कृतः । परं सिद्धान्तकौमुद्या वैदिकप्रकरणे तत्त्वबोधिनीटीका एव नोपलभ्यते ।

१५. द्र० —वैदिकव्याकरणस्योपरिकथितमेव स्थलम् ।

ग्रन्थद्वयस्य बहून्युदाहरणानि तादृशानि विद्यन्ते येषां मूलस्थानं निरुक्ते महाभाष्ये चैव समवलोक्यते, न तु वैदिकग्रन्थेषु। यथा सिद्धान्तकौमुद्यां ३।४।१४ (३४४१) सूत्रे 'न म्लेच्छितवै' इत्युदाहरणं वैदिकत्वेन प्रदर्शितम्। परमुक्तमुदाहरणं महाभाष्यपस्पशाह्निके एवोपलब्धम्, नान्यत्र। तथैव ग्रन्थद्वये (का० वृ० १।१।५८; ६।४।१००; सि० कौ० ३५५०) 'बब्धां ते हरी धाना' इति निरुक्तोक्तं (५।१२) वचनम्।

उपर्युक्तेन विवेचनेन ज्ञायते यद् ग्रन्थद्वयेऽपि वैदिकोदाहरणानां स्थिति-रुभयत्र पृथक् पृथक् क्वचित् समाना क्वचिद् असमाना भूत्वापि नास्ति यथार्थपरिज्ञानाय पाठकानां सन्तोषकरी।

— — —

# प्रत्यक्षतत्त्वविमर्शः

श्रीकीर्त्यानन्दझा

## प्रत्यक्षस्य प्राथम्यम्

परमकारुणिकस्य विश्वविधातुः परमेश्वरस्यानादिनिधनेऽस्मिन् संसारे यानि वस्तूनि दृष्टिपथमनुभवपथं स्मृतिपथं वा समायान्ति तेषु ज्ञानमेव प्राधान्येन विद्यते। ज्ञानपूर्वकमेव सर्वे व्यवहारा लोकेऽस्मिन् प्रचलन्ति। अत एव तार्किकैः 'सर्वव्यवहारहेतुर्बुद्धिर्ज्ञानम्' इत्युक्तम्। ज्ञानिन एव मानवाः पण्डिताश्चतुराः कुशलिनो विद्वांस इत्यादिनाम्ना व्यपदिश्यन्ते, अन्यथा तु जडा इत्येव कथ्यन्ते। यत्र यादृशं ज्ञानं तत्र तादृशमेव स्वातंत्र्येण दृष्टिगोचरीभवति। चिकित्सकाश्चिकित्साविषयकं ज्ञानमाश्रित्यैव स्वपररोगोपशमने समर्था भवन्ति। विदेशीयौ दम्पती कस्यचिदौषधविशेषस्य स्वादुज्ञानार्थमेव स्वस्वप्राणानत्यजतामरताञ्चाजिष्टामिति श्रूयते। अतश्च ज्ञानं प्राणेभ्योऽपि प्रियमस्तीति सिद्धयति। भारतीयदर्शनेष्वतिप्राचीनं वेदान्तदर्शनमपि ज्ञानमेवात्मेति प्रतिपादयति। परमप्रेमास्पदत्वादेव ज्ञानरूपस्यात्मनः परमानन्दरूपतापि सङ्गच्छते। उक्तञ्च पञ्चदश्यां विद्यारण्यपादैः—

इयमात्मा परानन्दः परप्रेमास्पदं यतः।
मा न भूवं हि भूयासमितिप्रेमात्मनीक्ष्यते। इति।
तत्प्रेमात्मार्थमन्यत्र नैवमन्यार्थमात्मनि।
अतस्तत्परमं तेन परमानन्दतात्मनः॥ इति च।

किं बहुना नास्तिकबौद्धैरपि ज्ञानस्यैवात्मत्वमङ्गीचक्रे। अस्तु, तत्रापि प्रत्यक्षात्मकज्ञानमेव श्रेष्ठतमत्वमधिगच्छति। मोक्षोऽपि नह्यात्मसाक्षात्कारं विना निर्वहतीति सर्वदर्शनसिद्धान्तसिद्धमेवास्ति। श्रुतिरपि "यत्साक्षादपरोक्षाद् ब्रह्म' (बृ० ३।४।१) इति मन्त्रमधिकृत्य ब्रह्मणोऽपरोक्षत्वमेवोद्घोषयति। प्रत्यक्षज्ञानस्य श्रेष्ठत्वादेव तस्य प्रमाणमपि सर्वप्रमाणेषु ज्येष्ठत्वाद् बहुवादिसम्मतत्वादितरप्रमाणस्य प्रमाणान्तरमुपजीव्यं भवतीति नियमोऽत्रानुसन्धेयः। वन्ह्यनुमानस्य साधनीभूतं धूमज्ञानं प्रत्यक्षप्रमाणाधीनं भवति, शाब्दबोधस्यापि हेतुभूतं शब्दश्रावणप्रत्यक्षं श्रावणप्रत्यक्षप्रमाणाधीनमेव भवति। अत्र धूमोऽस्तीति

शब्दप्रत्यक्षज्ञानस्योक्तशाब्दज्ञानजनकत्वात् । तथा चोक्तपर्य्यालोचनया प्रत्यक्षज्ञानमेव श्रेष्ठमित्याकलय्यैव प्रत्यक्षतत्त्वविमर्श इदानीं प्रतन्यते ।

## प्रत्यक्ष-शब्दार्थनिरूपणम्

इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्' (न्या० सू० ४।१।१) इति सूत्रेण भगवता गौतमेन प्रत्यक्षप्रमालक्षणनिर्देशपूर्वकं प्रत्यक्षप्रमाणलक्षणं प्रत्यपादि । अस्य सूत्रस्यार्थस्तावदिन्द्रियस्यार्थेन गन्धादिना सन्निकर्षादुत्पन्नम्—'अव्यभिचारि' भ्रमभिन्नं तद्वति तत्प्रकारकमिति यावत्, ज्ञानं प्रत्यक्षम्' 'अव्यपदेश्यम्' निर्विकल्पकम्, 'व्यवसायात्मकम्' सविकल्पकमितिप्रत्यक्ष प्रमालक्षण प्रतिपाद्य सूत्रे 'यतः' इति पदाध्याहारेण निरुक्तज्ञानं यत उत्पद्यते तत् प्रत्यक्षप्रमाणमिति प्रत्यक्षप्रमालक्षणपुरस्सरं तत्प्रमाणलक्षणमुद्घोषितम् । अत्र च प्रत्यक्षमिति लक्ष्यनिर्देशः इतरल्लक्षणम् । समानासमानजातीयव्यवच्छेदो लक्षणार्थो भवति । समानजातीयं प्रमात्वेनानुमित्यादि विजातीयं प्रमेयादि ततो व्यवच्छिन्नं प्रत्यक्षलक्षणमनेन सूत्रेणोपपाद्यते । इन्द्रियार्था रूपरसगन्धस्पर्शशब्दास्तदधिकरणानि पृथिव्यप्तेजांसि द्रव्याणि तदधिष्ठानाः सङ्ख्यादयो गुणाः, उत्क्षेपणादीनि कर्माणि, तद्वृत्तीनि सामान्यादीनि, तत्तदभावश्चेति भवन्ति । इन्द्रियाणि घ्राणरसनचक्षुःश्रोत्रत्वङ्मनांसि कथ्यन्ते । सन्निकर्षविचारोऽग्रे भविष्यति । लक्षणे ज्ञानपदग्रहणं विशेष्यनिर्देशार्थम् । अन्यथेन्द्रियार्थसन्निकर्षत्वादीनि विशेषणानि विशेष्येऽसति कस्य विशेषणानि स्युः । अथवा सुखादीनामपि मनोरूपेन्द्रियजन्यत्वात्तत्रातिव्याप्तिवारणाय ज्ञानपदसार्थकं भवति । अव्यपदेश्यञ्चात्राशाब्दज्ञानरूपमेवास्ति इति न्यायभाष्यकारादीनां सम्मतिः । तत्रायं भावः—यदिन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं विषयनामधेयेनाभिधीयते तज्ज्ञानमपि शब्दविषयकतया शाब्दज्ञानं कथ्यते । यावन्तो नामधेयशब्दास्तैरर्थसम्प्रत्ययः, अर्थसम्प्रत्ययाच्च व्यवहारः संजायते । तद्यथेन्द्रियार्थसन्निकर्षादुत्पन्नं ज्ञानं 'रूपम्' इति वा 'रसः' इति वा भवति । तत्र रूपरसशब्दा विषयनामधेयम् । तेन व्यपदिश्यते व्यवह्रियते वा ज्ञानं रूपमिति जानीते, रस इति जानीत इत्यादि । अतो विषयनामधेयशब्देन व्यवह्रियमाणं सच्छब्दविषयकतया शाब्दं प्रसज्यते । अतश्च तादृशशाब्देऽतिव्याप्तिवारणायाव्यपदेश्यपदमुपाददत । व्यवसायपदमनवधारणात्मकं ज्ञानं व्यवच्छिद्यत इति भाष्यकारादिसम्मतिः । व्यवसायपदञ्चास्य मते निश्चयवाचकं तेन संशयात्मकज्ञानस्य व्यावृत्तिः सङ्गच्छते । संशयस्यापीन्द्रियार्थसन्निकर्षजत्वेन व्यवस्थापितत्वात् । उक्तञ्च—न्यायवार्त्तिककारैः—उभयस्तु संशयस्य निमित्तमात्मान्तःकरणसंयोग इन्द्रियार्थसन्निकर्षश्चेति । अत्रेन्द्रियार्थसन्निकर्षोत्पन्नशब्देन

सुखादिविषयकं ज्ञानं मानसप्रत्यक्षात्मकं न सङ्गृहीतमिति नाशङ्कनीयम्, मनस इन्द्रियलक्षणाक्रान्तत्वेनेन्द्रियत्वात्सुखादेरपि तद्ग्राह्यत्वादुक्तप्रत्यक्षेऽपि लक्षणसंगतिः संजायत एव। मनसो भौतिकत्वाभावादेव भौतिकेन्द्रियवर्गे परिगणनमत्यजन् भाष्यकाराः। अत्र प्रत्यक्षपदस्य व्युत्पत्तिद्वयी अक्षमक्षं प्रति वर्त्तत इति प्रत्यक्षम्। अक्षाणि घ्राणरसनत्वक्श्रोत्रमनोरूपाणि इन्द्रियाणि। वृत्तिस्तु सन्निकर्षो ज्ञानं वा। यदा सन्निकर्षस्तदा ज्ञानं प्रमा, यदा ज्ञानं तदा हानोपादानोपेक्षा बुद्धयः फलम्। इयञ्च व्युत्पत्तिरव्ययीभावसमासमाश्रित्यैव, सोऽपि समासः सूत्रगतप्रत्यक्षपदस्यैव बोध्यः। यदि सूत्रबहिर्भूतस्यापि प्रत्यक्षपदस्याव्ययीभाव समासः स्यात्तदा प्रत्यक्षस्येति या षष्ठी विभक्तिः श्रूयते सा न सिद्ध्येत्। (२) प्रतिगतमाश्रितमक्षं प्रत्यक्षम्। 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया'—इति वार्त्तिकेन द्वितीयातत्पुरुषसमास एव भवति। प्राप्तापन्नालङ्गतिसमासेषु परवल्लिङ्गताप्रतिषेधादभिधेयवल्लिङ्गे सति सर्वलिङ्गः प्रत्यक्षशब्दः सिद्ध्यति। उक्तञ्च मानमेयरहस्यश्लोकवार्त्तिककृद्भि :—

अक्षं प्रतिगतं यत्र सा धीः प्रत्यक्षमुच्यते।
तां हि चक्षुः जनकतासम्बन्धेनानुगच्छति॥
विषयेऽपि प्रतिगतमक्षं तेनेत्यमुच्यते।
प्रत्यक्षः पुरुषो योषा प्रत्यक्षेति बुधैरिह॥
इन्द्रिये सन्निकर्षे वा तत्सम्बन्धात् प्रमुच्यते।
न च युक्तोऽव्ययीभाव इत्याह न्यायमञ्जरी॥ इति।

न्यायवार्त्तिककारेणापि 'अक्षस्याक्षस्य प्रतिविषयं वृत्तिः प्रत्यक्षमिति। अयं च सूत्रविवक्षायामव्ययीभावः समासः। अन्यथा तु वस्तुनिर्देशः, न समासः। प्रादिसमासोऽयं द्रष्टव्यः प्रतिगतमक्षं प्रत्यक्षमिति यथोपगतो गोभिरुपगुरिति।' इत्युक्तम्। अत्रेदं बोध्यम्-भाष्यनिर्देशानुसारं प्रत्यक्षपदेनेन्द्रियस्य सङ्ग्रहो नैव भवति यद्यपि, तथापि वात्स्यायनादिमते प्रत्यक्षशब्द इन्द्रियेऽप्युपचर्यते। यथा—'आयुर्वैघृतम्' इत्यायुःपदमायुर्जनके घृते लाक्षणिकं भवति, यथा वा दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' इति गौतमीये सूत्रे प्रवृत्तिशब्दस्तत्साधनीभूतधर्माधर्मबोधको भवति, तथैव प्रत्यक्षशब्द इन्द्रियेऽपि लाक्षणिको बोध्यः। अतएव अत्र प्रवृत्तिसाधनौ धर्माधर्मौ प्रवृत्तिशब्देनोक्तौ। यथा अन्नसाधनाः प्राणाः। 'अन्नं वै प्राणिनः प्राणाः' इति न्यायभाष्यमपि सङ्गच्छते। वाचस्पतिमिश्रास्तु—'प्रतिविषयाध्यवसायो दृष्टमित्यादिकारिकामधिकृत्य 'अत्र दृष्टम्' इति लक्ष्यनिर्देशः। परिशिष्टन्तु लक्षणम्। समानासमान-

जातीयव्यवच्छेदो लक्षणार्थः, अवयवार्थस्तु विसिन्वन्ति विषयिणमनुबध्नन्ति, स्वेन रूपेण निरूपणीयं कुर्वन्तीति यावत्, विषयाः पृथिव्यादयः, सुखादयश्च। अस्मदादीनामविषयाश्च तन्मात्रलक्षणा योगिनामूर्द्ध्वस्रोतसाञ्च विषयाः। विषयं विषयं प्रति वर्त्तत इति प्रतिविषयं इन्द्रियम्, वृत्तिरस्य सन्निकर्षः, अर्थसन्निकृष्टमिन्द्रियमित्यर्थः' इत्याहुः। यथा स्वभावतश्चलनशीलमपि जलाशयगतं निर्गममार्गासत्वरूपप्रतिबन्धकबलात्स्वयं क्षेत्रमनुसर्पदपि छिद्रे सति तद्द्वारा निर्गत्य कुल्यात्मना क्षेत्रमुपसृत्य क्षेत्राकारेण परिणमते तथा स्वभावतः सर्वार्थग्रहणसमर्थमपि बुद्धितत्त्वं तमोरुपावरणेन प्रतिबद्धं सत् स्वयं विषयप्रदेशमनुसर्पदपि इन्द्रियार्थसन्निकर्षद्वारा तपोरूपावरणनिरासे इन्द्रियरूपप्रणालिकया विषयदेशमुपसृत्य विषयाकारेण परिणमते, अयञ्च विषयाकाररूपपरिणामोऽध्यवसायपदवाच्यः सन् वृत्तिरिति, ज्ञानमिति, प्रमाणमिति च कथ्यते। उपात्तविषयाणाम् = इन्द्रियाणाम्, उपात्तो गृहीतः प्रतिबिम्बरूपेण लब्धो विषयो यैस्तेषामिन्द्रियाणां वृत्तौ सत्यां विषयाकाराकारितत्वे सति यो बुद्धेस्तमोरूपावरणनिरसनपुरस्सरसत्त्वात्मकप्रकाशबाहुल्यरूपो धर्मविशेषः सोऽध्यवसाय इति वृत्तिरिति ज्ञानमिति च कथ्यते। अत्रेन्द्रियसन्निकर्षद्वारा यस्तमोऽभिभवसमकालीनसत्त्वसमुद्रेकप्रयुक्तो बुद्धेर्विषयाकारपरिणामः स प्रत्यक्षप्रमाणं सांख्यमतसिद्धं भवति। परञ्चेदृशव्याख्यानं परिमाणवादिनां साङ्ख्याचार्याणामेव शोभते न तु तार्किकाणाम्। तैश्च बुद्ध्यादीनां परिणामित्वानभ्युपगमात्।

**सारांशः**—प्रत्यक्षशब्देनेन्द्रियम्, गन्धादिविषयकं ज्ञानम्, सन्निकर्षः, गन्धादिविषयाश्च सङ्गृह्यन्ते। एवञ्चोक्तलक्षणस्येन्द्रियार्थसन्निकर्षघटितत्वेन नानुमित्यादावतिव्याप्तिः प्रसज्यते। नह्यनुमेयस्येन्द्रियसन्निकर्षाज्ज्ञानं भवति। अत्र तु व्याप्तिज्ञानादेरेव तज्जनकत्वेन व्यवस्थापितत्वात्। अत एव न्यायवार्तिककारैरपि "नह्यनुमेयस्येन्द्रियेण सन्निकर्षादनुमानं भवति, अतो न प्रसङ्गोऽनुमाने" इत्यवोचि।

## इन्द्रियस्वरूपम्

**घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः ( अ० १ आ० १ सू० २)** इति न्यायसूत्रानुसारमिन्द्रियाणां स्वविषयग्रहणसामर्थ्यं भूतप्रकृतित्वे सति निर्वहति नान्यथा। अतस्तदविनिश्चयार्थं 'सूत्रघटकतया' भूतेभ्यः इति पदमुपात्तम्। इन्द्रियाणां भौतिकत्वादेव घ्राणेन्द्रियं पृथिवीगुणस्य गन्धस्यैव ग्राहकत्वम्; रसनेन्द्रिये जलगुणस्य रसस्यैवेत्येवं विषयग्रहणप्रतिनियमानुसारेण घ्राणेन्द्रियं

पार्थिवं, रसनेन्द्रियं जलीयं, चक्षुरिन्द्रियं तैजसं, श्रोत्रेन्द्रियमाकाशं, त्वगिन्द्रियं वायवीयञ्च कथ्यन्ते। तथा चेन्द्रियाणां कारणानि पृथिव्यप्तेजोवायुगगनात्मकानि भूतानि भवन्ति। भूतेभ्यः पञ्चभ्यो यथासंख्यं घ्राणरसनचक्षुस्त्वक्श्रोत्राणि पञ्चेन्द्रियाण्युत्पद्यन्ते। भूतकारणत्वं यद्यपि घ्राणादिचतुष्टये विद्यते तथा न श्रोत्रे तथापि कर्णशष्कुल्याद्यवच्छिन्ननभोभागादिप्रायेण व्यवहारतः समर्थनीयम्। तथा च भौतिकानीन्द्रियाणि स्वं स्वं विषयमधिगन्तुमुत्सहन्ते—इति भूतस्वरूपत्वमेषां सिद्धयति। एवं भौतिकत्वादेवेन्द्रियाणां न महत्परिमाणत्वं नवाणुपरिमाणत्वं किन्तु मध्यपरिमाणत्वमेव सिद्धयति। केवलं मन एवाणु। अतएव नित्यमित्यामनन्ति तार्किकाः। उक्तप्रत्यक्षे, उद्भूतरूपस्य कारणत्वादिन्द्रियाणां प्रत्यक्षं नैव भवति, किंतु अनुमानत एव एतानि सिद्धयन्ति।

## घ्राणस्य पार्थिवत्वेऽनुमानम्—

घ्राणेन्द्रियं पार्थिवं द्रव्यत्वे सति रूपादिपञ्चकमध्ये गन्धस्यैवाभिव्यञ्जकत्वात्, वायूपनीतसुरभिभागवत्, कुङ्कुमगन्धादिव्यञ्जकगोधृतवदिति। अथवा यदिन्द्रियं रूपादिपञ्चकमध्ये यं गुणं गृह्णाति तदिन्द्रियं तद्गुणयुक्तं भवतीति-नियमाद्गंधग्राहकं घ्राणं गंधवदित्यनुमानं फलितं भवति। तथा च तत्र गंधवत्त्वादेव पार्थिवत्वं सिद्धयति।

## चक्षुषस्तैजसत्वे विशेषानुमाम्

चक्षुषस्तैजसं द्रव्यत्वे सति स्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात्, प्रभावदिति। यथा प्रभा स्पर्शाद्यव्यञ्जकतया परकीयरूपव्यञ्जकतया च तैजसत्वमाप्नोति तथा चक्षुरपीति भावः।

## रसनेन्द्रियस्य जलीयत्वेऽनुमानम्

रसनेन्द्रियं जलीयं रूपादिपञ्चकमध्ये रसस्याभिव्यञ्जकत्वात्, सक्तुरसाभिव्यञ्जकोदकवदिति।

## त्वगिन्द्रियस्य वायवीयत्वेऽनुमानम्

त्वगिन्द्रियं वायवीयं द्रव्यत्वे सति रूपादिषु पञ्चसु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वात्, अङ्गसङ्गिसलिलशैत्यव्यञ्जकव्यजनपवनवदिति।

## श्रोत्रस्याकाशत्वेऽनुमानम्

श्रोत्रं शब्दवत्, शब्दग्राहकेन्द्रियत्वात्, यदिन्द्रियं रूपादिषु पञ्चसु यं गुणं

गृह्णाति तदिन्द्रियं तद्गुणवदिति, यथा गन्धग्राहकं घ्राणं गन्धवत्, तथा श्रोत्रमपि शब्दवत् । शब्दत्वादेव तस्याकाशत्वं सिद्धयति ।

## मनसोऽस्तित्वेऽनुमानम्—

सुखादिसाक्षात्कारः करणसाध्यः, जन्यसाक्षात्कारत्वाच्चाक्षुषसाक्षात्कारवदिति । मनो न भौतिकं द्रव्यं किंतु स्वतंत्रं द्रव्यमिति नैयायिका वैशेषिकाश्च मन्यन्ते । उभयोर्मते षडेवेन्द्रियाणि, घ्राणरसनचक्षुस्त्वक्श्रोत्रमनांसि विद्यन्ते । कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थानि पृथग्भूतानि न सन्ति, तेषां सर्वेषां त्वगिन्द्रिये एवान्तर्भावो न्यायभाष्यकारादिसम्मतो दृश्यते । शब्देतरोद्भूतविशेषगुणानाश्रयः सन् यो ज्ञानहेतुमनःसंयोगाश्रयो भवति स एवेन्द्रियाभिधो भवति । तदर्थश्च शब्दादितरे ये य उद्भूतविशेषगुणास्तेषामनाश्रयत्वे सति ज्ञानकारणीभूतो यो मनःसंयोग ( इन्द्रियैः सह ) तदाश्रयत्वमिन्द्रियत्वं सम्पद्यते । आत्मव्यावृत्यर्थं सत्यन्तपदोपादानम् । अन्यथाऽऽत्मापि ज्ञानकारणीभूतस्य मनोयोगस्याश्रयतयेन्द्रियं स्यात् । शब्दभिन्न उद्भूतो विशेषनामको गुणो न कोऽपि कस्मिंश्चिदपीन्द्रियेऽस्ति, किन्त्वनुदभूतविशेषगुणो रूपादिरेव तत्रास्ति । नक्तञ्चराणां व्याघ्रादीनां नयनरश्मिस्तु तेजोऽन्तरमेव, तस्य चक्षुष्ट्वे तु शब्दरूपेतरोद्भूतविशेषगुणानाश्रयत्वे सतीति विशेषणमिन्द्रियलक्षणे निवेशनीयम् । उद्भूतत्वं चात्र प्रत्यक्षत्वप्रयोजको धर्मविशेषः । शब्दस्योद्भूतविशेषगुणतयोद्भूतविशेषगुणानाश्रयंत्वं श्रोत्र एव न गच्छेदतस्तत्राव्याप्तिवारणाय शब्देतरेतिपदोपादानम् । कालादौ कस्यापि विशेषगुणस्य सत्त्वाभावात्तत्रातिव्याप्तिः स्यात्, यदि लक्षणे ज्ञानकारणमनःसंयोगाश्रयत्वं न निवेशयेत् । प्राचां मते इन्द्रियावयवैः सह विषयसंयोगस्यापि प्रत्यक्षज्ञानजनकतया इन्द्रियावयवेष्वतिव्याप्तिवारणाय, नवीनमते "कालो रूपाभाववान्' इति प्रत्यक्षे चक्षुः संयुक्तविशेषणतासन्निकर्षस्य कारणतया तत्सन्निकर्षान्तःपातिचक्षुःसंयोगाश्रये कालेऽतिव्याप्तिवारणाय मनःपदम् । ज्ञानकारणपदमपि तत्रैवातिव्याप्तिवारणायोपात्तम् । अन्यथा मनःसंयोगस्य कालेऽपि सत्तया तत्रातिव्याप्तिः स्यात् । तदुपादाने तु कालवृत्तिर्यो मनःसंयोगः स न ज्ञानकारणमिति नातिव्याप्तिः ।

**सारांशः**—न्यायवैषिकमीमांसाजैनानां दर्शने चक्षुरादीनां पञ्चानामिन्द्रियाणां भौतिकत्वमेव विद्यते । श्रीभगवत्पादानां शङ्कराचार्याणां मते उभावपि पक्षौ समर्थितौ दृश्येते । 'अन्तरा विज्ञानमनसीं क्रमेण तल्लिङ्गादिति चेन्नाविशेषाद

( ब्र० सू० २।३।१५ ) इति सूत्रे शारीरभाष्ये "यदि तावद् भौतिकानि करणानि" इति पक्षमुपक्रम्येन्द्रियाणामुत्पत्त्यादिकं दर्शयित्वा ततः "अथ त्वभौतिकानि करणानि" इति पक्ष उपन्यस्तः। विद्यारण्याचार्यपादैस्तु क्रमेण पञ्चदश्याम्—
सत्त्वांशैः पञ्चभिस्तेषां क्रमाद्धीन्द्रियपञ्चकम्।

श्रोत्रत्वगक्षिरसनघ्राणाख्यमुपजायते' (प० द० १।१९)

इति श्लोकद्वारा भौतिकत्वमेवेन्द्रियाणामभिहितम्। "दिशः श्रोत्रम्" इति श्रुत्यनुरोधाद् मीमांसकाः श्रोत्रं दैशिकमाहुः। प्राचीना बौद्धा अपि तैजसं गोलकमेव चक्षुरिति प्रतिपाद्य भौतिकान्येवेन्द्रियाणीति स्वीचक्रुः। अत एव "कृष्णसारे सम्यगुपलम्भात् कृष्णसारमेव चक्षुरिति बौद्धाः" इत्युक्त्वा न्यायवार्तिकतात्पर्यटीकाकृता 'अभौतिकानीत्यपरे 'इति ग्रन्थेन साङ्ख्यमतेन बौद्धपक्ष एव दूषितः। तैरेवोक्तम्—'तत्र साङ्ख्यमतमुत्थाप्य बौद्धपक्षं दूषयति 'अभौतिकानीति' इति।

## यूरोपीयदर्शने—

इन्द्रियाणां भौतिकत्वमभौतिकत्वं वेति विशेषतो निर्णयो न दृश्यते, तथापि येषां येषां वैदेशिकदार्शनिकानां तद्विषये मतमस्ति तेषु प्रथमं एम्पोडोक्लीजमहाशयस्य मतं प्राथम्यमासादयति। 'एम्पोडोक्लीजमहाशयो जगत उत्पत्तिकारणत्वेन पृथिवीजलतेजोवायून् स्वीकरोति। समानेन वस्तुना समानवस्तुनो ज्ञानं भवतीति नियमं मनसिकृत्य नेत्र आग्नेयतत्त्वं जिह्वायां जलीयतत्त्वं घ्राणे पृथिवीतत्त्वं त्वचि वायवीयतत्त्वं श्रोत्र आकाशतत्त्वञ्च विशेषतः स्वीचकार। अत एव स च पश्चिमकणादनाम्ना प्रसिद्धोऽस्ति। एवमिन्द्रियविषये ल्युकिपसमहाशयस्य द्वितीयं स्थानमस्ति। स च परमाणुकारणतावादी विद्यते। एतन्मते परमाणव एव जगत उपादानकारणानि सन्ति। पदार्थो द्विविधो भावोऽभावश्चेति। तत्र भावात्मकः पदार्थः शून्येन व्याप्तः। अभावस्तु शून्यरूप एवास्ति। भावपदार्थोऽनेकेभ्यः परमाणुभ्यः संयुक्तेभ्यः उत्पद्यते। पृथिवीजलतेजोवायूनां परमाणव आकृत्या विभिन्नाः सन्ति। अतश्च यदिन्द्रियं यदाकृतिकपरमाणुभ्य उत्पद्यते तदिन्द्रियं तदाकृतिक परमाणुभ्यो रचितमेव वस्तु बोधयति। समानाकृतिकाः परमाणवश्चक्षुषि प्रभायाञ्च विद्यन्ते। अतश्चक्षुषा प्रभाया ज्ञानं भवति। एतन्मते गन्धादिगुणेष्वपि घ्राणादिसमानाकृतिकपरमाणुतत्त्वमेवास्ति। अन्यथा भौतिकेन घ्राणादिना गंधादिज्ञानं न स्यात्। तथा च पश्चात्यदार्शनिकमतपर्यालोचनेनापि प्रायेणेन्द्रियाणां भौतिकत्वमेव सिद्ध्यति।

## सन्निकर्षस्वरूपनिर्वचनम्

प्रत्यक्षात्मकज्ञानहेतुरिन्द्रियेण विषयस्य सम्बन्धः सन्निकर्षः कथ्यते। तच्च ज्ञानं निर्विकल्पकसविकल्पकभेदाद् द्विविधं भवति, तत्र यदा निर्विकल्पकज्ञानमुत्पद्यते तस्येन्द्रियं करणं भवति। भवति चेन्द्रियार्थसन्निकर्षोऽवान्तरव्यापारः। यदा तु तज्ज्ञानानन्तरं 'श्यामोऽयं ब्राह्मणोऽयम्' इत्येवंविधं ज्ञानं जायते, तदेन्द्रियार्थ-सन्निकर्षः करणमवान्तरव्यापारश्च निर्विकल्पकं ज्ञानं भवति। फलं पूर्वोक्तं सविकल्पकं यदा तदा सविकल्पकज्ञानानन्तरं हानोपादानोपेक्षाबुद्धयो जायन्ते, तदा निर्विकल्पकं ज्ञानं करणं सविकल्पकमवान्तरव्यापारः, हानोपादानोपेक्षाबुद्धयश्च फलं भवन्ति। अवान्तरव्यापारश्च तज्जन्यस्तज्जन्यजनकः। यथा—कुठारजन्यः कुठारदारुसंयोगः कुठारजन्यच्छिदाजनकः। अतएव कुठारस्य कुठारदारुसंयोगोऽवान्तरव्यापारः कथ्यते।

स चेन्द्रियार्थसन्निकर्षो लौकिकालौकिकभेदेन द्वेधा भवति। तत्र लौकिको लौकिकप्रत्यक्षेऽलौकिकस्तु अलौकिकप्रत्यक्षे कारणं भवति। तत्र लौकिकसन्निकर्षः षड्विधः—संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति। तत्र द्रव्यस्य चाक्षुषस्याशेषमानसप्रत्यक्षेषु तदिन्द्रियसंयोग एव सन्निकर्षः, घटादिना सह चक्षुरादेः संयोगसत्वात्। द्रव्ययोः संयोगस्य सिद्धान्तितत्वाच्च। एवम्—"अहमस्मि"—इति मानसप्रत्यक्षे आत्मना मनसः संयोग एव सन्निकर्षः। तत्र चैतावान् विशेषः, आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेनेति। द्रव्यसमवेतरूपादीनां चाक्षुष-त्वाच-मानस-रासन-घ्राणज-प्रत्यक्षेषु इन्द्रियसंयुक्तसमवायः सन्निकर्षः, द्रव्यसमवेतसमवेतरूपत्वादीनां चाक्षुषत्वाचमानसरासनघ्राणजप्रत्यक्षेषु इन्द्रियसंयुक्तसमवेतसमवायश्च सन्निकर्षोऽपेक्षणीयो भवति। श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः, तत्र कर्णशष्कुल्यवच्छिन्नं नभ एव श्रोत्रं कथ्यते। अवच्छिन्नत्वञ्चात्र संयोगविशेषः। श्रोत्रे च शब्दस्य समवायात् सन्निकर्षः संघटते। शब्दः शब्दत्वादिमानित्येवं श्रोत्रेण शब्दत्वादिसामान्यप्रत्यक्षे श्रोत्रसमवेतसमवायः सन्निकर्षोऽपेक्ष्यते, श्रोत्रसमवेते शब्दे शब्दत्वादेः समवायात्। समवायप्रत्यक्षे "इह भूतले घटो नास्ति' इत्यभावप्रत्यक्षे च विशेषणविशेष्यभावः सन्निकर्षोऽपेक्ष्यते। विशेषणविशेष्यभावश्चात्र विशेषणता विशेष्यता च बोध्यः। ते अपि स्वरूपसम्बन्धरूपे बोध्ये। तथा च—यदा चक्षुःसंयुक्तेभूतले घटाभावो गृह्यते 'इह भूतले घटो नास्ति' इति, तदा चक्षुःसंयुक्तस्य भूतलस्य घटाभावो विशेष्यः। विशेषणं च भूतलं भवति। यदा भूतलं घटाभाववत् 'इति ज्ञानं जायते तदा चक्षुःसंयुक्तस्य भूतलस्य विशेष्यतया घटाभाव एव विशेषणं भवति। एवं घटः समवायवान्' इत्यादि स्थलेऽपि बोध्यम्।

## सूर्याचन्द्रमसौ प्रत्यक्षावप्रत्यक्षौ वेति विचारः

सूर्यचन्द्रदर्शनं मन्यमाना बहुशो मानवा जगतीतले दृश्यन्ते। तत्रायं विचारः प्रवर्त्तते—यदि चन्द्रस्य सूर्यस्य वा दर्शनं स्यात्तदा 'अपोलो-११' द्वारा चन्द्रलोकयानं, चन्द्रलोकात् पाषाणखण्डानयनं, तत्परीक्षणञ्चामेरिकादेशीयानां निरर्थकमेव स्यात्। यतो हि विशेष्यरूपेण यत् ज्ञानं तदेव दर्शनपदस्य प्रत्यक्षपदस्यैव वा वाच्यं भवति। शाब्दबोधोऽनुमितिर्वा ज्ञानं सामान्यरूपेणैव जायते। अनुमानादिना ज्ञाते ऽपि वह्न्यादौ कीदृशोऽयं वह्निरिति न कैश्चिद् वक्तुं शक्यते। परञ्च समये समये चन्द्रदर्शनं यवनजातीयेष्वपि प्रसिद्धमस्ति। हिन्दवोऽपि देवत्वभावनया सूर्यदर्शनं कुर्वन्त्येव। कर्मणि प्रवृत्ता ब्राह्मणा अपि सूर्योपस्थानमन्त्रेण प्रत्यहं सूर्यदर्शनं कुर्वन्त्येव। "सूर्यमपश्या राजदाराः' इति वाक्यप्रामाण्यात् प्राप्तौ सत्यां निषेधस्यावकाशत्वाच्छास्त्रतोऽपि सूर्यदर्शनं सिद्धचति। एवं भाद्रशुक्लचतुर्थ्यां शास्त्रतो चन्द्रदर्शनं निषिद्धमेवास्ति। अत्रेदं बोध्यम्—दूरस्थस्यापि तेजोविशेषस्यालोकादेव दर्शनं भवति, न तु तद्भिन्नस्य जडीभूतस्य पाषाणखण्डादेः। एवञ्च सूर्यादागतस्य तेजोविशेषस्य सम्बन्धात्तेजोमयश्चन्द्रो दृश्यते, तत्र स्वातन्त्र्येण तेजो नास्ति। तथा च—यथा समुद्रात्सामुद्रास्तरङ्गो न पृथग्भूतो यथा वाऽग्नेरालोको नाग्नेः पृथग्भूतः तथैव चन्द्रिकया यह चन्द्रस्याभेदाच्चान्द्रिकां पश्यन्तो जनाश्चन्द्रदर्शनं मन्वते एवं तेजसा सह तेजस्विनोऽभेदात्सूर्यतेजांसि पश्यन्तो मानवा सूर्यदर्शनं स्वीकुर्वन्ति। अतएव चन्द्रमण्डलस्य द्वितीयायां सत्त्वेऽपि तेजोभागस्यैव दर्शनं भवति। अत एवं गगनादवतरन्तं भगवन्तं नारदं वर्णयता महाकविना माघेन ।

'चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम्।
विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः।'

इत्युक्तम्। तेनेदं सिद्धचति यद् दूरस्थस्यापि तेजोभागस्य दर्शनं भवतीति।

———

# पण्डितराजकृता उत्प्रेक्षाभेदाः

डॉ० रेवाप्रसादो द्विवेदी

पण्डितराजो जगन्नाथः स्वकीये रसगङ्गाधरनाम्नि सन्दर्भरत्ने—

'तद्भिन्नत्वेन तदभाववत्वेन वा प्रमितस्य पदार्थस्य रमणीय-तद्वृत्ति-तत्समानाधिकरणान्यतरतद्धर्मसम्बन्धनिमित्तकं तत्त्वेन तद्वत्त्वेन वा सम्भावनमुत्प्रेक्षा' इत्येवमुत्प्रेक्षां लक्षयित्वा —

'अत्र तादात्म्येन संसर्गेण धर्म्युत्प्रेक्षायाः, संसर्गान्तरेण धर्मोत्प्रेक्षायाश्च संग्रहायैकयोक्त्या लक्षणद्वयं विवक्षितम्'—

इति च तस्य— (१) धर्म्युत्प्रेक्षा
(२) धर्मोत्प्रेक्षा

इत्येवमुत्प्रेक्षाद्वयप्रतिपादकत्वमुपपाद्य इमां द्विविधामप्युत्प्रेक्षाम्—

'सा चोत्प्रेक्षा द्विविधा—(१) वाच्या (२) प्रतीयमाना च' इति वाच्य-प्रतीयमानत्वेन द्वैविध्यमापाद्य, पुनः-'सापि प्रत्येकं त्रिविधा—

(१) स्वरूपोत्प्रेक्षा
(२) हेतूत्प्रेक्षा
(३) फलोत्प्रेक्षा चेती'-

ति भेदयति।

को न्वस्य भेदप्रकारस्याभिप्राय इति जिज्ञासायां रसगङ्गाधरगुरुमर्मप्रकाशे नागेशः फूत्करोति—

'एवं द्वादशभेदाः सम्पन्ना इति भाव' इति।

फूत्कारेणानेन मूर्च्छतितरां समीक्षकशेमुषीसहकारसुन्दरी। कथमिति चेदित्थम्—

महामतेरस्य वैयाकरणमतङ्गजस्य उक्ताया उक्तेः—



एषक एवाभिप्रायवृक्षः । अत्र प्रश्नः । हेतुफलोत्प्रेक्षयोर्धर्म्युत्प्रेक्षात्वसंसिषाधयिषया विषयविषयिणोस्तादात्म्यमेव विषयित्वावच्छिन्नप्रतियोगिताकं संसर्गतयाऽध्यवसेयम् । तदत्र कथं स्यादर्जितात्मलाभम् ? नहि हेतुहेतुमतोः फलफलिनोर्वा तादात्म्यमत्र शक्यसम्भवम् । नास्ति च पण्डितराजस्यापि तदभिमतम् । किमत्र प्रमाणमिति चेद् उदाहृतानि हेतुफलोत्प्रेक्षोदाहरणानि तत् । एतानि च तानि—

### हेतूत्प्रेक्षायाः

त्वत्प्रतापमहाद्वीपशिखाविपुलकज्जलैः ।
नूनं नभस्तले नित्यं नीलिमा नूत नायते । 'इति'

महागुरु-कलिन्द-महीधरोदर-विदारणाविर्भवन्महापातकावलिवेल्लनादिव
श्यामलिता ।' इति च,

### फलोत्प्रेक्षायाश्च

दिवानिशं वारिणि कण्ठदघ्ने दिवाकराराधनमाचरन्ती ।
वक्षोजतायै किमु पक्ष्मलाक्ष्यास्तपश्चरत्यम्बुजपंक्तिरेषा ।। इति,

'वियोगवह्निकुण्डेऽस्मिन् हृदये ते वियोगिनि ।
प्रियसङ्गसुखायेव मुक्ताहारस्तपस्यति ।।' इति च ।

एतेषु प्रथमे नित्यं नूतनायमानो नीलिमा विषयी, नभस्तलं विषयः, नीलिमसमानाधिकरणानि कज्जलानि च तत्र हेतुः । अस्ति च कज्जलानां भिन्नत्वमेवातादात्म्यसतत्त्वं तदितरैरत्राभिमतम् । उपनिबद्धमपि तत्सर्वमत्र तथैव । द्वितीये वेल्लनं हेतुः । तस्यापि भिन्नत्वेनैवोपनिवेशः प्रत्यक्षः । फलतया विवक्षितयोर्वक्षोजता-प्रियसङ्गसुखयोरपि च सैव स्थितिस्तृतीय-चतुर्थयोः । तदेवमसति तादात्म्य-निचोले कीदृशं धर्म्युत्प्रेक्षात्वमत्र । न च 'तादात्म्यमत्र हेतुफलत्वावच्छिन्नप्रतियोगिताकमभूत्वा, विषयित्वावच्छिन्नप्रतियोगिताकमात्रं भवति । हेतुफले तत्र साधनतामात्रमश्नुवाते । अश्नुवाते च व्यपदेशप्रयोजकत्वं चमत्काराधिक्य-जनकत्वार्जितप्रधानभावेनेति नास्ति भीति'—रिति वाच्यम्—निर्विषयैवं वराकी धर्मोत्प्रेक्षा, निर्विषयाश्चानेकेऽलङ्कृतिभेदाः सादृश्यविरोधशृङ्खलाद्येकहेतुकत्वेन प्रसिद्धाः, तत्रापि हेतुतया स्थितानामेव तत्त्वानां चमत्कारप्रयोजकतामूरीकृत्य व्यपदेश प्रयोजकताया अप्यूरीकर्त्तुं शक्यत्वात् । न च—'यत्रानुभूतिसिद्धं चमत्कृतिप्रयोजकत्वं तत्रैव व्यपदेशप्रयोजकत्वमादरणीयं, न तु कल्पिते विषय' इति वाच्यम्, अनुभूतिवारवध्वाः कान्दिशीकत्वकुतोमुखीनत्वनिगडाविषयत्वात् । किं च—

( १ ) अत्र नीलिममसामान्याधिकरण्येनोत्प्रेक्षितस्य हेतुत्वेनोत्प्रेक्षा[1] -- इति
( २ ) अत्र तपश्चरणक्रियायाः साहजिकजलावस्थानाभिन्नतयाऽध्यवसिताया फलत्वेनोत्प्रेक्ष्यते' इति च—

केयमुक्तिः पण्डितराजस्य, यदि हेतुफलयोरुत्प्रेक्षाविषयित्वं नाभ्युपेयते, अभ्युपेयते च तदितरस्यान्यस्य कस्यचिद् वस्तुनः। अन्यस्यैव वा विषयित्व उत्प्रेक्षाया हेतुफलगतत्वं निर्मूलम्। आरोपाध्यवसानसम्भावनेषु हि यदेव आहार्यमारोप्यमाणमध्यवसीयमानं सम्भाव्यमानं च भवति तदेव विषयिपदवाच्यतां प्रतिपद्यते। अत्र हि हेतुफलयोरेव संभाव्यमानता। ततश्च तयोरेव विषयित्वमूरीक्रियेत।

ननु कथं तर्हि नीलिमा विषयीति'—पूर्वमुक्तम्, सत्यम्, तत्र हि विषयिद्वयं कृतपदम्। तत्र, एकं नीलिमरूपम्, अपरं च कज्जलहेतुकत्वरूपं कज्जलरूपमेव वा। नभस्तलं विषयीकृत्य द्वयं तत्रोत्प्रेक्ष्यते कज्जलजनितविकारत्वं नीलिमा च। अतएव तत्समानाधिकरणे'—ति लक्षणवाक्यघटकीभूतं 'तत्'—पदमत्र संगतार्थकं जायेत। विषयिमात्रं हि तत्र तदः परामर्शविषयः। कज्जलं हि नीलिमसमानाधिकरणतयैवात्र प्रयुक्तम्, नीलिम्नो विषयित्वाभावे कज्जलस्य 'तत्समानाधिकरण धर्म'—ता किमिव सजाघटीतु। यदि वा स्वाभाविके नीलिमनि कज्जलहेतुकत्वरूपस्य धर्मस्योत्प्रेक्ष्यमाणताकल्पनेन गवेषणीयोऽत्र निर्वाहः।

ततश्च सिद्धमत्र हेतुफलयोरेवोत्प्रेक्ष्यमाणत्वं, सिद्धं च तयोरेव विषयित्वम्। नास्ति चानयोर्विषयाभ्यामैकात्म्यरूपः संसर्गः, ततो न ह्येव सम्भवत्युत्प्रेक्षाया अस्या धर्म्युत्प्रेक्षात्वम्।

यद्युच्येत—यत्र हेतूत्प्रेक्षा फलोत्प्रेक्षा च मन्यते तत्र उत्प्रेक्षान्तरमपि तिष्ठति, तत्र हि तादात्म्यं तदितरं च संसर्गजातं गवेषणीयम्। ततश्च तादात्म्यजनिते धर्म्युत्प्रेक्षात्वसौधे हेतुफलोत्प्रेक्षावैजयन्तीराविभाव्य विषयैक्येण धर्म्युत्प्रेक्षा-हेतुफलोत्प्रेक्षोभयत्वमाविकल्प्य परिह्रियेत विरोधः संसाध्येत च समन्वय' इति।

एतदप्यपेशलम्, उदाहरणविरोधात्। पण्डितराजो हि पूर्वं [ धर्मि- ] स्वरूपोत्प्रेक्षां भावाभावाभ्यामुदाहरति। तदन्तरं हेतूत्प्रेक्षां ततः फलोत्प्रेक्षां तदुत्तरं च धर्मस्वरूपोत्प्रेक्षाम्। क्रमस्यास्य का नु संगतिः, यदि हेतुफलान्यतरोत्प्रेक्षयोर्धर्मिधर्मोभयगतत्वमूरीक्रियते। तथा सति तेन वाच्यत्व-गम्यत्व-भावाभावैश्चातुर्विध्यमापन्नानि स्वरूप-हेतु-फलानि धर्मि-धर्मगतत्वेन वर्गद्वये संविभज्य प्रतिवर्गं द्वादश भेदाः क्रमेणैकैकशो निरूपणीयाः। न च ते तेन तथा निरूपिताः। नापि च तत्पूर्ववंश्यैरप्पयदीक्षितसर्वस्वका-

रादिभिरपि। कुवलयानन्देऽप्पयदीक्षितः षोढात्वमेवोत्प्रेक्षाया एवमुपकल्पयति—

'अन्यधर्मसम्बन्धनिमित्तेनान्यस्यान्यतादात्म्यम् उत्प्रेक्षा। सा च वस्तु-हेतु-फलात्मतागोचरत्वेन त्रिविधा। अहेतोर्हेतुभावेन, अफलस्य फलत्वेनोत्प्रेक्षा हेतूत्प्रेक्षा फलोत्प्रेक्षा चोच्यते। तत्र आद्या [ वस्तूत्प्रेक्षा ] स्वरूपोत्प्रेक्षा उक्तविषयाऽनुक्तविषया चेति द्विविधा, परे हेतुफलोत्प्रेक्षे सिद्धविषयाऽसिद्धविषया चेति प्रत्येकं द्विविधे।' इति।

यत्राप्यसौ मतान्तरमुपस्थापयति तत्रापि धर्मधर्म्युत्प्रेक्षात्वं स्वरूपोत्प्रेक्षागतत्वेनैव। यथा चेदं तत् तस्यैव—

केचित्तु—[ लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभ' इत्यत्र ] तमोनभसोर्विषययोस्तत्कर्तृलेपनवर्षणस्वरूपधर्मोत्प्रेक्षेत्याहुः। तन्मते स्वरूपोत्प्रेक्षायां धर्म्युत्प्रेक्षा धर्मोत्प्रेक्षा चे, ति द्वैविध्यं द्रष्टव्यम्।'

इत्यमुना वाक्सन्दर्भेण स्पष्टम्। दत्तानि च तेन सर्वेषामेतेषां भेदानां तथैवोदाहरणानि। सर्वस्वे ९६ भेदाः प्रतिपाद्यन्ते। तथापि नास्ति तत्र धर्म्युत्प्रेक्षाया हेतुफलगतत्वेन विभागः। ९६ भेदेषु स्वयं ग्रन्थकृतैव कल्पनामात्रप्रसूतस्य-'असावुत्प्रेक्षायाः कक्ष्याविभागः प्रचुरतया स्थितोऽपि लक्ष्ये दुरवधारत्वादिह न प्रपञ्चितः'—

इत्येवं स्वकण्ठेनैवोररीकृतत्वात्।

तदित्थं सुदुर्लभमेव धर्म्युत्प्रेक्षात्वसामानाधिकरण्येन हेतुफलोत्प्रेक्षात्वगवेषणम्।

वस्तुतस्तु प्राचामाचार्याणां भेदनामकरणवर्त्तनीमुपजीव्यात्र विचारणीयम्। ते हि विशिष्टाय नामविशेषं दत्त्वा सामान्येभ्यः 'शुद्धा'दिपदानि प्रयुञ्जते। तथाहि रूपक-लक्षणादिभेदेषु तेषां प्रवृत्तिः। रूपके हि माला—श्लिष्टत्वेन भेदान् गणयित्वा पश्चात् शुद्धत्वेन भेदान् गणयति। लक्षणायामपि मम्मटाचार्यः—

**स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम्।**
**उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा॥**
**सारोपान्या नु यत्रोक्तौ विषयी विषयस्तथा।**
**विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात् साध्यवसानिका॥**
**भेदाविमौ च सादृश्यात् सम्बन्धान्तरतस्तथा।**
**गौणौ शुद्धौ च विज्ञेयौ लक्षणा तेन षड्विधा॥**

एवं गौणीत्वं पृथगुद्दिश्यावशिष्टेभ्यः शुद्धेति संज्ञानमुपहरति। एवमेव प्रकृतेऽपि पण्डितराजः हेतुफलत्वेन धर्मोत्प्रेक्षां पृथग् गणयित्वा तद्भिन्नत्वेन स्थिराणां भेदानां 'स्वरूप'—संज्ञापदत्वमाकलयति। अस्ति च तदप्पयदीक्षितस्याप्यभिमतम्। यथा—चैतत् तत् पूर्वोक्तेन तद्वाक्यांशेन प्रमाणितमेव। ततश्च पण्डितराजमतेन—




इत्येवम्—




इत्येवं वोत्प्रेक्षां चतुष्ट्वमापाद्य वाच्यप्रतीयमानत्वेन द्वैविध्यं चापय्याष्टविधामेव केवलां मन्यामहे। नागेशोपन्यस्तं द्वादशविधत्वं तु केवलमलङ्कारसर्वस्वानुकरणभ्रंशमूलमुत्प्रेक्षामहे।

———

# बाणभट्टस्य केचन दोषाः

डॉ० अमरनाथपाण्डेयः

निखिलशास्त्राटवीसञ्चरणभट्टस्य बाणभट्टस्यापि काव्ययोः—हर्षचरिते कादम्बर्याञ्च—केचिद् दोषा उपलभ्यन्ते। सत्स्वपि केषुचिद्दोषेषु बाणभट्ट-कविताकामिन्याः सौन्दर्यं मनागपि न विहन्यते। सहृदया महाकविकाव्य-सृष्टिं मुहुर्मुहुरवेक्षमाणाः परां प्रीतिततिं तन्वते।

अत्र महाकवेः केचन दोषा उपस्थाप्यन्ते।

## श्रुतिकटुत्वम्

बाणः कादम्बर्यां प्रयुङ्क्ते—'तदेतत् कात्स्न्येंन योऽयम्' इति।[1] अत्र 'कात्स्न्येंन' इति पदस्य प्रयोगादुक्तदोष आपतितः।

## च्युतसंस्कृतित्वम्

'नारायणावरोधानीव प्रचलितानि'[2] इति अवरोधशब्दो नपुंसकलिङ्गे प्रयुक्तः। अवरोधशब्दः पुँल्लिङ्गे प्रयुज्यते, न तु नपुंसकलिङ्गेऽतएव च्युत-संस्कृतित्वं दोषः। 'मम तु तत्करतलस्पर्शलोभेन तत्क्षणमपरमिव पारिजातकुसुम-मवतंसस्थाने पुलकमासीत्।'[3] इति वाक्ये पुलकशब्दो नपुंसकलिङ्गे प्रयुक्तः। पुलकशब्दस्य पुँल्लिङ्गे दर्शनादत्र प्रयुक्तं 'पुलक' पदं च्युतसंस्कृतीति।

'अत एव महाश्वेता तरलिकामपीमं हारमादाय त्वत्सकाशं प्रेषित-वती।'[4] इति प्रयोगोऽयुक्तः। अत्र आदायक्रियायाः कर्त्री तरलिका, प्रेषण-क्रियायाश्च महाश्वेता। 'समानकर्तृकयोः पूर्वकाले'[5] इति सूत्ररीत्या द्वयोः क्रिययोरेककर्तृकत्वे बाणस्य प्रयोगोऽयमसाधुरिति सुप्रतीतम्।

---

१. काद० २७४ पृष्ठे ( निर्णयसागर सं० १९२८ ई० )।
२. हर्ष० ४१७ ( मोतीलाल बनारसीदास सं० १९६५ ई० )
३. काद० २७४ पृष्ठे।
४. तत्रैव ३६४ पृष्ठे।
५. अष्टाध्यायी ३।४।२१

## अवाचकत्वम्

'तथापि यदि महत्कुतूहलं तत्कथयामि'[१] इति बाणेनोट्टङ्कितम्। अत्र 'तदा' इत्यस्य स्थाने 'तत्' इत्यस्य प्रयोगः कृतः। 'तदा' पदं 'तत्' पदस्यार्थं बोधयितुं नालमित्यवाचकम्। एवं 'जीवन्तीमिच्छसि चेन्मां तत्कुरु गुरुवचनमवितथम्' इति प्रयोगेऽपि 'तत्' पदं 'तदा' पदस्यार्थं प्रयुञ्जानः कविः प्रमाद्यति।

## विरुद्धमतिकृत्त्वम्

'अयं च भवानीपतिरुपरचितो भगवान्'[२] इति प्रयोगो दृश्यते। भवस्य पत्नी भवानी ख्याता। 'भवानीपति' प्रयोगद्वारा भवान्याः पत्यन्तरस्य प्रतीतिराविष्कृतेति विरुद्धमतिकृत्पदम्[३]। मम्मटभट्टेनापि—

'न त्रस्तं यदि नाम भूतकरुणासन्तानशान्तात्मनः
तेन व्यारुजता धनुर्भगवतो देवाद् भवानीपतेः।
तत्पुत्रस्तु मदान्धतारकवधाद्विश्वस्य दत्तोत्सवः
स्कन्दः स्कन्द इव प्रियोऽहमथवा शिष्यः कथं विस्मृतः॥'[४]

इति श्लोके भवानीपतिप्रयोगहेतुत्वादुक्त एव दोष आम्नातः।

## अविमृष्टविधेयांशत्वम्

'अकारणञ्च भवति दुष्प्रकृतेरन्वयः श्रुतं चाविनयस्य'[५] इति कादम्बर्यां प्रयुक्तम्। अत्र अकारणमिति प्रयोगे प्रधानीभूतस्य नञः समासे गुणीभूतत्वात् दोषोऽविमृष्टविधेयांशताख्यः। 'अदुर्लभं हि मरणमध्यवसितम्'[६] इत्यत्रापि नञः समासे गुणीभूतत्वादुक्त एव दोषः।

'न हि तं पश्यामि यो ह्यपरिचितयानया न निर्भरमुपगूढः, यो वा न विप्रलब्धः।'[७] इति प्रयोग उपलभ्यते। अत्र पूर्वपाठार्हस्य यच्छब्दान्वित-

---

१. काद० २५८ पृष्ठे।
२. तत्रैव ३२५ पृष्ठे।
३. तत्रैव २८६ पृष्ठे।
४. काव्यप्रकाशे, सप्तम उल्लासे, २९४ पृष्ठे।
५. काद० १९७ पृष्ठे।
६. तत्रैव ३१४ पृष्ठे।
७. तत्रैव २०२ पृष्ठे।

वाक्यद्वयस्य परपाठादविमृष्टविधेयांशाख्यो दोषः, स तु 'न हि तं पश्यामि' इति वाक्यस्य परपाठेन समाधेयः ।

## अधिकपदत्वम्

'अलिकुलपटलान्धकारितसौगन्धिकम्'[1] इति कुलपटलौ समानार्थकौ शब्दौ प्रयुक्तौ । 'कुल'पदप्रयोगादेव वक्तव्यस्य निर्वाहात् पटलपदप्रयोगादधिकपदत्वनामधेयो दोषः, स तु पटलपदपरित्यागादेव समाधेयः । 'विविधवनवराहवसाविस्रगन्धिकरतलम्'[2] इति प्रयोगश्चिन्त्यः । अत्र विस्रं गन्धीति पदद्वयं प्रयुक्तम् । विस्रमामगन्धीति दर्शनाद् गन्धिपदस्य पुनरुपादानादुक्तो दोषः ।

## अपुष्टत्वम्

'अस्तमुपगते भगवति हारीतहरितवाजिनि सरोजिनीजीवितेश्वरे चक्रवाकसुहृदि सवितरि'[3] इत्यत्र हारीतहरितवाजिनि सरोजिनीजीवितेश्वरे चक्रवाकसुहृदीति विशेषणानामनुपादानेऽपि प्रतिपाद्यमानोऽर्थो न बध्यत इति प्रकृतेऽनुपयोगात्तेषामपुष्टत्वम् ।

## अनवीकृतत्वम्

'सितवारबाणैः सितकुसुमशेखरैः सितोष्णीषैः सितवेषपरिग्रहतया श्वेतद्वीपसम्भवैरिव'[4] इति सितपदं पुनः पुनरुक्तमतएवानवीकृतम् । एवं 'नूनं चास्मादेव सलिललेशमादायादाय महाप्रलयेषु प्रलयपयोदाः प्रलयदुर्दिनान्धकारितदशदिशः प्लावयन्ति भुवनान्तराणि ।'[5] इति वाक्ये प्रलयपदस्य पुनः पुनः प्रयोगान्न कापि नवा भङ्गिः प्रकाशितेति सहृदयमुद्वेजयत्यतोऽनवीकृतत्वम् ।

## सन्दिग्धत्वम्

'विषादशून्यामश्रुजलप्लुतां दृशमितस्ततो दिक्षु विक्षिपन्'[6] इति प्रयु-

१. काद० ४५ पृष्ठे ।
२. तत्रैव ६७ पृष्ठे ।
३. तत्रैव २९६ पृष्ठे ।
४. तत्रैव १६८ पृष्ठे ।
५. तत्रैव २३६ पृष्ठे ।
६. तत्रैव ६६ पृष्ठे ।

ङ्क्ते बाणः। अत्र विषादशून्यामित्यस्य विषादरहितामित्यर्थोऽपि प्रतीयत अतः सन्दिग्धत्वं दोषः। कवेरभिप्रायो 'विषादहेतुना लक्ष्यशून्याम्' इत्यस्त्यतो दोषः, स तु 'विषादेन लक्ष्यशून्याम्' इति पाठेन समाधेयः।

## रसदोषः

'महोदधाविव रतिरसमय इव'[१] इति रतिपदोपादानात् स्वशब्दवाच्यतादोषः। एवं 'यौवनरतिरससागरतरङ्गैः'[२] इति प्रयोगेऽपि दूषकताबीजं स्पष्टम्।

कवेः कानिचिद् वाक्यानि शिथिलानि प्रतीयन्ते। एवं चिन्तयत्येव मयि तस्मात्सरसोऽदूरवर्तिनि तपोवने जाबालिर्नाम महातपा मुनिः प्रतिवसति स्म।'[३] इति वाक्यस्य शैथिल्यं सुधियामन्वक्ष्यम्।[४]

---

१. काद० ३०१ पृष्ठे।

२. तत्रैव ४११ पृष्ठे।

३. तत्रैव ७१ पृष्ठे।

४. काणेमहोदयो लिखति—"The clause इत्येवं......स्म is not well connected syntatically. The sentence is इत्येवं चिन्तयत्येव मयि...हारीतनामा तापसकुमारकः........तदेव कमलसरः उपागमत्...... The words तस्मात्सरसो...तत्तनयश्च are some what parenthetical and hang loosely in the sentence."

Kane's Notes on the Kadambari Kathamukha ( Vol. III A ), p. 129.

---

# सीताचरिते कालिदासप्रतिच्छविः

श्री रहसविहारी द्विवेदी

वाल्मीकि-कालिदास-दिङ्नाग-भवभूति-परम्परायां सीताया उत्तरं चरितमाश्रित्य सनातनोपनाम्ना महाकविना श्रीरेवाप्रसादेन[1] द्विवेदिना प्रणीतं सीताचरितं[2] नाम महाकाव्यं संस्कृतस्य नूतनतममेकं प्रतिनिधिभूतं महाकाव्यं विद्यते। विगते दशकद्वये यानि च तादृशान्येव काव्यान्तराणि निर्मितानि तेषु कविपतेः 'पारिजातहरणं' यदा माघस्य शिशुपालवधमनुहरति, यदा च सुधीसुधानिधे 'रुक्मिणीहरणं' श्रीश्रीहर्षस्य 'नैषधीयचरितं' तदा सनातनस्यास्य काव्यमिदं महाकविसार्वभौमस्य तत एव च कविकुलस्य गुरुपदवीमधितिष्ठतो महाकवेः कालिदासस्य काव्यशिल्पमुपजीव्य तदेव चानुहृत्य सम्प्रवर्तते। सुकवि[3]रेष स्वयमेव स्वमुखेनैवोदीरयति—

'तस्यास्तस्मिन् प्ररुदितमृगे यद्धि शान्ते कुटीरे
काव्यं किञ्चित् स्वकरलिखितं राघवेणापि पुण्यम्।
तस्यैवांशं कमपि कृपया मातुरस्या न्यबध्ना—
च्छिष्यः कश्चित् कविकुलगुरोः कस्यचित् काव्यमार्गे॥' इति

—[ सीता० १०।८१ ]

'भासो हासः कविकुलगुरुः कालिदासो विलास'[4] इति वाक्यात् कवि-

---

१. सम्प्रति काशीहिन्दूविश्वविद्यालयस्य प्राच्यविद्यासङ्काये संस्कृत-साहित्यविभागाध्यक्षेण।

२. काव्यमिदं सागरविश्वविद्यालयस्य संस्कृतपत्रिकायाः सागरिकायाः ७।४ अङ्के प्रकाशितम्।

३. श्रीमालवीयमहाकाव्यनिर्माता पं० रामकुबेरमालवीयः सनातनमिमं 'सुकवि' रिति संबोधयति—रेवाप्रसादसुकविर्गुणिनां वरेण्य' इति [ श्री-मालवीय का० १०।६ ] मालवीयकाव्यविषये द्रष्टव्योऽस्माकं सागरिकायाः १०।१ अङ्के प्रकाशितो 'महाकविर्मालवीयः तत्काव्यं चेतिनामा सन्दर्भः।

४. प्रसन्नराघवे १।२२॥

कुल गुरुत्वेन कालिदासः एव प्रथितः। सीताचरितकारः स्वमप्युद्धृतस्यास्य पद्यस्य सङ्केतनाम्नि टिप्पनके लिखति—

'कविकुलगुरोः कालिदासस्य····काव्यकर्मणि
कालिदासवदेव-अभिव्यक्तेरिहोपयोगात्।' इति।

अस्ति च सहृदयानामप्ययमेवानुभूतिपरिस्पन्दः। संस्कृतविद्यायाः स्वदेशसंस्कृतेश्चातीव भक्ता श्रीमती प्रो० कमला [ रत्नम् ] मास्कोनाम्नि द्वीपान्तरे सीताचरितमनुशील्य तत एव लिखति—

'मेरे जैसे कविताप्रेमी को काव्यसौन्दर्य की ये पंक्तियाँ नितान्त प्रिय रहेंगी—

'मुखेषु मौना अपि ते तदानीं
मनस्सु चाञ्चल्यभृतो विरेजुः।
सरोवरा यद्वदनुत्तरङ्गाः
परन्तु मध्ये चलमीनसङ्गाः॥' सीता० ९।१२॥

यहाँ कल्पना की उड़ान निश्चय ही महाकवि की अभिराम उपमा सूक्तियों का शिल्पत्व कर रही हैं।'[1]

उपर्युक्तं 'तस्यास्तस्मिन्नि'ति पद्यं तत्सङ्केतं च महत्त्वपूर्णं निरूपयद्भिः डॉ० रामजी उपाध्यायमहाशयैः 'सीताचरिते कालिदासस्य प्रभाव' इति विषये स्वतन्त्रानुशीलस्यावश्यकता प्रत्यपादि।[2] अस्यां दिशि कृतायां विचारणायां ज्ञायते यद् भाषाभिव्यक्तिभावादिदृशा सीताचरिते कालिदासस्य पर्याप्तं साम्यं वर्वर्त्ति। उद्धृतस्य 'शिष्यः कश्चिदि'ति पद्यांशस्य सङ्केते **'कालिदाससाहित्ये कृतश्रमत्वाच्चे'**ति निगदन् सीताचरितकार इममपि सङ्केतमकुरुत यत् स कालिदाससाहित्यं विशिष्टतयाऽध्यैत। तदध्ययनमदस्सीता-चरितेऽवश्यमेवानुसन्धेयम्। हर्षोऽयं यत् काव्येऽस्मिन् तत्सम्बन्धीन्यनेकानि सूत्राणि प्राप्यन्ते, यैः कालिदासस्य सम्बन्धिनोऽनेके प्रश्नाः समाधीयन्ते। एतादृशी द्वे सूत्रे निबन्धेऽस्मिन् प्रस्तूयेते। तत्र—

---

१. श्रीमत्याः कमलारत्नमहोदयायाः सरितकर्त्रे प्रेषितं ६६ फरवरी ११ दिवसीयं पत्रम्।

२. सागरिकायाः ७।४ अङ्कस्य भूमिकायाम्।

एकं [१] गर्भवत्याः परित्यागः
परं च [२] सीताया भूमिप्रवेशः

## १. गर्भवत्याः परित्यागः—

अभिज्ञानशाकुन्तले रघुवंशे चेत्युभयत्र महाकविना कालिदासेन गर्भवती-परित्यागः समानतया प्रस्तूयते स्म। शाकुन्तले शकुन्तलाया रघुवंशे सीतायाश्च। अत्रावधेयमिदं यच्छाकुन्तलस्याख्यानं महाभारतस्य यस्माच्छकुन्तलोपाख्यानाद् गृहीतमास्ते तस्मिन् शकुन्तला कण्वाश्रम एव प्रसूतसुता सती जातेन सुतेन सार्धं दुष्यन्तं निकषेयाय। किन्तु कालिदासः शाकुन्तलकथाकवने सीताप्रत्याख्यानभूमिमशिश्रियत। अतो रूपकेऽस्मिन् कमनीयकलेवरा निसर्गकन्यका शकुन्तलाऽऽसन्नप्रसवैव दुर्वाससः शापाभिभूतमविदितवृत्तान्तं दुष्यन्तं प्रत्येति। महाकविना महाभारतकथाप्रसङ्गोऽयं कथं पर्यवर्तयत ? अस्मिन् प्रश्ने समुदिते सार्वत्रिकमिदं समाधानं यत् कथावस्तुन्यधिकतमा रसनीयता प्रभावोत्पादकता चात्र कारणम्। एतदतिरिक्तं सीताचरितकृता परित्यागोऽयं योजनाबद्धः सोद्देश्यश्च समाम्नायते। एतन्मते तु परित्यागोऽयं भाविनो राष्ट्रपतेरलौकिकस्य व्यक्तित्वस्य कृते निश्चिता भूमिकाऽस्ति। भावमिमं जन्मशुद्धिं मन्वानो बाल्मीकिमुखेन—

'भगवति ! विदिताखिलो मनुष्यो
भवति निसर्गत एव जन्मशुद्ध्या।
न खलु बहिरुपाधिमाश्रयन्ते
खनिजनुषो मणयः प्रकाशसिद्ध्यै ॥

[ सीताचरिते ७।१० ]

इत्थं कथयन्नस्यैव पद्यस्य सङ्केते कविरसौ—

'जन्मशुद्धिर्हि ज्ञानलाभे भारतीयो मन्त्र' इत्यब्रूत।

अत्र विचारणीयं यज्जन्मशुद्धिशब्दः कालिदासस्यैवास्ति। कालिदासो रघुवंशमत एवादरणीयं स्वीचक्रे यद् वंशेऽस्मिन् जन्मशुद्धये सर्वाधिकं महत्त्वं प्राप्तमासीत्—

'सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम्'

[ रघुवंशे १।५ ]

सनातनकविः जन्मशुद्धये गर्भवत्यास्तपोवनस्य संस्कृतिकेन्द्रेषु मुनीनामाश्रमेषु निवासमावश्यकं मनुते। वाल्मीकेराश्रमे पुत्रवतीं सीतां वीक्ष्य साकेतनिवासिनो ब्रुवते—

'ध्रुवमेव सीतापरित्यागे कौसल्यायाः षड्यन्त्रमेव कारणम्। सा गर्भस्योत्तमसंस्काराय राजप्रासादजन्याद् राजस-तामसवैभवादपनीय सीतां तपोवनस्य सात्त्विकं साधनामयं क्षेत्रमनैषीत्।' अत्र चाऽयं श्लोकः—

'सा कूटनीतिर्ननु कोसलेन्द्र—
पुत्र्याः प्रवादो यदभूत् पुरा सः।
सा यौवने नैव चकाङ्क्ष भूयः
पौत्रेषु संस्कारकृते तपांसि॥

—[ सीताचरिते १०।५४ ]

सीतापरित्यागे कौसल्या हेतुरिति सीताचरितकारस्य कल्पना। अत एव साधारा प्रतिभाति यतः कालिदासस्य रामोऽपि सीतापरित्यागसमये लक्ष्मणमवोचत्—

'प्रजावती दोहदशंसिनी ते
तपोवनेषु स्पृहयालुरेव।
स त्वं रथी तद्व्यपदेशनेयां
प्रापय्य वाल्मीकिपदं त्यजैनाम्॥'

—[ रघुवंशे १४।४५ ]

वाल्मीकेराश्रमं निकषा परित्यागस्यैकोऽभिप्रायः शुद्धवातावरणस्य प्राप्तिरपि भवितुमर्हति। सीताचरिते अयं प्रस्तावो मातृभिरकारि—

'मातरस्तदनु लब्धचेतना
बाष्परुद्धवचसः कथञ्चन।
प्रास्तुवन् निजवधूं प्रचेतसः
सूनवेऽर्पयितुमाप्तसम्विदे॥'

—[ सीताचरिते ३।३७ ]

मातॄणां प्रस्तावोऽत्रात एवौचित्यविधायको यतः सीताचरिते सीता रहस्यपूर्णरूपेण न परित्यक्ता, अपितु सर्वेषामुपस्थितौ सा स्वयमेव राजकुलस्य प्रमुखसदस्यानां समक्षं वनगमनं प्रस्तवीति—

यामि मातर इतः स्वतस्ततो
यामि, यामि, विपिनं न मे व्यथा।
कीर्तिकाम्यमवितु सुमानुषा
मृत्युतोऽपि नहि जातु बिभ्यति ॥

[ सीताचरिते ३३।३१ ]

जन्मशुद्धिविषयकः सीताचरितकारस्यायमपि सङ्केतोऽस्ति यदुत्कृष्टा सन्ततिस्त्रिधा जायते—

(१) पितृतपसः
(२) मातृतपसः
(३) पित्रोस्तपसश्चेति ।

भरतोत्पत्तौ मातुः, रघोरुत्पत्तौ पितुर्लवकुशोत्पत्तावुभयोश्च तपः कारणं वव्रृते—

'सुदक्षिणायां रघुरेव तद्व—
च्छकुन्तलायां भरतो हि जज्ञे।
अस्यामिमौ द्वौ ननु हेतुरत्र
द्वयोस्तपांसि प्रसुवः पितुश्च ॥'

—[ सीताचरिते १०।५३ ]

एवं कविवरः सनातनः कालिदासस्यान्तर्गूढां सरस्वतीं साक्षात्करोति, प्रकटयति चैतादृशोऽभिप्रायान् ये प्रसिद्धटीकाकृत्सु न प्राप्यन्ते ।

## २- सीताया भूमिप्रवेशः

सीताया भूमिप्रवेश उत्तररामचरितकृते भवभूतये नारोचत, किन्तु कालिदास आदिकविसदृशमेव तद्वर्णनं व्यतानीत् । भूमिप्रविष्टां सीतां चित्रयता सीताचरितकृता सनातनेनाऽपि कालिदासवदेव भूमिप्रवेशप्रसङ्गो नामोचि । किन्त्वनेन वाल्मीकिकालिदासयोः सरणये सर्वात्मनाऽभिनवं रूपमदीयत । सीताचरिते सीताऽव्युत्थानसमाधौ[१] प्रतिष्ठिता सती केनचित् सिद्धयोगिना समं जीवितैव भूसमाधिमयासीत् । स एवात्र भूमिप्रवेशः स्वीकृतः—

---

१. पातञ्जलयोगसूत्रविभूतिपादे ।

'गाङ्गैस्तोयैरघनयनजैर्दिग्धदिग्धैः पवित्रं
श्रद्धापुष्पैः शबलशबलं खातमेते विधाय ।
तस्या गात्रं पुनरपि महीमातुरेवाङ्कशय्याऽऽ-
सीनं चक्रुर्नहि मृतवपुर्मन्यते योगमुक्तः ॥

—[ सीताचरिते १०।७७ ]

वस्तुतः सीताचरितकर्तुरियमीदृशी कल्पनाऽऽस्ते या भूमिप्रवेशसम्बन्धे प्राचीनपरम्पराया व्याख्यैव मन्तुं शक्यते—

'तथा शपन्त्यां वैदेह्यां प्रादुरासीत्तदद्भुतम् ।
भूतलादुत्थितं दिव्यं सिंहासनमनुत्तमम् ॥
ध्रियमाणं शिरोभिस्तु नागैरमितविक्रमैः ।
दिव्यं दिव्येन वपुषा दिव्यरत्नविभूषितैः ॥
तस्मिंस्तु धरणी देवी बाहुभ्यां गृह्य मैथिलीम् ।
स्वागतेनाभिनन्द्यैनामासने चोपवेशयत् ॥
तामासनगतां दृष्ट्वा प्रविशन्ती रसातलम् ।
पुष्पवृष्टिरविच्छिन्ना दिव्या सीतामवाकिरत्[१] ॥

एवं वाल्मीकीये रामायणे

तथा च—

'वाङ्मनःकर्मभिः पत्यौ व्यभिचारो यथा न मे ।
तथा विश्वम्भरे ! देवि ! मामन्तर्धातुमर्हसि ॥
एवमुक्ते तया साध्व्या रन्ध्रात्सद्योभवाद्भुवः ।
शातह्रदमिव ज्योतिः प्रभामण्डलमुद्ययौ ॥
तत्र नागफणोत्क्षिप्त - सिंहासन - निषेदुषी ।
समुद्ररसना साक्षात् प्रादुरासीद् वसुन्धरा ॥
सा सीतामङ्कमारोप्य भर्तृप्रणिहितेक्षणाम् ।
मा मेति व्याहरत्येव तस्मिन् पाताल मभ्यगात्[२] ॥

एवं रघुवंशे विदीर्णायाः पृथिव्या नागफणामण्डिते सिंहासने स्थितायाः पृथिवीदेव्या उदयः, सीतां स्वाङ्के निधायान्तर्भवनं चावश्यमेव कस्याश्चिद् योगभूमिकायाः काव्यरूपं वर्तते ।

---

१. वाल्मीकीयस्य रामायणस्योत्तरकाण्डे ९७ । १८-२१ ॥
२. रघुवंशे १५ । ८१-८४ ॥

अतोऽतिशयरहितमेतत् कथनं यत् कविवरः सनातनःकालिदासस्याभिप्रायं तादृशमेवात्मसात्क रोति यथा सीताचरितस्यैव वशिष्ठो वाल्मीकेरथवा यथा कश्चित् प्रतिभावान् प्रियशिष्यः स्वस्य गुरोः ।

सर्वथा निर्विवादमेतद् यत् सीताचरितं कालिदाससाहित्यमनुहरति, सीताचरितकारश्च कालिदासस्य कविकर्म । यद्यपि इदमपि सत्यं यत् कुत्रचित् सीताचरितं कालिदाससाहित्यमतिशयानमपि दृश्यते । अस्ति

चात्रापि सहृदयानामविमतिः अतएव सीतायाश्चित्रणं चिन्तयतां-श्रीमतां डॉ० चिन्तामणिद्वारिकानाथ-( C. D. Deshmukh. )-देशमुख-महोदयानां वचनमिदं युक्तमेवाक्षरशः 'सीताचरितस्य सीता कालिदासस्य सीताया अधिकं प्राणवती विद्यत'[1] इति ।

---

३. सीताचरिते ६ । ३२-३७ ॥

1. I think you have portrayed sita as a more living and noble souled Character than Kalidas in his 14 Sarga of Raghuvansh.

Letter to Dr. Reva Prasad Dwivedi.
Dated 3—6—69.
from Hyderabad.

———

# श्रीदत्त दीनेशचन्द्रस्य जीवनं कृतित्वं च

## राधावल्लभः त्रिपाठी

संस्कृताङ्ग्लगिरोः सुमधुरललितकाव्यानां प्रणेता वहुभाषाविद् संस्कृति-संस्कृतयोरनन्य उपासको दत्तदीनेशचन्द्रमहाशयः १८९१ ईस्वीयेऽब्दे बङ्गप्रदेशं स्वजनुषा अलञ्चकार। अस्य पिता दुर्गापुरनाम्निग्रामे प्राथमिकशालायां प्रधानाध्यापकोऽभूत्। हाबीगञ्ज—राजशाही—कलिकातादिस्थानेष्वस्य छात्रजीवनं व्यतीयाय। १९०९ ई० वर्षेऽयम् एण्ट्रेंसपरीक्षां १९११ तमे च वर्षे इण्टरमीजियट्परीक्षां प्रथमश्रेण्यां समुदतरत्, शासनेन च छात्रवृत्तिप्रदानेन पुरस्कृतः। १९१३ तमेऽब्दे संस्कृतं दर्शनं चादाय प्रथमश्रेण्यामेव बी० ए० परीक्षां समुदत्तीर्य १९१६ तमेऽब्दे अर्वाचीनाङ्ग्लसाहित्येन १९२१ तमे च प्राचीनमध्यकालिकाङ्ग्लसाहित्येन कलिकाताविश्वविद्यालयाद् एम० ए० परीक्षां द्विरुत्तीर्णवान्।

संस्कृतं प्रति अस्य बाल्यादेव दृढोऽनुरागो बभूव। च चायमनुरागोऽस्यपितृचरणैरस्य हृदयेऽङ्कुरितः, माध्यमिकशालाध्यापकैः संस्कृतसाहित्यविचक्षणैः काव्यतीर्थरेवतीमोहनमहाभागैश्च स्ववैदग्ध्येन सहृयतया च संवर्धितः पल्लवितश्च। तेषां महाशयानां साहाय्येन दत्तमहाशयः कालिदासभवभूतिभारविप्रभृतिकवीनां गीतादिसद्ग्रन्थानां च सम्यगध्ययनं चकार।

१९१६-२१ वर्षेषु दत्तमहाभागो गहनमनोयोगेन लैटिन-ग्रीक-फ्रेञ्च-जर्मन-हीब्रू-आरब्य-पार्शियनभाषाणामध्ययनं कृतवान्। १९२६ ई० वर्षेऽयं बङ्गप्रदेशे मिदनापुरमहाविद्यालये आङ्ग्लविभागे आचार्यपदत्वेन नियुक्तः। अनन्तरमयं १९२७ ई० वर्षात् जयपुरनगरस्थ-महाराजा-महाविद्यालयस्याङ्ग्लविभागे प्राध्यापकपदं समभूषयत्; १९५१ ई० वर्षे च सेवातो निवृत्तः। ततः साहित्यसर्जनामेव सविशेषं मनोभिनिवेशयति स्म। १९१६ ईस्वीयेऽब्दे विवाहितः चतुर्णां पुत्राणामेकस्याश्च कन्यकायाः पिता दत्तमहाभागाः १९५५ ई० वर्षाद् विधुरजीवनं यापयति। सम्प्रत्ययं विविधग्रन्थविरचने संस्कृताङ्ग्लभाषयोः काव्यसर्जने सङ्गीतकलावैशारद्यसम्पादने च निरतो विलसति जयपुरनगरे।

### साहित्यिकजीवनम्

१९२४ तमे ई० वर्षे महाभागेनानेन 'हिन्दुस्तानी सिम्प्लीफाइड इन पर्शि-

यन कैरेक्टर्स' इत्याख्यः ४०० पृष्ठात्मक एको ग्रन्थो व्यरचि। ततः परमाङ्ग्लभाषायां मौलिकानि अनुवादात्मकानि बहुविधललितकाव्यान्यनेन गुम्फितानि। १९४३ तमेऽब्देऽनेन मेघदूतस्य हृदयग्राही आङ्ग्लानुवादः प्रकाशं नीतः। काव्यस्यास्य मुद्रणात् पूर्वं तदुपोद्घातरूपं कवीश्वरकालिदासस्तवमयं पद्यत्रयमनेन व्यरचि, दर्शितं च तद् विद्वद्वरेण्यश्रीगोपालदत्तशास्त्रिमहाभागेभ्यः। तैश्च साशीर्वादं वर्धितोत्साहोऽयं भूयोऽपि सुमधुरसंस्कृतकाव्यरचनायां प्रवृत्तो बभूव। १९४३ तम एव संवत्सरेऽस्य भारतगाथेति संस्कृतकाव्यं प्रकाशितम्। काव्यमिदं राजस्थानसंस्कृतविद्वन्मण्डले मण्डनायमानैः भट्टश्रीमथुरानाथशास्त्रिमहाभागैः बहुशः समुपश्लोकितम्। राजस्थानाद् बहिस्थितविद्वत्सु सागरिकाया यशस्विसम्पादकाः संस्कृतस्यैकनिष्ठसेवका रामजीउपाध्यायमहाभागा इदम्प्रथमतया दत्तमहाशयस्य संस्कृतकाव्यरचनायाममन्दाभियोगं भूरिशः शशंसुः। एतादृशां विदुषां प्रोत्साहनं समुपलभ्य दत्तमहाभागेन सुभाषगौरव-रवीन्द्रप्रतिभा-छन्दःसन्दोह-बङ्गविभावरीति चत्वारि काव्यान्यपि कालक्रमेण विरचितानि प्रकाशं च नीतानि।

आङ्ग्लभाषायामस्य रचनानां संख्या पृथुला वर्त्तते। अधोलिखितरचनानां द्वितीयं संस्करणं प्रकाशनद्वारि तिष्ठति—

( 1 ) Christmas 1935 and other verses.
( 2 ) Chandidas : English verse Translations.
( 3 ) Vidyapati : Renderings in English verse.
( 4 ) Exegi Moumentum and Lyries.
( 5 ) Mango : Blossoms and Ashok Leaves.
( 6 ) Kalidasa's Meghadutam in English verse.
( 7 ) The Rubaiyat ( 443 ) of Abu Salld khayr in English
( 8 ) Rubaiyat ( 62 ) cf Boba Tolir in English verse.

अन्यच्च—'Sarasvati and other Sounets', ·Sounets to Islam and the Arabs' इति काव्यसङ्कलनद्वयमस्य यन्त्रस्थं वर्त्तते।

अधोलिखिताः कृतयोऽनेन सेवानिवृत्त्यनन्तरं विरचिताः—

( 1 ) The Bhagavadgita in English verse.
( 2 ) Michael Madhu Sudan Dutta's 'Bangali Sounets' (108) in English verse.
( 3 ) Michael Madhu Sudan Dutta's 'Megharadvadha' in English blank verse.

( 4 ) Jai Shankar prasad's kamayani in English verse.
( 5 ) The Quran in English free verse.
( 6 ) The Quran for all.
( 7 ) The golden Treasury of Persian Quatrains.
( 8 ) Euripides on woman, Love, Marriage and Politics.

संस्कृतभाषायामस्य पञ्चकाव्यानि उपरिलिखितानि प्रकाशं गतानि। माइकेलमधुसूदनदत्तस्य मेघनादवधमहाकाव्यम् अन्यानि च कानिचित् स्फुट-काव्यान्यनेन संस्कृते ऽनूदितानि, तेषां सङ्कलनं मुद्र्यमाणं वर्त्तते।

## भारतगाथा

काव्यस्यास्य प्रथमं संस्करणं १९४३ तमे वर्षे प्रकाशितं, सम्प्रतीदं द्वितीय-संस्करणे प्रचरति। अत्र मन्दाक्रान्ताच्छन्दसां शतेन भारतस्यातीतगौरवस्य वर्त्तमानदुःस्थितेश्च कविना हृदयस्पर्शि चित्रमङ्कितम्। प्रारम्भिकपद्येषु सरस्वती–कृष्ण-राम-परशुरामादीनां स्तुतीरुपक्रम्य शङ्करचैतन्यप्रभृतिभिर्महापुरुषैः कां भूमिकामारोहितो भारतदेश इति सुरुचिरमूचिवान् कविः। पुरातनैर्मनीषिभिर्ये आदर्शा अनुन्मीलिताः, तेषामनुकरणेन च कथं भारते चारित्र्योत्कर्षः समजनीति प्रदर्शयत्पादकसरण्या कविर्निरदिशत्। तद्यथा—

कुत्रापश्यः परिणतधियो ब्रह्मचर्याश्रमस्थान्
सर्वान् कामान् परिहृतवतो ज्ञानदानप्रसक्तान्।
कुत्रापश्यः स्वपतिचरणार्चापरान् धर्मदारान्
त्यक्त्वा प्राणान् पतिसुखकृते येऽक्षयं नाकमापुः॥ ४५॥

भारतस्य विगतवैभवं प्रति भृशमनुरक्तोऽयं कविर्वर्त्तते। अत एव वर्त्तमान-परिस्थितिषु अतीतस्य प्रतिच्छविमनवलोकयन्नसौ शोकं प्रकटयति—

कृष्णप्राणाः स्वपतिविमुखाः क्वाधुना गोपिकास्ताः
कुत्र श्यामो मदनदमनो राधिकाप्रेमलक्ष्यः।
कालिन्दी च क्व पुनरधुना सोर्ध्ववारिप्रवाहा
वंशीधारी रतिपतिजयी साम्प्रतं क्वास्ति दृश्यः॥ १६॥

कुञ्जे कुञ्जे स्फुरति शरदि श्रान्तकन्दर्पनेत्रं
हस्ते हस्ते कुवलयसुमं कौतुकेनोपनीतम्।
इत्थं भूयो यदुकुलपतिर्गीतनृत्ये चिकीर्षु-
र्दिव्यं दत्तां प्रणयममृतं गोपिकाभ्यः प्रसन्नः॥ १७॥

वर्त्तमानव्यवस्थया कविरसन्तुष्टो ऽस्ति। आदर्शविमुखान् ब्रह्मचर्यविरहितान् ऐदंयुगीनविप्रान्, कापुरुषानिव च क्षत्रियान् वीक्ष्य भृशमस्य हृदयं दूयते, सममर्-दारणं चासौ गायति—

पश्यन्नेतान् द्रुहिणमुखजान् वेदचर्चाविहीनान्,
भिक्षाजीवान् श्रुतिविरहितान् ब्रह्मचर्यानभिज्ञान् ।
वामासेवापहृतमनसः शोकमग्नो न कः स्यात्
तीर्थे काकानिव विचरतो नाममात्रेण विप्रान् ॥ ५४ ॥
कर्मभ्रष्टः प्रकृतिमुखरो म्लानयज्ञोपवीतः
काकह्वानः श्रुतिविरहितः सामगानापदेशः ।
मिथ्याचारः सुरतनिरतः स्नानसन्ध्यादिदम्भो
मत्तस्वान्तो विषयमधुना यः क्व तस्यास्ति धर्मः ॥ ५५ ॥

भारतमातुर्दीनतां दरिद्रतां दुःस्थितिं च निभाल्य स्फुटति कवेः हृदयम् । अस्याः दुर्दशाया मर्मन्तुदं शब्दचित्रमसौ प्रस्तौति—

आसीत्पूर्वं धनदविभवा वीरमाता धरायां
तस्याः पुत्रा धरणिशयना विस्मृतक्षीरपानाः ।
सा दुर्दैवाद्विगतसुषमा रत्नगर्भाऽधुना नो
नग्ना स्वास्रं पिबति किमहो छिन्नमस्तास्वरूपा ॥ ५७ ॥
कङ्कालस्य प्रतिकृतिमहो चेतसो भीतिहेतुं
मन्येऽहं त्वां स्वरुधिरहुतैर्वीरधात्रीं विदध्याम् ।
जन्मन्यस्मिन् परमपि मुहुः पुण्यकर्मोच्चयेन
क्षीणक्षीणां श्रियमिह तवोद्धर्तुमीशो भवेयम् ॥ ५८ ॥

काव्यमिदं राष्ट्रियभावनया ओतप्रोतं वरीवर्त्ति । देशप्रेरणाभिभूतस्य कवेर्मातृभुवं प्रति भावार्द्रा वाणी अनेकत्र स्फुटति—

श्यामच्छाया दलितमहिषा मुण्डमाला दधाना
मत्स्याजीवैः कथमनुकृतेम्लानपुष्पैरिहार्च्या ।
सूत्वा सिंहान् किमिह जननी फेरवाणामसित्वं
धीरः संख्ये स्थिरनिजमहा मङ्क्षु हन्यादरातिम् ॥ ५९ ॥
आनीतोऽद्याश्रुजलविशदः कण्ठहारस्त्वदर्थं
भित्वा वक्षो रुधिरमपि ते पादपद्मार्चनायै ।
वस्त्रं चैतन्मलिनमलिनं कल्पनातन्तुवीतं
नान्यत्किञ्चित्त्वदपचितये साधनं मेऽस्ति मातः ॥ ७१ ॥

कवेः प्रकृतिप्रणयितापि काव्येऽत्र स्फुटति । भारतीयप्राकृतिकसौन्दर्यस्य मनोहारिरूपं तेन चित्रितम् —

वर्षारम्भे भवति धरणिः सोमधाराप्रसिक्ता
तृष्णार्तां नो भुवनमसकृन्मेदुरत्वं बिभर्त्ति ।
सिक्त्वा भूमिं खलु सुरपतिः सप्तवर्णं धनुः स्वं
मेघान्तःस्थैस्तपनकिरणैर्दृश्यरूपं विधत्ते ॥ ७५ ॥

अथवा---

पत्रे पत्रे चलति पवनः श्वासनिष्क्रान्तगन्धे
वृक्षे वृक्षे नवकिसलयान्याशु कार्ष्ण्यं भजन्ते ।
पुष्पे पुष्पे मधुपनिकरा विस्मरन्ति स्वगीतं
दृष्ट्वा रूपं स्वमनसि यथा योगिनः स्युर्विनिद्राः ॥८६॥

शृंगारभावनाभरिता भारती अपि काव्येऽस्मिन् समुल्लसति । शृंगारप्रियोऽपि कविरेतादृशप्रसंगेषु संयमं प्रदर्शयति । तथापि रमणीनां रम्यविलासाः शारीरिकचेष्टाश्च तं प्रीणन्ति—

राजीवे द्वे किमथ नयने किं मणीवेन्द्रनीलौ
हन्तुं मारं किमभिभवितुं सुभ्रुवो भ्रूविलासः ?
कम्बुग्रीवाङ्कनिरुपमतां दृष्टवान् को न मुग्धो
दुर्गाद्री वाऽतिकठिनकुचौ यत्र बद्धः सुमेषुः ? ॥९१॥
कुन्दाभेयं दशनसुषमा किं तपोनाशिनी स्यात्
रम्भोरुश्रीरभिभवति किं नासिधाराव्रतस्थान् ।
बाहू वेमौ विकचजलजौ बन्धपाशौ यतीनां
याचेते किं दयितमिलनं युक्तबिम्बाधरोष्ठौ ? ॥९२॥

तथाप्यन्ते कविः शृङ्गारितप्रवृत्तिभ्यो व्युत्थाय उदात्तभावानां चेतसि सञ्चाराय कामयमानो दृश्यते––

त्यागाद्भोगो हितकरतरो विस्मृते तद्विलासे
मिथ्याभाक्त्वं भजसि किल चेत् कामचारं वयोन्ते ।
देहिष्वेवं प्रकृतिविहितां वृत्तिमालोच्य धीराः
कुर्वन्त्यात्मोद्धरणमनुनर्दुःखलाभाय धन्याः ॥१००॥

भारतगाथायाः सरलसरसा ललितमसृणा सरणिर्मृद्वीकामध्यनिर्यन्मसृणरसझरीमाधुरीमास्वादयति । अतएवाभिप्रैति कश्चिदालोचकः—'अस्यां रसपेशलायां मधुरकोमलकमनीयपदावलीसमन्विताया 'मन्दाक्रान्तायाः' काप्यभिनवाऽभिख्या प्रतिश्लोकं नरीनृत्यते, स्मारयति च कविकुलगुरोः कालिदासस्य पदरचनागुम्फननैपुणीं पदे पदे ।'

## सुभाषगौरवम्

काव्येऽस्मिन् १७४ पद्येषु विविधच्छन्दासि गुम्फितानि । अत्र अमरस्वातन्त्र्य-सेनापतेर्वीरसुभाषस्य गौरवगाथां प्रस्तौति कविः । काव्येऽस्मिन् वीररसतरङ्गिणी निरर्गलं प्रवहमाना दरीदृश्यते । भावानुरूपं सक्षमा समुत्तेजनसमर्था च भाषा सर्वत्र स्फुटति । छन्दसां युक्तियुक्तं चयनमपि कवेः पाटवं प्रमाणयति । छन्दांसि स्वयं कवेः भावान् अर्थविबोधं विनैव निवेदयन्ति तथाहि—

नवनीत—सुधासमचित्तविनोदनरीतिगुणाढ्यतयावसितं
त्वमनन्तसहायकशक्तिविनायक—शूरषडाननवद्रिपुहा ।
त्वमतारकजिद्भुवि शक्तिधरोपमशौर्यगणाधिपतुल्यबलो
नवभारतनाविक ! रक्षतु ते रणनीतिरनाविकनावमिमाम् ॥६६॥

शब्दालङ्काराणां प्रयोगः कविना यथावसरं साधु विहितः । तद्यथा—

सुभाषसाधनार्जितं करद्वयेन यत्सुखम् ।
सहस्रसंख्यकैः करैर्न तज्जितं विवस्वता ॥३६॥

काव्येऽस्मिन् दत्तमहाभागस्तन्द्रालसभारतीयान् पौरुषमवलम्बयितुं सुभाष-सदृशांश्च भवितुं सन्दिशति । देशाय सर्वस्वसमर्पणं विधातव्यमित्यप्यसावभिप्रैति—

मायावादानुसरणकृदभून्नास्तिकः
कुज्ञानान्धो रटति जगति 'पाहीश माम्' ।
त्यक्त्वा सर्वस्वमनुकुरु सुभाषार्पण
देशप्रेम्णोऽमलनिकषशिलायामतः ॥६७॥

उत्साहमवलम्ब्य शत्रूणां संहारः करणीय इति भावनाऽस्मिन् काव्ये प्रबला विद्यते । कवेर्मते सद्य एवारिदमनाय यत्नो विधेयः, यतो हि—

निःशस्त्रतां श्रयन्ते ये समुपेक्ष्य रिपोर्बलम् ।
भस्मीभूता भवन्त्यन्ते शलभा इव तेऽनले ॥१३०॥

सुभाषगौरवगाथा काव्यस्यास्य प्रधानो विषयः । सुभाषं प्रति महती श्रद्धा कवेर्मनसि जागर्ति, तस्याश्चाकृत्रिमा अभिव्यक्तिरत्र जाता । सुभाषस्य सत्त्वं पराक्रमः औदात्यं च कविना सम्यक् चित्रितानि । सुभाषस्य तेजोऽमितमेव कविं प्रति भाति—

प्रभा ते विद्युद्वन्न तु चपलतादोषदुष्टः
प्रकाशस्ते भानोरिव न तु कदाप्यभ्ररुद्धः ।
तवोत्तापो वह्नेरिव दहति संख्येष्वरातीन्
अचिन्त्यं खल्वेतद्गुणचयचित्रम् ॥ ७७ ॥

एतादृशस्याचिन्त्यप्रभावस्य वीरपुत्रस्य जननेन भारतभूर्धन्या जाता । अथवा–

का सा वाञ्छति नेदृशं सुतवरं वंशद्रुमसमं
भूभारं हरति द्विबाहुरपि यो हत्वा रिपुचमूः ?
सृज्यन्तेऽधमजाः किमूर्ध्वगतिभिः सार्धं प्रभवितुं
दृट्वा केसरिणी स्वतोऽपहतभाः फेरुप्रजनिका ॥ ८२ ॥

सुभाषाय वास्तविकः श्रद्धाञ्जलिरत्र कविना समर्पितः । सुभाषस्तस्य मते नूतनः परशुरामः, युगनेता च बभूव--

त्वं जामदग्न्य आसीर्वङ्गे युगनेत्रमूर्त्तिधरः ।
तव कीर्त्तिरद्य वा श्वो भविताऽस्माकं नवभगवद्गीता ॥१५७॥

## रवीन्द्रप्रतिभा

अस्मिन् काव्ये १७४ पद्येषु १४९ संख्यकानि विविधच्छन्दांसि कविना रचितानि । अत्र कवीन्द्राय श्रीरवीन्द्राय स्वकीयं हार्दिकभावाञ्जलिं समर्पयति कविः । श्रीरवीन्द्रस्य कविव्यक्तित्वमत्र हृदयङ्कषं चित्रितम् । काव्यमिदं पठतो जनस्य हृदयङ्गमा भवति रवीन्द्रनाथस्यार्षा वाणी, विग्रहवदिव समक्षं समुपस्थितं भवति तस्य सरलं जीवनं स्मृतिपथं चोपयान्ति तस्यानन्यसामान्या गुणाः । रवीन्द्रस्य महान्ति कर्माण्यपि कविना असकृत् समुपश्लोकितानि । तथाहि----

शान्तिनिकेतनमाश्रमतुल्यं त्वत्कृपयाऽजनि विश्वविहारः ।
देशविदेशकतानुभवस्ते भिन्नरुचीनकरोच्चिरबन्धून् ॥

रवीन्द्रनाथीयकाव्येऽपूर्वो गरिमा आसीत् । तस्य रचनासु अद्भुता एव प्रतिभा समुल्लसति । अयमेवाभिप्रायः कविना इत्थंप्रकटितः—

अद्यापि येषाममरद्युती नामाभातितेजः सवितुः समानम् ।
मन्ये त्वयैव प्रकटीकृतं तत्, काव्यैश्च नाट्यैश्च सचित्रगीतैः ॥४५॥
मुदिरमेदुरमन्द्रसुघोषितं गहनकन्दरकेशरिगर्जितम् ।
परभृतालिरुतोपमझङ्कृतं श्रुतिविचित्रतया तव मण्डितम् ॥५१॥

कवेर्जीवनं त्यागमयं परिग्रहमयं परार्थपरायणं च भवतीत्यपि कविरत्र रवीन्द्रवचसा सम्यक् पाठकान् स्मारयति—

कविजीवनं सततमाहुतिदानं
क्षणिकं सुखं तनुभृतां परमिष्टम् ।
सुखमिच्छतां सततदुःखमवश्यं
स्मरणीयमेतदमरं रविवाक्यम् ॥६१॥

## वङ्गविभावरी

वङ्गविभावर्यां २२० श्लोकेषु २१२ छन्दांसि कविना रचितानि। द्वेऽभिनवे छन्दसी ( नृत्यमती सौदामिनी ) च स्वकल्पनया कविना निर्मिते। भारतगाथाया-मिवात्रापि कविः अतीतगौरवस्य समुज्ज्वलं चित्रं रूपयित्वा वङ्गदेशं पुनरुज्जा-गरणायोद्बोधयति। वङ्गानां वर्तमानदुर्दशा तत्रत्यानां चारित्रिकमधःपतनं समाजगताश्च दोषा साधु समुद्घाटितानि। तथाहि—

वेश्यादीनां प्रतिष्ठा सततविरतिर्ज्ञानाध्ययनयोः
बह्वाशा स्वल्पतुष्टिर्गुणिजनगुणावज्ञयातिशयता।
योग्यायोग्याऽविचारः स्वगुणगरिमाऽनर्थप्रवचनम्
एते चान्ये च दोषा विकृतिजनका वङ्गप्रकृतिजाः ॥१२०॥

पारतन्त्र्यपाशनिगडितं वङ्गदेशमवलोक्य दूयते कवेर्हृदयम्। अत एवासौ तमुपदिशति—

स्वाराज्यं यदि वाञ्छसि ध्रुवं त्यक्त्वा तुच्छमनार्यसाधनम्।
तीक्ष्णाक्षं कुरु बुद्धिसारथिं, यावत् सत्यममर्त्यमाप्नुयाः ॥६४॥
अपसारय कल्पनवन्ध्यतां, कुरु बुद्धिमतीन्द्रियदर्शनाम्।
त्यज वाक्पटुतां रणचत्वरे, सहसा कृतमस्तीह साधनम् ॥६९॥

वङ्गदेशस्य पापकलङ्कक्षालनाय कविः शारदामप्याह्वयति—

अवतर शारदेऽद्य नववङ्गे कितव कलङ्कितश्च कुरु शुद्धम्।
प्रभवतु मूलमन्त्रधृतशक्तिः, स्रवतु पुनर्नवाश्रुजलधारा ॥८१॥

काव्ये ऽस्मिन् छन्दसां वैविध्येन सह भाषायाः सौष्ठवमपि चमत्करोति चेतः। क्वचिच्छब्दालङ्काराणां साधु प्रयोगः कविना विहितः। तद्यथा अन्त्यानुप्रासः—

प्रगतिपुरि यदि न विचरति चित्तं
कथमुपचितमनुभववित्तम्।
यदपि धनमिह पटयति मूढं
प्रथयति तदधनमपदि रूढम् ॥९०॥

डॉ० रामजी उपाध्यायमहाभागैः काव्यस्यास्य वैशिष्ट्यानीत्थं परिगणि-तानि—"वङ्गविभावरीति दीनेशचन्द्रस्यान्यतमं गीतिकाव्यं साधारणतो भारतीयां विशेषतश्च वङ्गीयां स्थितिं पर्यालोचयति। काव्येऽस्मिन्नूर्जस्वलभाषया कविः पुरातनगरिमाणं स्मारयन्निव वर्त्तमानदुःस्थितिं प्रक्षालयन्निव महिमशालिनीमा-यतिञ्च विचारयन्निव क्वचिद् विरलविरलाक्षरावलीं सन्दिहानः क्वचिद् गौडी-

मन्यत्र पाञ्चालीं वैदर्भी वा रीतिं विदधानः सकलं भारतमेव स्वभारत्या प्रतिनिधीकरोती ''ति ।

## छन्दःसन्दोहः

दत्तमहाभागः छन्दशास्त्रे नदीष्ण इत्यत्र नास्ति संशीतिलेशः । पुस्तकमिदं संस्कृतच्छन्दसां परिचयायोपयोगार्हं विद्यते । एतदधिकृत्य डॉ० रामजी उपाध्यायानां मतं समुल्लेखमर्हति—''छन्दसां परिचयाय लघ्वीयं रचना परमोपयोगिनो वर्तते । छन्दःशास्त्रमधिकृत्य नैतादृशी प्रगुणबन्धवती रचनाऽद्यावधि मम दृष्टिपथमायाता । लेखकस्य छन्दःशास्त्रे निष्कामाभियोगः साधुवादमर्हती''ति ।

## उपसंहारः

दत्तदीनेशचन्द्रः अभिनवभारतस्य राष्ट्रियकविष्वग्रगण्यः । कविरयं पुरातनगौरवगानरतोऽपि प्रगतिवादी वर्त्तमानस्यानुसन्धानसुधीश्च, समसामयिकचारित्र्यापकर्ष--नैतिकह्रासादिभिरसन्तुष्टोऽप्युज्ज्वलभविष्ये बद्धविश्वास आशावादविधायकश्च, शृङ्गारतरङ्गिण्यां मज्जनशीलोऽपि वीररसाभिव्यक्तिपटुरुत्साहप्रदीपकश्चास्ति । अस्य संस्कृतरचनासु गीतिकाव्यस्य भावसान्द्रता, राष्ट्रिया भावना, भावानुरूपा सरणिः, सरससरला ललितमधुरा अन्यत्र ओजोगुणविकासिनी जटिलकर्कशा पदावलिश्च विलसन्ति । एतादृशैरन्यैरपि काव्यप्रसूनैः कविवरोऽयं संस्कृत वाङ्मयदेवतामर्चयिष्यतीत्याशास्महे ।

— :०: —

# भाषाविवेचनम्

## डॉ० गजाननशास्त्री भुसलगाँवकरः

भाषा नाम हृद्गतभावव्यञ्जको ध्वनिविशेषः। प्राणिनो येन साधनेन आत्मनो मनोगतं सुखदुःखादिकम्प्रकाशयन्ति सैव भाषेति व्यपदिश्यते। यथा सृष्टेराद्यन्तशून्यता तथा भाषाया अपि।

नादमूला भाषेति प्राच्यशास्त्रविदां समयः। ब्रह्म नादश्चेत्यनर्थान्तरम्।

सच्चिदानन्दविभवात् सकलात् परमेश्वरात्।
आसीच्छक्तिस्ततो नादस्तस्माद् बिन्दुसमुद्भवः॥
नादो बिन्दुश्च बीजञ्च स एव त्रिविधो मतः।
भिद्यमानात् पराद् बिन्दोरुभयात्मा रवोऽभवत्॥
स रवः श्रुतिसम्पन्नः शब्दो ब्रह्माऽभवत् पुनः।

नादात्मनो ब्रह्मणो द्विविधं रूपमाम्नायते। व्यक्तमव्यक्तञ्च। प्रणवात्मको नादोऽव्यक्तः, वैखरीति प्रसिद्धा अर्थबोधनक्षमा वाक्यरूपा भाषा व्यक्ता। प्रणव-परब्रह्मणोरभेदं सिद्धान्तयन्ति शास्त्रकृतः। येन ध्वनिना आत्मनो हृद्गतो भावः परेभ्यः प्रत्याययितुं शक्यते सैव भाषेति निष्कर्षः।

इत्थं यथा मानवानां भवति भाषा, तथा पशुपक्ष्यादीनां कीटादीनामपि भाषा भवत्येव।

पाश्चात्यवैज्ञानिकास्तु उद्भिज्जानामपि भाषा भवतीति निरूपयन्ति। अशेषाणामेव प्राणिनामात्मनः सुखदुःखादिप्रकाशनोपयिकी नैसर्गिकी शक्तिरस्ति। यथातथा वा भवतु, यः कोऽपि वा प्रकारो भवतु, सर्वे स्वस्वबन्धूनां समीपे आत्मनो हृद्गतं भावं प्रकाशयन्त्येव। निखिलानां प्राणिनां स्वरयन्त्रस्यास्ति तथाविधा रचना, यया ते निखिला अपि आत्मनो भावं प्रकाशयितुं क्षमेरन्। वत्सस्य हम्बा-रवं निशम्य तमनुधावति तस्य स्नेहमयी जननी। कोटरस्थितानां मध्ये मध्ये स्खलच्छिरोधरामुन्नमय्य पित्रोरागमनं प्रतीक्षमाणानां शावकानां चूङ्कृतं निशम्य किं तदीयः पिता वा जननी वा स्थिरौ क्षणमपि स्थातुं पारयतः? न केवलं समानजातीयेष्वेव प्राणिनां भाषया हृद्गतभावप्रकाशनप्रयासो दृश्यते, किन्त्वेकजातीयो जन्तुरपरान् जन्तून् स्वीयं भावं प्रत्याययितुं स्वीयां भाषामेव प्रयुङ्क्ते। पशवोऽपि मानवान् प्रति शत्रुत्वं मित्रत्वं वात्मनो भाषयैव प्रकाशयन्ति किमुत

मानवाः । मदद्दप्तस्य केसरिणो गर्जनं निशम्य भवन्ति भीता वन्याः पशवः, तदा ते आत्मनो भीतिमपि शब्देनैव प्रकाशयन्ति । स्वजातीयस्य कस्यचिदानन्दध्वनिं श्रुत्वा तेऽपि आनन्दध्वनिना तं स्वागतीकर्तुं न विरमन्ति । निखिलेष्वपि प्राणिषु एतत् सर्वैरेवानिशं प्रत्यक्षीक्रियत एव । एतेन निखिलानां प्राणिनामस्ति भाषेति शक्यत एष सिद्धान्तो व्यवस्थापयितुम् । अतः सन्ति बह्व्यो भाषा इति फलितम् ।यावन्तः प्राणिनस्तावत्यो भाषा इति युक्तमुक्तं भवति । तासु एकैकासु भाषासु दृश्यन्ते बह्वो भेदाः । अन्यप्राणिनां भाषा मानवभाषातो भिन्ना एव । मानवभाषाऽपि पुनर्देशभेदात् सम्प्रदायभेदात् वृत्तिभेदाच्च भिद्यते बहुधा । परमन्यप्राणिभाषापेक्षया मानवीया भाषा निखिलैर्गुणैः पूर्णा इति सर्वैः प्रतिपद्यते । यथा मानवः स्वीयं भावं प्रकाशयितुं शक्नोति, न तथा अपरे प्राणिनः । ग्रीकदार्शनिकः पण्डितः अरिष्टतरो ( अरस्तू ) लिखति---"भाषयैव मानवो न्याय्यमन्याय्यञ्च सत्यञ्चार्थमपरान् प्रत्याययति । हिताऽहिते विवेक्तुं प्रभवति, अन्यप्राणिभ्यो बुद्ध्या ज्ञानेन चायं श्रेष्ठ इति मानव उच्चां भाषां व्यवहरति ।"

भाषा कथमुत्पन्नेति प्राच्याः पाश्चात्त्याश्च पण्डिता अत्र पृथक् पृथङ्मतं प्रकाशयन्ति ।

प्राच्या वदन्ति दैवीशक्तिसमुत्पन्ना भाषा । केचन मानवसृष्टा भाषेत्यात्मनो मतं व्यवस्थापयितुं प्रयतन्ते । ते इत्थमात्मनो मतमभिव्यञ्जयन्ति—सृष्ट्यनन्तरं निखिला वाक्शक्तिविरहिता आसन्, तदा ते अङ्गभङ्ग्या संकेतेन च मनोभावं प्रकाशयन्ति स्म, यदा अङ्गभङ्ग्या संकेतेन चात्मनो निखिलं भावं प्रकाशयितुं नाशकँस्तदा तेषां हृदि समुत्पन्नो मनोभावव्यञ्जनक्षमः कोऽपि ध्वनिर्नाम । तेनैव ध्वनिना यथाकथञ्चिन्मनोगतभावप्रकाशनाय तदा ते प्रायतन्त । तदानीं तैः प्रयुज्यमानाः शब्दाः परस्परमसम्बद्धा आसन् । तदा दुःखप्रकाशनाय "अः, ऊः," इत्यादयः शब्दाः प्रयुज्यन्ते स्म, सुखबोधकाश्च "वाः, अहा", इत्यादीनां प्रयोगः साधु गण्यते स्म । त एव शब्दाः साम्प्रतं निपाता अव्ययमिति च व्यपदिश्यन्ते । अनयाऽपि प्रणाल्या यदा ते साकल्येन स्वीयं मनोगतं भावं प्रकाशयितुं नाशकँस्तदा द्वौ त्रयो वा तथाविधाः शब्दा एकत्रीकृत्य भावव्यक्त्यै प्रयत्नमन्वतिष्ठन् । इत्थं क्रमशः पूर्तिमासादयन्ती रूपपरिष्कृतिमनुभवन्ती च काले मानवानां काऽपि मनोरमा भाषा समजायत । इत्यमेव पाश्चात्त्या भाषातत्त्वविदो भाषाया उत्पत्तिमुपवर्णयन्ति ।

किन्तु तद्देशीया एव तत्त्वविदो विद्वाँसो मतस्यास्य सत्यत्वमङ्गीकर्तुं न पारयन्ति । ते वदन्ति—ईश्वरसृष्टा भाषेति । तेनैव निखिलानां पदार्थानां

नामानि विहितानि। तेषां मते "आदम" (पाश्चात्यानां मनुः) एव प्रथमं भाषामधीतवान्। मतमिदमनुहरति प्राच्यभाषातत्त्वविदां मतमिति सुस्पष्टमेव। अन्ये तु अनयोः पक्षयोरसारतां प्रदर्शयन्तोऽन्यमेव भाषोत्पत्तिप्रकारमुपवर्णयन्ति। तेषामयमाशयः—"निसर्गत एव समुत्पन्नेयं मानवानां भाषा। नहि भाषोत्पत्तौ कदाचिदपि मानवप्रयत्नोऽपेक्षितोऽभवत्, नापीश्वरो मानवान् भाषामशिक्षयत्। मानवानां मनः शरीरयोर्गठनमनुसृत्य स्वत एव भाषा समुद्भवति। मनुष्यो यथा स्वत एव परिभ्रमणं शिक्षते, भुङ्क्ते, स्वपिति, तथैव भाषाऽपि स्वत एव तेषां वदनकुहराद्विनिःसरति। यथा मानवः शरीरावस्थाः परिवर्तयितुं न शक्नोति किन्तु स्वत एव बाल्यात्परं यौवनं प्रादुर्भवति, तथैव भाषाऽपि स्वभावत एव समुद्भवति।

किञ्च सामाजिकी अवस्था एव मानवानां हृदि भाषाङ्कुरं विकासयति। स्वजनानाम्पुर आत्मनो मनोगतभावप्रकाशनाय समुत्कण्ठितं भवति सर्वेषां चेतांसि। इदमेव भाषाया उत्पत्तौ प्रथमं कारणम्। आत्मा शरीरेण तथा सम्बद्धः, येन आत्मनि ईषदपि विकारे जाते शरीरे, स्वरतन्त्रे वाग्यन्त्रे च तत्प्रतिफलति। यथा परस्परसम्बद्धासु तन्त्रीसु एकाऽपि तन्त्री यदा हन्यते, तदा अपराः स्वतः क्वणन्त्यः कम्पन्ते। प्राह च यथा महामुनिः पाणिनिः—

"आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया।
मनःकायाग्निमाहन्ति स प्रेरयति मारुतम्॥
मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम्।"

आत्मसमुन्मेषान्मनसोऽभिघातवशाद् वाग्यन्त्राभिघातनिष्पन्नो ध्वनिर्भाषेति निष्कृष्टोऽर्थः।

पृथिव्या निखिला भाषाः साकल्येन गणयितुं कः शक्नोति। केवलं भारते या भाषा व्यवह्रियन्ते तासामपि संख्यानिर्धारणं प्रायो दुःशकम्। तथापि प्राधान्येन द्विधा विभज्यते भाषा, एकया लिख्यते, तस्या न बहवो भेदाः संभवन्ति, परं कथनभाषा प्रतियोजनानन्तरमेव नवनवां मूर्तिमासादयन्ती दुर्बोधतामधिगच्छति। अत्र तावद् बहूनि निमित्तानि, यानि कथनभाषां परिवर्तयन्ति। कालभेदात्, सामाजिकावस्थानभेदात्, कालात्ययाच्च भिद्यते भाषा। या भाषा भारते पुरा व्यवह्रियते स्म, न तस्याः साम्प्रतं व्यवहारो दृग्गोचरीभवति। न सा भाषा लुप्ता, परं सा साम्प्रतं परिवर्तितस्वरूपाऽपरैव काऽपि भाषा संवृत्ता। अद्य या भाषा व्यवह्रियते साऽपि रूपाऽन्यत्वमासाद्य विलयमेष्यति कालान्तरे इत्यत्रापि नास्ति कोऽपि सन्देहः। अतः कथनभाषाणामितिहासः साम्प्रतं लब्धुं न शक्यते,

कथं वा ताः पर्यालोच्येरन् ? अतो लेखनभाषास्वरूपनिरूणायैव किञ्चित् प्रयत्यते । तथाहि बृहद्धर्मपुराणे—

"अतो वाचः ससर्जादौ ब्रह्मरूपा न संशयः ।
अकारादिस्वराँश्चैव ककारादिहलाँस्तथा ॥
परस्परञ्चं मिलितान् वर्णनितान् समासृजत् ।
ततो भाषाश्च ससृजे पञ्चाशत् षट् च संख्यया ॥
तज्ज्ञानाय च बालानां तत्तद्व्याकरणानि च ।
पदज्ञानं च व्याकरणैरर्थज्ञानञ्च दर्शनैः ॥

आसां भाषाणां लक्षणोदाहरणे तत्रैव निरूपिते । प्राकृतलङ्केश्वरव्याकरणे व्याकरणनियमिता अष्टादश भाषाः समुल्लिखिता दृश्यन्ते । ताश्च यथा--- संस्कृत-प्राकृते, औदीची, महाराष्ट्री, मागधी, मिश्रा, अर्धमागधी, शाकभीरी, श्रावस्ती, द्राविडी, ओडिया, पञ्चाली, प्राच्या वाल्हीका, रन्तिका, दाक्षिणात्या, पैशाची, आवन्ती, शौरसेनी च । आसां लक्षणोदाहरणे लङ्केश्वरस्य प्राकृतव्याकरणे प्रदर्शिते ।

"ललितविस्तर" नामको निबन्धो बौद्धानां मान्यतमः । तत्र हि बुद्धदेव— सम्पृक्ता बह्व्यः कथाः समुपवर्णिताः । बुद्धदेवं शिक्षयितुमाचार्यविश्वामित्रो यावत् तत्समीपमागच्छतति, ततः प्रागेव तेन चतुःषष्टिवर्णमालाः शिक्षिताः । ललितविस्तरनामको ग्रन्थः खृष्टजन्मतः पूर्वमेव निर्मितोऽभवत् । खृष्टजन्मतः सहस्रद्वयवत्सरेभ्यः पूर्वं ग्रन्थोऽयं निर्मित इति पाश्चात्यपण्डितानां सिद्धान्तः । तस्य दशमेऽध्याये बुद्धदेवाधीता लिपय इत्थं प्रदर्शिताः ।

"ब्राह्मीं, खरोष्ट्रीं, पुष्करसारीम्, अङ्गलिपिम्, मागधलिपिम्,
माङ्गल्यलिपिं, मनुष्यलिपिं, अङ्गुलीयलिपिं, शकारलिपिम् ।

दक्षिणलिपिं, उग्रलिपिम्, अनुलोमलिपिम्, अर्धधनुलिपिम्, दरदलिपिं, खास्पलिपिं, चीनलिपिं, हूणलिपिं, मध्याक्षाविस्तरलिपिं, पुष्पलिपिं, नागलिपिं, यक्षलिपिं, किन्नरलिपिं, महोरगलिपिं, मसुरलिपिं, गरुडलिपिं, मृगचक्रलिपिं, वायुमरुल्लिपिं, भौमदेवलिपिं, उत्तरकुरुद्वीपलिपिम्, अपरगौड़ादिलिपिं, पूर्वविदेहलिपिं, उत्क्षेपलिपिं, निक्षेपलिपिं, विक्षेपलिपिं, प्रक्षेपलिपिं, सागरलिपिं, वज्रलिपिं, लेखप्रतिलेखलिपिं, अनुद्रुतलिपिम्, शान्तावर्तलिपिं, गणनावर्तलिपिम्, उत्क्षेपावर्तलिपिम्, निक्षेपावर्तलिपिं, पादलिखितलिपिं, द्विरुत्तरपदसन्धिलिपिम्, यावद्दशोत्तरपत्रसन्धिलिपिं, अध्याहारिणीलिपिम्, सर्वरुतसंग्रहणीलिपिं, विद्यानुलोमलिपिं, विमिश्रितलिपिम्, ऋषितपस्तप्तां रोचमानन्धरणीप्रेक्षणलिपिं, सर्वोषधिनिष्यन्दां,

सर्वसारसंग्रहणीम् आसां भो उपाध्याय ! चतुःषष्टिलिपीनां कतमां लिपिं मां त्वं शिक्षयिष्यसि" ? एतेन लिपिभेदेन भाषाणां भेदा विज्ञातुं शक्यन्ते ।

जैनानां प्रज्ञापनासूत्रे समवायसूत्रे च अष्टादशविधा लिपयः समुपवर्णिताः । ता यथा--- "वम्भी यवनालीया, दासडडिया, खरोष्ट्रिया, पुक्खरसरिया, पहाडाइया, उच्चतुरिया, अक्षरप्रतिथया, भोगवपत्ता, देषणतिया, निराहइया, अङ्कलिपि, गन्धव्वलिपि, आदस्सलिपि, माहेसरलिवि, दामिलिवि, पोलिंदिलिवि ।"( समवायसूत्रम् )

"बम्भी, जवनालीया, दासपुरीया, खरोट्ठी, पुक्खसारिया, भोगवइया, उप अन्तरकारिया, अक्षरपुहिया, वेन्नरणिया, निहइया, अङ्कलिपिः, गणितलिपि, गन्धर्वलिपि, आदस्सलिवि, माहेसरी, दामिली, पोलिन्दा ।—( प्रज्ञापनासूत्रम् ) ।

अत्र प्रयुक्तो वम्भीशब्दो ब्राह्मीं, दामिलशब्दश्च द्राविडीमवगमयति । साम्प्रतमासां लिपीनां बुद्धदेवनिर्दिष्टानाञ्च कीदृशी अवस्थेति निर्णयौपयिकं न कमपि उपायमुत्पश्यामः ।

नान्दीसूत्रं नाम जैनानामपरो ग्रन्थस्तत्र हि षट्त्रिंशल्लिपयः समुपवर्णिता । तासां नामानि यथा—हंसलिपि, यक्षलिपि, राक्षसीलिपि, उड्लिपि, यावनीलिपि, तुरक्कीलिपि, कीरीलिपि, द्राविडीलिपि, सैन्धवीलिपि, मालवीलिपि, नाडलिपि, नागरीलिपि, पारसीलिपि, लाटीलिपि, अनमित्रलिपि, चाणक्कीलिपि, मौलदेवीलिपि, लाटी, चौडी, डाहली, कामडी गुज्जरी, सौरठी, मरहठी कोंङ्कणी, खुरासानी, मागधी, सैहली, हाडी, हाम्बीरी, परतिरी, मसी, मालवी, महायोधी ।

इत्थमपरेष्वपि ग्रंथेषु बहुविधा भाषा उपवर्णिता दृश्यन्ते । दाक्षिणात्ये संस्कृतलिखितपुस्तकेभ्यः षड्भाषाः सप्तविंशतिरुपभाषाश्चासन्नित्यवसीयते ।

यथा प्राकृतचन्द्रिकायाम्---

"महाराष्ट्री तथावन्ती शौरसेन्यर्धमागधी ।
बाल्हीकी मागधी चैव षडेता दाक्षिणात्यजाः ॥
व्राचण्डो लाटवैदर्भावुपनागरनागरौ ।
बर्बरावन्त्यपाञ्चालटाक्कमालवकैकयाः ॥
गौडोड्रदेवपाश्चात्यपाण्डयकौन्तलसिंहलाः ।
कालिङ्ग्यप्राच्यकर्णाटाः काञ्च्यद्राविडगौर्जराः ॥
अभीरो मध्यदेशीयः सूक्ष्मभेदव्यवस्थिताः ।
सप्तविंशत्यपभ्रंशा बैडालादिप्रभेदतः ॥

भारतीया भाषा कथमुत्पन्ना, कथं वा तस्या भेदाः समभवन्नित्ययं विषयो न मतद्वैधरतिः। अत्र हि बहूनां भाषातत्त्वविदां विविधानि मतानि श्रूयते। तत्र हि संस्कृतभाषैव जननी विविधानां भाषाणां इति प्रधानं मतम्। भाषा-तत्त्वमालोचयद्भिरेतद्बलेन प्रतिपाद्यते यन्निखिला भाषाः संस्कृतभाषात एव समुत्पन्ना इति। संस्कृतनाम्ना परिचिता बह्व्य भाषा दृश्यन्ते। वैदिकसंस्कृतम् ब्राह्मणारण्यकसंस्कृतम्, उपनिषत्संस्कृतम्, सूत्रसंस्कृतम्, पुराणोपपुराणसंस्कृतम् इत्यादयो बहवो भेदाः केवलं संस्कृते एव दृश्यन्ते। साम्प्रतं यया सरण्या भाषा-भेदो व्यवस्थाप्यते, तया संस्कृतभाषया एकैकः स्तरो भिन्नभाषात्वेन निर्देष्टुं शक्यः। मिस्टरमेक्समूलरमहोदयो भाषाविज्ञाननामके पुस्तके लिखति—संस्कृतभाषात एव प्राकृतभाषाः समुत्पन्नाः, प्राकृतेभ्यश्चापरा इति। यूरोपीय-भाषाणामुत्पत्तितत्त्वं सम्यग् विविच्य तदुपमानेन भारतीयभाषाणामपि उत्पत्ति-तत्त्वम्प्रादर्शयन्मिस्टरमेक्मूलरः। स वदति स्त्रियो लैटिनभाषाभवगन्तुं न शक्नुवन्ति। इटलीप्रदेशे अन्यभाषा आत्मलाभमधिगता। सैव तत्र सर्वेषां साधारणी भाषाऽभवत्। इयमभिनवा भाषा सर्वेषां सुबोधा इति ग्रन्थरचनादिकमपि तयैव भाषया भवितुमारभे। इटालीयभाषोपमिता भारतीया प्राकृतभाषेति वक्तुं शक्यते। साहित्यिकभाषास्वरूपासादनतः पूर्वं इटालीयभाषारूपसममेव, भारते प्राकृतभाषाया रूपमसीदिति तयोरनुशीलनेन सम्यग् विज्ञायते। नाटक-प्रकरणादिषु प्रथमं स्थानमासादयति स्म प्राकृतभाषा। नाटके राजामात्यपुरोहितादयश्च संस्कृतभाषामेवाश्रयन्ति। स्त्रियश्च प्राकृतभाषां व्यवहरन्ति, अन्ये भृत्यादयश्च प्राकृतभाषयैव कथोदकथनादिकं कुर्वन्ति। सैव भाषा काले संस्कृतभाषास्थान-मासादितवती। पुनस्ततोऽपि बह्व्यो भाषाः समभवन् याः साम्प्रतमपि भारतीय-प्रान्तेषु विकृतरूपा व्यवह्रियन्ते। एकस्या अपि भाषाया भवति विविधः स्वभावः, कठिनः कोमलश्च। एका व्यंजनरचितविग्रहा, अपरा स्वरप्रचुरा। एका व्याकरण-नियमनियन्त्रिता, अपरा समुपेक्षितव्याकरणनियमा केवलमर्थबोधनौपयिकी। ग्रीकजर्मनप्रभृतीनां भाषाणां विभागा अत्रोदाहर्तुं शक्यन्ते। ग्रीकभाषाया द्वौ विभागौ आयलिक आपोनिक इति च। अनयोरपि पुनर्द्वौ द्वौ विभागौ भवतः: जर्मनभाषाया अपि द्वौ विभागौ, उच्चयमो नीचश्च। भारतेऽपि भाषायाः संस्कृत-भाषा प्राकृतभाषा चेति द्वौ विभागौ स्तः। प्रथमाः आपलिकउच्चजर्मनसंस्कृताद्याः भाषाः कठिनाः। इमाः पितृपितामहादीनां पुरुषाणां भाषाः। द्वितीयास्तु कोमलाः, अतस्ता मातृभाषाः। संस्कृतात् प्राकृतभाषा, प्राकृताच्च भारतीया विविधा भाषाः समभवन्निति भारतीयभाषाविषयकं प्रधानं मतम्।

केचन प्रकृतेर्मूलादुत्पन्नम्प्राकृतम् । संस्काराज्जातं संस्कृतमिति मुधैव भ्राम्यन्ति । इयं दैवी वाक् संस्कारादेवोत्पन्नेति नास्ति सन्देहः परं नैतस्या मूलं नाटकादिषु विलोक्यमानं प्राकृतं नाम । वैदिकभाषातः संस्कृत्य समुत्पन्नेयमस्माकं दैवी वाक् । 'प्राकृतस्तु पृथग्जनः' इत्यभियुक्तोक्त्या प्राकृतानां साधारणानां भाषैव प्राकृतभाषेत्युच्यते । अतः संस्कृतभाषात एव प्राकृतभाषा समुत्पन्नेति मतं ज्याय इत्यत्र नास्ति संशीतिः ।

:*:

# कुमारसम्भव-नायिकाविमर्शः

## डॉ० कृष्णा दाश

अथ कुमारसंभवनायिकायाः विभावरूपं प्रथमं विचार्यते।

आलम्बनविभावरूपे सा अनूढोत्तमा, परकीया, मुग्धा, विरहोत्कण्ठिता वर्तते। अलंकारशास्त्रेषु पार्वत्याः इमानि सर्वाणि लक्षणानि उदाहृतानि सन्ति। सा 'लज्जावती' निरूप्यते। लीलाकमलपत्राणि गणयन्त्यां तस्यां लज्जायाः अपूर्वाभिव्यंजना परिलक्ष्यते[1]। सा 'पितृपालितेति' संज्ञामपि लभते। अतएव सा कथयति—"दाता मे भूभृतां नाथः"। सैव नायिका यदा मन्दाकिन्याः सैकतवेदिकायाम् क्रीडति[2] तदा आलंकारिकाः तस्याम् 'सखीकेलिविश्रब्धा'–नायिकायाः लक्षणं निरूपयन्ति। दशरूपककारः[3] "व्याहृता प्रतिवचो न संदधे गन्तुमैच्छदवलम्बितांशुका" इत्यादि श्लोके; सरस्वतीकण्ठाभरणकारः[4] च "तां नारदः कामचरः······समादिदेशैकवधूं भवित्री······" इत्यादि श्लोके पार्वतीं क्रमेण 'रतवामा' 'महाभाग्यशालिनी'—नामधेयनायिकापदे प्रतिष्ठितां कृतवन्तौ। पार्वती न केवलं आलम्बनस्य अपितु उद्दीपनस्यापि स्वरूपं धारयति। सम्पूर्णमहाकाव्ये परिव्याप्तं पार्वतीगुणपार्वतीचेष्टा-पार्वत्यलंकाराणां व्यापकं वर्णनं उद्दीपनमेवास्ति।

शिंगभूपालमहाभागाः नायिकागुणान्तर्गतानि यौवन - सौकुमार्य- लावण्य-मार्दवादीनि यानि लक्षणानि अगणयन् तानि कालिदासस्य नायिकायां विद्यन्ते[5]। यदि "चपलनेत्रा पार्वती' 'प्रथमयौवनशालिनी' भवति तर्हि कालान्तरे "स्तनद्वयं प्रवृद्धम्" "चरणौ सरागौ", "नतं नाभिरन्ध्रं", नागेन्द्रहस्तोरुता", "रति-दुःखशीलता"[6] इमानि सर्वाणि 'द्वितीययौवनशालिन्याः' पार्वत्याः लक्षणानि

---

१. "एवंवादिनि देवर्षौ······"कुमारसंभव ६।८४

२. कु० १।२९

३. दशकरूपक, प्रकाश २

४. सरस्वतीकण्ठाभरण, परिच्छेद ५

५. लावण्य = "पुपोष लावण्यमयान्···"कु० १।२५
   सौदर्न्य = "सौन्दर्यंदिदृक्षयेव···" कु० १।३२
   सौकुमार्य = "शिरीषपुष्पाऽधिकसौकुमार्यौ···" कु० १।४१

भवन्ति । पार्वत्या धृतानि वस्त्रभूषणमाल्यानुलेपनानि अपि भोजेन[1] विभाव-गतोद्दीपनरूपे स्वीक्रियन्ते । कविः स्वनायिकां त्रिभिः वस्त्रैः व्यभूषयत् । प्रथमं सा "तरुणार्करागं" वस्त्रं धारयित्वा दृश्यपटे आगच्छति । प्राग्विवाहकाले सा कौशेयवस्त्रं धारयति तथा विवाहमण्डपे हंसचिह्नांकिते क्षौमवधूदुकूले। आवरणानन्तरम् आभरणं प्रति कविना दृष्टि दीयते । तृतीयसर्गे पार्वती "वसन्त-पुष्पाभरणं वहन्ती" विद्यते; सप्तमसर्गे तु सैव मणिमुक्ताखचिता- राजकन्येव प्रविशति ।

विभावस्य पश्चाद्वर्ती अनुभावः अस्ति । शारदातनयशिंगभूपालौ चित्त-गात्रवाक्बुद्धयः इति अनुभावस्य चतुरो भेदान् कृतवन्तौ । पार्वतीशरीरे ते सर्वे येन केनापि प्रकारेण विद्यन्ते । प्रथमं तु मनोगतानुभावः विश्लेष्यते । अस्य भाव-हाव-हेला शोभादि भेदाः वर्तन्ते । पार्वती तु मानसालंकाराणां प्रतिमूर्ति-स्वरूपा अस्ति—

"विवृण्वती शैलसुताऽपि भावमंगैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥"

अहो ! स्वचारुमुखेन अल्पसाचीकृता पार्वती न जाने कीदृशीमंगभंगिमां प्रकटि-तवती । साहित्यदर्पणकारः[2] अस्मिन् श्लोके 'हाव'-नामकमनुभावं मन्यते। "तां प्राङ्मुखी……" इत्यादिश्लोकः दशरूपकग्रन्थे[3] 'शोभायाः उदाहरणं भवति । पार्वत्याः 'कान्तिः' "कान्तिमतीत्य तस्थौ……" आदि श्लोके शब्दतः व्यक्ताऽस्ति । यदा मुग्धा पार्वती स्वगुरुशिवसमीपे रतिकलानिपुणा जाता तदा तस्याम् प्रागल्भ्यस्य सन्निवेशो भवति । अतएव "शिष्यतां निधुवनो-पदेशिन……इत्यादि पद्ये रसार्णवसुधाकरः 'प्रागल्भ्य' नाम्नः अनुभावस्य निर्देशनाम् अकरोत् । पार्वती गात्रानुभावानामपि अभिव्यञ्जनां करोति । लीला-विलास-विच्छित्ति-विभ्रम-किलकिंचित-मोट्टायित--कुट्टमित-बिब्बोक-ललित-विहृते--

---

१. "स्तनद्वयं…"कु० १।४०
"चरणौ रागं…" कु० १।३३
"नतनाभिरध्रं…" कु० १।३८
"नागेन्द्रहस्ता…" कु० १।३६
२. सरस्वतीकण्ठाभरणं श्रृंगारप्रकाशश्च ( १६ अध्याय )
३. साहित्यदर्पण ३।९४
४. दशरूपक, प्रकाशः २

एतानि सर्वाणि तस्याम् विद्यन्ते। विभिन्नस्थले[1] इमे अनुभावाः स्फुटाः भवन्ति। "कर्णार्पितो लोध्रकषायरुक्षे......" इत्यादि पद्ये दशरूपकं तथा सरस्वतीकण्ठाभरणरसार्णवसुधाकरौ च "विविभुज्य दशानच्छदं......" इत्यादि पद्ये क्रमेण विच्छित्ति--विब्बोकयोः विशेष दिग्दर्शनं कुर्वन्ति। सख्यः कन्यायाः विवाहश्रृंगारं कुर्वन्ति नर्मालापमपि च कुर्वन्ति। तारः धृष्टाः सखीः कन्या मुखेन तु किंचिदपि नाकथयत् केवलं माल्येन प्राहरत्। इदं स्थलं सरस्वतीकण्ठाभरणे 'विहृत' इति आख्यां लभते।

अधुना वयं वागनुभावं अन्विष्यामः। नाट्यकारः कालिदासः स्वेषु नाटकेषु एव वागनुभावानां पूर्णप्रतिष्ठां कृतवान्। परन्तु महाकाव्यनायिकायां पार्वत्यामपि। "क्व नीलकण्ठ!" इत्यादि तस्या रोदनं साहित्यदर्पणः 'प्रलाप' नामकं वागनुभावं मन्यते। सन्देशप्रेषणस्य अवसरमपि नायिका एकत्रैव स्थले लभते—गौरी सन्दिदेश मिथः सखीम्"। अयं 'सन्देश' नामा वागनुभावः। तत्र तु वरवध्वोशयनकक्षे कैतवेन सुप्तस्य पत्युः मुखदर्शनचेष्टायां गौरीः हृदयस्य अपारानुरागः निवेद्यते। रसार्णवसुधाकरे अयं एव 'चेष्टानिवेदितनर्म'[2] नाम बुद्धानुभावः।

रसनिष्पत्तिक्षेत्रे विभावानुभावस्यानन्तरं संचारिभावस्य स्थानं वर्तते। कुमारसंभवस्य नायिकायां श्रृंगाररसोचितभावाः इतस्ततः संचरन्ति। "लीलाकमलपत्राणि गणयामास पार्वती" अदः पद्यं तु लज्जां-हर्ष-अवहित्थानां संचारिभावानां सन्धिरूपे अतीव जनप्रियः[3] अस्ति। "त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसा व्यबुध्यत" इत्यादि स्थले नायिकायाः 'बोध' नाम संचारी भावः सूचितः। पंचमसर्गे प्रकटीकृता तपसः ध्रुवेच्छा यदि तस्या 'उग्रतां' प्रकटयति तर्हि बटुं प्रति प्रकाशिताः तस्याः भावाः (भ्रूलताविकुंचनं, अधरकम्पनम् आदयः) 'अमर्ष' इति उच्यन्ते।

१. लीला = कु० १।३४
विलास = कु० ३।६२
विभ्रम = कु० ५।५७
किलकिंचित् = कु० ५।८५
मोट्टायित = कु० ३।६८
कुट्टमित = कु० ८।१४
ललित = कु० ७।५५
२. रसार्णवसुधाकर = १।७६
३. सरस्वती० ५।१५२
साहित्यदर्पण---३
रसार्णवसुधाकर---२

# शोभाकरमित्रस्य नवीना अलङ्काराः

श्रीविहारीलालशर्मा

भामहादारभ्य जयदेवपर्यन्तं सर्वैरप्याचार्यैः अधिकतरं पूर्वनिर्दिष्टाः एव अलंकाराः व्याख्याताः परं शोभाकरमित्रेण [ई०स ०१२००] अलंकाररत्नाकरे पूर्वैरुद्भावितानां सर्वेषामपि अलंकाराणां व्याख्याः विधायापि बहवो नवीनाः महत्त्वपूर्णाश्चालंकाराः समुपहृताः। ते सर्वेऽपि लक्षणोदाहरणसहिताः उपस्थाप्यन्तेऽधस्तात्।

**अचिन्त्यम्**—'अविलक्षणाद् विलक्षणकार्योत्पत्तिश्चाचिन्त्यम्'

सामान्यस्वभावात् कारणात् तद्भिन्नस्वभावकार्योत्पत्तिः अचिन्त्यालंकारः। यथा :—

चिरसंस्थितोऽपि विगलति मानश्चिरविगलितोऽपि संघटते।
विपरीत-रसं करोति मधुमदः कामिनीजने।

अत्रैकरूपान्मधुमदात्कारणच्चिरस्थितस्य निवृत्तिश्चिरनिवृतस्य प्रवृत्तिरिति विरुद्धकार्योत्पत्तिः।

**अनादरः**—'अप्राप्तार्थं तत्तुल्यानादरोऽनादरः'। एकस्मिन् वस्तुनि प्राप्तेऽपि तत्तुल्याप्राप्तवस्त्वन्तरप्राप्त्यर्थं तस्यानादरः अनादरोऽलंकारः। यथा

मृगनाभिश्यामलेनेति विचारिते किं मुखं ललाटेन ?
इच्छामीदं त्रिनयनप्रणामकिणकलुषितं वोढुम्।

अत्र मृगनाभिश्यामलेन ललाटेन न मुखमपि तु किणकालकलुषितं मुखमित्य-वगमादुक्तनिमित्तस्तुल्यानादरः।

**आदरः**—'त्यक्तस्वीकार आदरः' त्यक्तस्य पदार्थस्य पुनः पुनरुपादानम् आदर इत्युच्यते। यथा

सम्पत्तिकापि खाद्यते पर्णच्छेदेषु पुत्रि को दोषः,
निजपतिनापि रम्यते परपुरुषविवर्जिते ग्रामे।

अत्र पर्णपरपुरुषाद्यवाप्तौ स सम्पत्तिकानिजपत्योस्त्यक्तयोरपि पुनः पर्णा- द्यलाभे स्वीकारः।

**अनुकृतिः**---'हेत्वन्तरादन्यस्यापि तथात्वमनुकृतिः'। केनचिन्निमितेन कस्मिश्चिद्-

वस्तुनि कस्यापि रूपस्योदये निमित्तान्तरेण अन्यस्यापि ताद्रूप्यमनुकृतिः । यथा

शरश्रेणीपातैस्तत्र विगलिते तत्र वपुषि
प्रवेशः शस्त्राणां कथमपि भटानां समभवत्
सुरस्त्रीनिर्मुक्तासमकुसुमधूलीहितदृश—
स्तवाप्यासीत्तेषु प्रहरणविलम्बः क्षणमपि ।

अत्र भटानां शस्त्रप्रवेशाभावात् प्रतियोद्धुश्च कुसुमरजसा व्याकुलितत्वात् प्रहरणविलम्बः इति द्वयोर्निमित्तभेदेनैकरूपत्वम् ।

**अवरोहः**---'विपर्ययोऽवरोहः' । रूपेण धर्मेण उत्तरस्यैकस्य बहूनां वापचयो वर्धमानक्रविपरीतोऽवरोहः । यथा

तपनाच्छशी शशिनोज्वलनो ज्वलनाद्दीपो लघुकः
ततोऽपि त्वं खद्योत तथापि रे ! हन्त विस्फुरसि ?

अत्रानेकेषां शशिप्रभृतीनां स्वरूपलाघवक्रमः ।

**अभेदः**--'नियतधर्महानावारोप्यमाणस्यातिसाम्यमभेदः' । आरोप्यमाणस्य नियतस्य धर्मस्य निषेधे सति परिशिष्टमस्तधर्मान्तरसद्भावाभ्यनुज्ञाने विषयस्य तेन सहातिसाम्यप्रतिपादनमभेदालंकारः । यथा--

वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः
भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ॥

अत्रौषधयः सुरतप्रदीपाः इति श्रौतं सामानाधिकरण्यम् । तैलपूरणमात्रविरहादोषधीप्रदीपानां प्रदीपान्तराद् भेद इत्युक्तेऽर्थात् सर्वतोऽभेद इत्यवगम्यते ।

**अशक्यम्**---'प्रतिबन्धकादेर्विधानासामर्थ्यमशक्यम्' कार्यस्य जननप्रतिबन्धकसम्भवदन्यतो वा निमित्ताद्यत्कर्तुकशक्यत्वं तदशक्यमलंकारः । यथा

क्वचिज् झिल्लीनादः क्वचिदतुलकाकोलकलहः
क्वचित्कंकारावः क्वचिदपि कपीनां कलकलः
क्वचिद् घोरः फेरुध्वनिरयमहो दैवघटनात्
कथंकारं तारं क्वणतु चकितः कोकिलयुवा ?

अत्र झिल्लीनादादीनां कर्णकटुत्वेन प्रतिकूलानामुद्भूतत्वात् कोकिलस्य क्वणनासामर्थ्यम् ।

**उदाहरणम्**---"सामान्योद्दिष्टानामेकस्य निदर्शनमुदाहरणम्" सामान्येनाभिहितानामेकस्यैवाद्युपादानमुखेन प्रतीतिविशदीकरणार्थं निदर्शनमुदाहरणमलंकारः । यथा

अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम्
एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः करणेष्विवांकः ।

इत्यत्र हिककर्तृकसौभाग्याविलोपनरूपस्य विशेषस्य गुणसन्निपाते दोषनिमज्जनं सामान्येन समर्थकतयाभिहितम् । तस्य चेन्दोः किरणेष्विवांकः इति तदेकदेशभूतो विशेष उदाहरणीकृतः ।

**उद्भेदः**---'निगूढस्य प्रतिभेद उद्भेदः' निगूढस्य प्रकटीभावः उद्भेदः इत्युच्यते । यथा--

सूर्यच्छलेन पुत्रक कस्य त्वमंजलिं प्रणमयसि,
हासकटाक्षमिश्रा न भवन्ति देवानां जयोद्गाराः ।

अत्र वातायनस्थितां प्रच्छन्नकामुकीं प्रति रत्यर्थं बद्धांजलित्वं प्रकटीकृतं कस्यचित् ।

**उद्रकः**--'सजातीयविजातीभ्यां तुच्छत्वमुद्रेकः' यत्र दोषगुणयोः सजातीयविजातीयापेक्षया तुच्छत्वं स उद्रेकः । यथा

उद्गच्छतु दिननाथोऽस्तमेतु शशी किमस्माकं छिन्नमेतेन ।
एतत्पुनर्मम दुःखं यत्प्राप्ता श्रीः पङ्कजैः ।

इत्यादावुदयास्तमयरूपयोर्द्वयोरपि गुणदोषयोः पङ्कजदोषकर्तृकतया दोषात्मिकायाः श्रीप्राप्त्याः तिरोहितत्वात्तुच्छत्वम् ।

**क्रियातिपत्तिः**—यद्यर्थोक्तावसम्भाव्यमानस्य क्रियातिपत्तिः' असम्भाव्यमानस्यार्थस्य कल्पनं क्रियातिपत्तिः, यदि शब्दार्थस्य यद्यादिभिरुक्तिश्चेत्स्यात् । यथा—

पुष्पं प्रवालोपहितं यदि स्यात् मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्याद्विशदस्य तस्याः ताम्रोष्ठपर्यस्तरुचः स्मितस्य ॥

**तन्त्रम्**-- 'नानाफलप्रयुक्तः प्रयत्नस्तन्त्रम्' । अनेकस्य फलस्य तुल्यतया साध्यस्य यत्र प्रयत्नप्रयोज्यत्वं तत्तन्त्रम् । यथा

आनन्दनं मम लोचनानां सुखनिर्वृत्तिरपि हृदयस्य
अङ्गानाममृतवर्षो भविष्यति मम वल्लभे दृष्टे ।

अत्र वल्लभदर्शनाद्विलोचनादिभिरविषयस्यानन्दादे युगपदुत्पत्तिः ।

**तुल्यम्**—'निवृतावन्योदयस्तुल्यम्' । एकस्य गुणस्य दोषस्य वा निवृत्तौ अन्यस्य गुणस्य दोषस्य वा उदयस्तुल्यम् यथाः–

अर्घन्तु शिशिरसमये कामिनां घनालिङ्गनसुखर्धयः ।
जलकेलिः पुनः प्रकटस्तनजघनस्स गत एव ।

अत्र घनालिंगनस्य गुणस्योत्पत्तौ जलकेलिरूपगुणान्तरनिवृत्तिः ।

**नियमः**—'अन्यनिषेधार्थोऽपि विधिर्नियमः' । अन्यनिषेधाय पर्यवसितो विधिर्नियम इत्युच्यते । यथाः—

किं भूषणं सुदृढमत्र यशो न रत्नम्
किं कार्यमार्यचरितं सुकृतं न दोषः
किं चक्षुरप्रतिहतं धिषणा न नेत्रं
जानाति कस्त्वदपरः सदसद्विवेकम् ।

अत्र कीर्त्यादिः सुदृढभूषणत्वादिकं नियमेनाज्ञातं ज्ञापितं सदन्यनिषेधाय पर्यवस्यतीति यस्यापि निषेधस्तस्यापि उपादानम्

**निश्चयः**—विहितस्याशङ्कितस्य वा विशेषागमाय निषेधो निश्चयः । विहितस्यार्थस्य केनचिन्निमित्तेन अयुक्ततया प्रतीतस्य निषेधे क्रियमाणे कस्याचिद विशेषस्य प्रतिपादनं निश्चयः । यथा—

सतां कदर्थनां व्यर्थं सखे दुर्जन मा कृथाः
अथवा नोपदेशेन माधुर्यं भजते विषम् ।

अत्र कदर्थनां मा कृथाः इति नञर्थस्य विहितस्यापि 'अथवा' इत्यनेन तत्स्वभावत्वेन दुर्जनस्य निवृत्त्यशक्तत्वावगमाय निषेधः कृतः ।

**परभागः**—'अनुभूतस्यार्थान्तरोपलब्धौ परभागः' स्वरूपमात्रेणावगतस्य वस्तुनो वस्त्वन्तरोपलब्धिसमये तस्माद्भेदप्रतीतिः परभागः ।

अन्यमहिला - प्रसङ्गं प्रार्थये देव कुरुष्वास्माकं दयितस्य
पुरुषाः एकत्र रता न दलु गुणदोषान् विजानन्ति ।

अत्रान्यमहिलाप्रसङ्गेन दयितेन निजायाः वल्लभायाः महत्त्वं ज्ञायते इत्यर्थादवगम्यते ।

**प्रतिप्रसवः**—'प्रत्यापत्तिः प्रतिप्रसवः' । निवृत्तस्यार्थस्य पुनः प्राप्तिः प्रतिप्रसवः । यथाः---

विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्या परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः ॥

अत्र निजायाः रुचेः अरुणकान्त्यन्तरितत्वेन निवृत्तायाः पुनः प्राप्तिः ।

**प्रतिभा**--'सम्भाव्यमानस्य प्रतिभा' प्रमाणान्तरेणानवगतस्य तत्तत्प्रस्तावादिकारण-वशात् सम्भाव्यमानस्यार्थस्य कविना प्रतिभाख्येन चक्षुषा परिकल्पनं प्रतिभा । यथा

गतं तिरश्चीमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः
पतत्यधो धाम विसारि सर्वतः किमेतदित्याकुलमीक्षितं जनैः ।

अत्र सामान्येन दृष्टस्य वस्तुन एवंविधा विकल्पाः सम्भवन्ति इति मानान्तरा-नवगतस्य सम्भावनया कल्पनम् ।

**प्रतिमा**---'अन्यधर्मयोगादार्थमौपम्यं प्रतिमा । प्रसिद्धगुणार्थान्तरसम्बन्धिभिः कार्यकारित्वादिभिर्धर्मैः सम्बन्धोपनिबन्धात् सामर्थ्यलभ्यमौपम्यं प्रकृतस्या-र्थान्तरप्रतिमया प्रतीयमानमयमलंकारः । यथा

अङ्गे पुलकमधरं सवेपितं जल्पितं ससीत्कारम्
सर्वं शिशिरेण कृतं यत्कर्तव्यं प्रियतमेन ।

अत्र पुलकोद्गमादिवल्लभकार्यं शिशिरेण कृतमिति तस्य वल्लभतुल्यता प्रतीतेरर्थविसेयौपम्या प्रतिमा ।

**प्रयादेशः**---'स्थितयान्यथापत्तिः प्रत्यादेशः' । स्थितेः रूपान्तरणं प्रत्यादेशः । यथा

अंगानि प्रतनुकानि किमपि गुरु करोति मधुमदविलासः ।
हृदयानि पुनर्लघुकरोति मानगुरुकाण्यपि प्रियाणाम् ।।

अत्राङ्गलघुत्वस्य मानगुरुत्वस्य च प्रवृत्तस्य मधुमदविलासनिमित्तका गौरवलाघवापादानप्रतिपादनद्वारा निवृत्तिरभिहिता ।

**प्रत्यूहः**---'प्राप्तस्य प्रतिबन्धः प्रत्यूहः' कुत्रचिन्निमित्तात्प्राप्तस्य हेत्वन्तरात् प्रतिबन्धः स प्रत्यूहः । यथाः—

दाहप्रसङ्गोऽलिकानलेन प्राप्तो हरस्य शशिनो यः
सुरसरित्सलिलभरेण सौम्य विपाटितो झटिति ।

अत्र दाहप्रवृत्तेः गंगाजलसंसर्गान्निवृत्तिः ।

**प्रसङ्गः**—'प्रसङ्गादन्यार्थः प्रसङ्गः' । यत्र प्राधान्येन केनचित् फलेन कस्यचित्प्रयु-क्तस्य प्रयत्नस्यार्थान्तर कार्यकारिता प्रसङ्गाद्भवति स प्रसङ्गः । यथाः

अङ्गेषु सान्द्रहरिचन्दनपङ्कचर्चा
मार्णालहारवलयादि च पान्थं बध्नाः ।

योऽभूद्दिवा पतिवियोगविषाददम्भो
ज्योत्स्नाभिसार परिकर्म स नक्तमासीत् ।

अत्र वियोगदुःखनाटनाय दिवा प्रयुक्तस्य चन्दनचर्चादेः सर्वमभिसारिक-कर्मत्वं प्रसङ्गाज्जातम् ।

**वर्धमानकम्**---'रूपधर्माभ्यामाधिक्यं वर्धमानकम्'। एकस्य वस्तुनो बहूनां वा स्वरूपेण धर्मेण वोपचयः क्रमेण निबध्यते तद्वर्धमानकम्। यथा--

अतसीकुसुमप्रभं मुखे तदनु त्वत्कचमेचकद्युति
अथ बालतमालमांसलं प्रसृतं सम्प्रति सर्वतस्तमः ।

अत्र तमसः क्रमेण निबिडताख्यधर्मोपचयो निबद्धः ।

**विकल्पाभासः**---'विकल्पितयोर्विकल्पाभासः' । विकल्पो भासते यत्र तत्र विकल्पाभासः । यथा

आपदां दर्शितः पन्था इन्द्रियाणामसंयमः ।
तज्जयः सम्पदां मार्गो येनेष्टं तेन गम्यताम् ।

अत्र येनेष्टं तेन गम्यतामिति विकल्पो विधीयमानः इष्टसाधनस्यैवोपादानार्हतया बाधितस्वरूपत्वाद् विकल्पा भासः ।

**विध्याभासः**—'अनिष्टविधानं विध्याभासः' यत्र अनिष्टार्थस्य विधानं बाधितत्वादाभासीभवति स विध्याभासः । यथा—

व्रज मम एव एकस्याः भवन्तु निश्वासरोदितव्यानि
मा तवापि तया विना दाक्षिण्यहतस्य जायन्ताम् ।

अत्रानियतगमनविधानं गमनस्यात्यन्तपरिहार्यत्वादिविशेषप्रत्यायकम् ।

**विनोदः**—'अन्यासङ्गात्कौतुकविनोदो विनोदः' । अन्यस्य साहचर्यात् कौतुकातिवाहनं विनोदः । यथाः—

कोपादपावृत्तमुखीषु यत्र प्रियासु गोत्रस्खलितेन यूनाम्
विनोदहेतुर्मणिभित्तिभागास्तद्भूमिकालम्बनतो भवन्ति ।

अत्र पराङ्मुखत्वेन प्रियाणामुत्कण्ठा युवभिस्तत्प्रतिबिम्बयुक्तमणिभित्तिदर्शनेनातिवाहिता ।

**विपर्ययः**—'धर्मिधर्मभावस्य धर्माणां विनिमयो विपर्ययः' । धर्मिधर्मयोः धर्माणां परस्परमादानप्रदानं विपर्ययः । यथा—

विपर्ययस्तत्र बभूव कान्ताबिम्बौष्ठरागाञ्जनपुंजनपुंजयोगात्
रक्ताम्बुजत्वं दधुरुत्पलानि पद्मानि नीलोत्पलतामवापुः ।

अत्र कमलत्वोत्पलत्वयोः जात्योः विपर्ययः ।

**विवेकः**—'तस्यां कुतश्चिद्विवेको विवेकः' । गुणसाम्याद् भेदाप्रतीतौ सत्यामपि केनचिन्निमित्तेन वैलक्षण्यावगतेः विवेको विवेकः । यथा—

नवाम्बुवाहप्रतिबिम्बवत्यां यत्रोच्चहर्म्यारुणरत्नभूमौ
व्यक्तिं लभन्ते सुरसुन्दरीभिः सालक्तकाः प्रावृषि पादमुद्राः ।

अत्रालक्तनकपादमुद्राणामरुणरत्नभूमावलक्ष्याणां नवाम्बुवाहप्रतिबिम्बेन भूमेः नीलीमावगतौ स्फुटतया प्रतीतिः ।

**वैधर्म्यम्**—'उद्दिष्टस्य प्रतिपक्षतयानुनिर्देशो वैधर्म्यम्' । पूर्वाभिहितार्थापेक्षया प्रतिभटभूतानामर्थान्तराणां पश्चान्निर्देशो वैधर्म्यालङ्कारः । यथा

कुमुदवनमपश्रि श्रीमदम्भोजषण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः
उदयति दिननाथो याति शीतांशुरस्तं
हतविधिलसितानां ही विचित्रो विपाकः ।

अस्य चालङ्कारान्तरसंसर्गे चारुत्वातिशयो जायते ।

**व्यत्यासः**—'दोषगुणयोरन्यथात्वं व्यत्यासः' यत्र दोषस्य गुणत्वं गुणस्य दोषत्वं च भवति स व्यत्यासः । यथा

अन्यदा भूषणं पुंसश्शमो लज्जेव योषितः
पराक्रमः परिभवे वैयात्यं सुरतेष्विव ।

अत्रान्यदा पराक्रमवैयात्ययोः पराभवसुरतविषये गुणत्वमिति कालभेदः ।

**व्याप्तिः**—'सर्वथा सम्भवोऽसम्भवो वा व्याप्तिः' यत्र समग्रपक्षावलम्बनेऽपि कस्यचिदर्थस्य सम्भवः असम्भवो वा निबध्यते सा समग्रपक्षव्यापनाद् व्याप्तिः । यथाः—

अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ।

अत्र दर्शनादर्शनयोः सुखस्यालाभः ।

**व्यासङ्गः**—'अनुभवस्मृत्यादिप्रत्यूहो व्यासङ्गः' । प्रक्रम्यमाणस्य प्रक्रान्तस्य वानुभवस्य स्मृतेरादिशब्दात् क्रियान्तरस्य वा पूर्ववदत्यासंगादन्तरायः

प्रत्यूहो व्यासंगः। यथा

तत्र तीर्थसलिलेन दीर्घिकास्तल्पमन्तरितभूमिभिः कुशैः
सौधवासमुटजेन विस्मरन् संचिकाय फलनिस्पृहस्तपः।

अत्र दीर्घिकादिस्मृतिसंस्कारस्तीर्थसलिलादिसदृशानुभवेनाच्छादितः।

**शृङ्खला**– 'उत्तरोत्तरस्य पूर्वपूर्वानुबन्धित्वं विपर्ययो वा शृंखला'। उत्तरोत्तरस्याश्रयत्वादिना पूर्वं पूर्वं प्रति पूर्वस्य पूर्वस्योत्तरमुत्तरं प्रति वा सापेक्षत्वं शृंखला। यथा—

आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः
आगमैः सदृशारम्भः प्रारम्भसदृशोदयः।

अत्रोत्तरोत्तरमुपमानोपमेयभावः।

**समता**—'तदन्याभ्यां समाधानं समता'। यत्र कस्यापि दोषः तत्सम्बन्धिनैव गुणेन गुणो दोषेण वा समाधीयते समपसार्यते स दोषस्य गुणस्य वा उत्कटत्वाभावात् समता। यथाः —

यः कोटिहोमानलधूमजालैः मलीमसीकृत्य दिशां मुखानि
तत्कीर्तिभिः क्षालयति स्म शश्वदखण्डतारापतिपाण्डुराभिः।

अत्र कूपखानकवद्वृत्या धूममुखेन होमादुत्पन्नस्य मालिन्यस्य तज्जनितेनैव कीर्तिप्रवाहेण क्षालनमिति दोषो गुणेन समाहितः।

**सन्देहाभासः**—'सन्दिह्यमानयोरेकत्र तात्पर्येच्छा सन्देहाभासः' किमिदं कार्यमुतेदमिति सन्दिह्यमानयोरेकस्यावश्यस्वीकार्यत्वविवक्षायां सन्देहो बाधितत्वाद् विशेषप्रतीत्यर्थं यत्राभासत्वे पर्यवस्यति स सन्देहाभासः। यथाः—

मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु
सेव्याः नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम्?

इत्यत्र भूधरयुवतिनितम्बयोः किं सेव्यमित्याभासमानससन्देहः।

इति

—:०:—

# शाकुन्तले कालिदासस्य व्यक्तित्वम्

डा० ब्रह्ममित्र अवस्थी

कविकुलगुरुः कालिदासः संस्कृतकविषु मूर्धन्यं स्थानमलंकरोति अत्र विषये न कस्यापि वैमत्यम् । अतएव एतस्य कृतीनां विविधाभिःदृष्टिभिः अनुशीलनमनुदिनं सम्पाद्यते कृतिभिः । कलापक्षं भावपक्षं दर्शनपक्षं चाश्रित्य पर्याप्तमनुशीलनं विद्वद्भिः काव्यरसिकैश्च कृतं क्रियते च प्रत्यहम् । एतत्कृतिषु अस्य व्यक्तित्वं विलोकयितुं प्रवर्त्तमानोऽहं साम्प्रतं केवलमभिज्ञानशाकुन्तलमाश्रित्य तदीयं व्यक्तित्वं किंचिदुन्मीलयितुं प्रयतिष्ये ।

कस्यापि पुंसः व्यक्तित्वमनन्तेषूपादानेष्वाश्रितं भवति, न च तच्छक्यं सर्वशो विश्लेषयितुमिति लघीयस्यस्मिन्पत्रे कतिचिदेव पक्षानाश्रित्य शाकुन्तले कालिदासस्य व्यक्तित्वमुन्मीलयितुमस्माकमयम्प्रयासः ।

## सारल्यमकृत्रिमता च

अभिज्ञानशाकुन्तलस्याध्ययनेनैवं प्रतीयते यत्कालिदासः स्वभावतोत्यन्तं सरलोऽकृत्रिमश्च । अतएव तत्पात्राणि छलादिभ्यस्सर्वथाऽपरिचितानि । शकुन्तला-दुष्यन्तौ प्रथमे प्रणय एव परस्परं विश्वसतः स्वसखीजनेषु सर्वमपि मनोगतं यथार्थं निवेदयतः । सखायो पि च सहजतया तदनुमोदयन्ति न विमर्शमभिलषन्ति तस्य । तपोवनान्मातुरन्तिकं प्रत्यावर्त्तमानस्य माढव्यस्य पुरतो यद्यपि दुष्यन्तः तासां ( मातृणां ) भयवशात् शकुन्तलावृत्तान्तं गोपायितुमीहते, ब्रवीति च 'परिहास विजल्पितं सखे परमार्थेन न गृह्यतां वचः ।' परं वचनस्यास्याक्षरशः ग्रहणान्माढव्येन तस्य सारल्यं नितरां परिस्फुरति । वदति च सः षष्ठेऽङ्के—'न विस्मरामि किन्तु सर्वं कथयित्वावसाने त्वया "परिहासविजल्पितमेव न भूतार्थः' इत्याख्यातम्, मयापि मृत्पिण्डबुद्धिना तथैव गृहीतम् ( ३२२ ) ।"

तदीया अकृत्रिमता न केवलं भावेषु, बाह्येष्वलंकरणादिप्रसंगेष्वपि सा सुतरां स्फुटा । अतएव दुष्यन्तः सवल्कलामपि शकुन्तलामधिकमनोज्ञां मनुते ।

सरसिजमनुविद्धं शैवलेनापि रम्यं मलिनमपि हिमांशोः लक्ष्म लक्ष्मीन्तनोति
इयमधिकमनोज्ञा वल्कलेनापि तन्वी किमिव हि मधुराणां मण्डनं नाकृतीनाम्[1] ।

१—अभिज्ञानशा० पृ० २६,

इत्यादि अगादीत् । यद्यपि औचित्यसन्निवेशी कालिदासः शकुन्तलादुष्यन्तयोः समागमप्रसंगे "चिरस्य वाच्यं न गतः प्रजापतिः"[१] इति ब्रुवाणः आभरणप्रसंगेपि पतिगृहं प्रस्थीयमानायाः शकुन्तलायाः प्रसाधनं वन्यैः कुसुमजातेरनुचितं मन्वानः, प्रियंवदामुखात् "आभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्विकार्यते"[२] इति वदति, प्रसाधनाय च वनस्पतिभ्योपि क्षौमं वासः लाक्षारसं अन्यानि चाभरणानि[३] दापयति ।

कालिदासस्य स्वभावः सतुरामुदारः, अतएव शकुन्तलाया रहसिकृतमपि प्रणयं तत्पिता कण्वः निर्बाधमनुमोदयति, यदद्यत्वेपि न तथानुमोद्यते पितृभिः । ब्रवीति च 'सुशिष्यपरिदत्ता विद्येव अशोचनीया संवृत्ता[४] इति । राजकीयशिष्टाचारमपि कालिदासः यथावसरमनुते ब्रवीति च "सेनापतिमुखात्" अहं तावत्स्वामिनः चित्तवृत्तिमनुवर्तिष्ये[५] इत्यादि । विविधेषु प्रसंगेषु स्वच्छन्दाचरणं विनयेन विनेति "अनुयास्यन्मुनितनयां सहसा विनयेन वारितप्रसरः"[६] इत्यादि ।

सरलस्वभावतयैव सम्भवतः नितरां कर्मठः कालिदासः यथावसरं भाग्यबलमपि सम्मानयति—"न जाने भोक्तारं कमिह समुपस्थास्यति विधिः" "अन्यद्भागधेयमेतेषां रक्षणे निपतति"[७], "अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र"[८] "अथवा भविव्यता खलु बलवती"[९] इत्यादिभिर्वचोभिः ।

शकुनेष्वपि विश्वासः तदीयां सरलतां व्यनक्ति, यच्च "स्फुरति च बाहुः कुतः फलमिहास्य"[१०] "अनयाभ्युपपत्त्या सूचिता ते भर्तृगेहेऽनुभवितव्या राजलक्ष्मीः"[११] इत्यादिभिर्वचोभिः, दुर्वाससः रोषापनयनाय गतायां प्रियंवदायां अनुसूयाहस्तात्पुष्पपात्रपतनसन्निवेषाच्च प्रतीयते ।

## देवेषु विश्वासः

कालिदासस्य वैदिकेषु कर्मकलापेषु वैदिकदेवतासु च द्रढीयान्विश्वासः आस्था च । ब्रह्मनिष्ठः कण्वः दुहितुः शकुन्तलायाः प्रतिकूलं दैवं शमयितुं सोमतीर्थं याति । अग्निशरणं हि प्रत्यागताय तस्मै सर्वं शकुन्तलावृत्तान्तं निवेदयति । वैतानाश्चवह्नयः पावयन्ति ।

---

शाकुन्तलस्य १–४—पृ० १३२, ५—पृ० १, ६—पृ० ६२, ७—पृ० १, २६, ८—पृ० ७४, ९—पृ० २२, १०—पृ० २२, ११—पृ० २२ ।

## ब्राह्मणेभ्यः समादरभावः-

विद्वद्भ्यो ब्राह्मणेभ्यश्च तस्य हृदये महानादरः। चक्रवर्तिराजस्य पालयिता दुष्यन्तः कण्वाय ब्रह्मवादिने स्वां भक्तिं निवेदयितुं नितरामुत्सुकः। अतएव च तदाश्रमान्तिकं गतः तमनुपस्थितं ज्ञात्वापि तदाश्रमवासिन्या शकुन्तलया एव स्वां भक्तिं सुसूचिषति—"सा खलु विदित भक्तिं मां महर्षेः कथयिष्यति।[१] दुष्यन्तेन जिघांस्यमानं मृगं लक्ष्यभूतमवाप्यापि अन्तरे समुपस्थितान्तपस्विनः दृष्ट्वा वाजिनः प्रग्रहीतुं सारथिनमादिशति 'कृष्णसारस्यान्तरे तपस्विन उपस्थिताः तेन हि प्रगृह्यन्तां वाजिन' इति[२] मनुते।[३] मुनिजनः सम्बन्धनात्रेणैव चाश्रममृगमहन्तव्यं स्वां राजधानीम्प्राप्तान्मुनिजनानाकर्ण्य दुष्यन्तः वितर्कभावमापन्नः चिन्तातुरो भवति "अपि किमपि मयापराद्धमित्यादि।[४] अतएव च वेत्रवतीमेव पृच्छन्ति—'वेत्रवति! किमुद्दिश्य भगवता काश्यपेन भवत्सकाशं ऋषयः प्रेषिताः स्युः—

किन्तावद् व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितम्
धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम्।
आहोस्वित्प्रसवो ममापचरितैर्विष्टम्भितो वीरुधाम्
इत्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः॥ इति

स शम प्रधानेषु तपोधनेषु दाहात्मकं तेजः गूढं मनुते।[५]

## अतिथिप्रियता :-

कालिदासायातिथयो नितरां प्रियाः बभूवुः। अतएव तस्य कण्वः सोमतीर्थं जिगमिषुः अतिथिसत्कारकार्ये नियोगं न विस्मरति, शकुन्तलां नियुनक्ति चात्र कर्मणि शकुन्तलामतिथिसत्काराय नियुज्य सोमतीर्थं गतः।[६] आश्रमोपकण्ठं प्राप्तां दुष्यन्तां प्रार्थयन्ते तपस्विनः 'गृह्यतामतिथिसत्कारः' इति।[७] तपोविषये दुष्यन्तेन अपि तपो वर्धते, इति पृष्टा अनसूया "इदानीमतिथि-विशेषलाभेन"[८] इत्युदरति। 'उचितं नः पर्युपासनमतिथीनाम्।" "सनाथा इदानींधर्मचारिणः।[९] 'यद्यत्र तातः सन्निहितो भवेत् जीवितसर्वस्वेनापि अतिथि विशेषं कृतार्थं

---

अभिज्ञानशाकुन्तले १— पृ० १८, २—पृ० १४।
३—पृ० १४, ४—पृ० १७० श्लोक ५०९
५—पृ० ६६, ६—पृ० १८।
७—पृ० १६, ८—पृ० ३६।
९—पृ० ३६।

करिष्यति[1] इत्यादि स्वीकरोति च । अत एव च अतिथिविशेषमुत्सृत्य स्वच्छन्दतो गमनं न युक्तं पश्यति ।[2] दुष्यन्तश्च समुपागतानृषीन् श्रुत्वा श्रौतेन विधिना सत्कृत्य स्वयमेव तान् प्रवेशयितुं सोमरातमादिशति ।[3]

## रसिकत्वज्ञानित्वयोर्द्वन्द्वः

कालिदासः परमरसिकः शृंगाररसस्य विशेषतः संभोगशृंगाररस्याधिष्ठाता कविरिति सामान्यतः सर्वैरपि सहृदयैर्विद्विद्भिः निर्विवादं स्वीक्रियते । परमभिज्ञानशाकुन्तलएव शृंगाररसात्मके नाटके यथावसरं रसिकत्वज्ञानित्वयोरन्तर्द्वन्द्वे कालिदासस्य ज्ञानगरिमैव प्रभुत्वमातनुते इति महदाश्चर्यम् । तत एव हि तस्य दुष्यन्तः वयं तत्त्वान्वेषान्मधुकरहतास्त्वं खलु कृती[4] इत्यादि ब्रवीति । शकुन्तला-प्रणये न रसिकत्ववशीभूतः प्रवर्त्तमानो भवति परं सुविचार्य आशंकसे यदग्निं तदिदं स्पर्शक्षमं रत्नम्[5] इत्यादि निश्चित्य तत्र प्रवर्त्तते । एकतः 'अनवाप्तचक्षुःफलोसि येन त्वया दर्शनीयं न दृष्टम्'[6] इति मन्वानस्यापि 'न परिहार्ये वस्तुनि तस्य पौरवस्य मनः प्रवर्त्तते ।[7]

## स्वाभिमानी कालिदासः

कालिदासः परं स्वाभिमानी बभूवेति अभिज्ञानशाकुन्तले बहुधा ध्वन्यते । तस्य प्रत्येकपात्रे स्वाभिमानित्वं सुतरां सुव्यक्तम् । कालिदासस्य माढव्यः 'यथा-राजानुगेन गन्तव्यं तथा[8] गच्छति । "प्रवाते निष्कम्पाः गिरयः" इति चान्यत्र घोषयति ।[9] शकुन्तलायाः हृदय "मवधीरणाभीरुतया वेपते[10] राज्ञावधीरिता सा च परं स्वाभिमानिनीवागर्जत्" अनार्य ? आत्मनो हृदयानुमानेन पश्यसि । क इदानी धर्मकिंचुकिप्रवेशिनः तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते । सुष्ठु तावदहमत्रस्वच्छन्दचारिणीकृतास्मि, याहमस्य पुरुवंशप्रत्ययेन मुखमधोः हृदयस्थितविषस्य हस्ताभ्यासमुपगता इत्यादि ।[11] शारद्वतोऽपि राजानं ।

कृतामिमर्शामनुमन्य-मानः सुतां त्वया नाम मुनिर्विमान्यः ।
मुष्टं प्रतिग्राहयता स्वमर्थं पात्रीकृतोदस्युरिवोसियेन ॥[12]

इत्यादि निर्भयं वक्ति । दुर्वासा च स्वाभिमानितयैव मे वचनमन्यथा भवितुं नार्हति[13] इत्याद्यंगीकरोति ।

---

अभि०शाकु० १—पृ० २—४—पृ० ४४ ५—पृ० ४४
६—पृ० ६८ ७—पृ० ६८ ८—पृ० ८२
९—पृ० १०—पृ० ९८ ११—पृ० १९०।
१२—पृ० १२४। १३—पृ० १३२

एवं स्वाभिमानसम्पन्नदृढव्यक्तित्वशाली कालिदासः हृदयेन सुतरां कोमलोऽपि। अतएव "वज्रादपि कठोराणि मृदूनि कुसुमादपि लोकोत्तराणां चेतांसि" इत्यादि तस्मिन्नविकलं संगच्छते। शकुन्तलाप्रणयं कण्वः निर्विवादमनुमनुते इति प्रागेवोक्तम्। अनसूया च कण्वानुमतिं तत्स्वभावपरिज्ञानादेव पूर्वत एवाशास्ते, कथयति च "यथाहं पश्यामि तथा तस्यानुमतं भवेत्"[1] तस्य दार्ढ्यं लोककल्याणायैवासीदिति "आर्त्तत्राणाय वः शस्त्रं न प्रहर्त्तुमनागसि"[2] इत्यादिभिर्वचनैर्ध्वन्यते।

तन्मते धनसम्पत्तिरन्धीकरोति सत्पुरुषानपीति "मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु[3]" इत्यादिभिरर्थान्तरन्यासैः सुतरां व्यज्यते।

## कर्मशीलता:

कर्मशीलता कालिदासस्य सर्वोत्कृष्टः गुणः। स्वकर्मपरिपालनमेव तन्मते प्राथम्यम्भजते। अतएव सूत्रधारः नटीमाह्वयन् "यदिनेपथ्यविधानमवसितमितस्तावदागम्यताम्"[4] इत्यादि भणति, "प्रतिपात्रमाधीयतां यत्नः[5]" य इत्याद्यादिशति। 'सुविहितप्रयोगतयार्यस्य' न किमपि परिहास्यते[6]" इत्येवं नट्या दत्ताश्वासनोपि "आपरितोषाद्विदुषां न साधुमन्ये प्रयोग विज्ञानम्[7]" इत्यादिभिर्वचोभिः पुनस्तान्प्ररयति स्वकर्मनिर्वाहाय। नटी च अनन्तरकरणीयामाज्ञामभिलषति[8]। तस्य कालिदासस्य कन्यका अपि स्वप्रमाणानुरूपैः सेचनघटैः बालपादपेभ्यः पयो वितरन्ति[9]। विदूषकः वने मृगया विहारिणं दुष्यन्तं "एवं राजकार्याणि उज्झित्वा तादृश आकुलप्रदेशे वनचरवृत्तिना त्वया भवितव्यम्[10]? इत्यादिभिर्वचनैरुद्बोधयति। वृद्धः कंचुकी अपि धर्मकार्यमनतिपात्यं देवस्य राज्ञः मनुते।[11] अविश्रमो-लोकतन्त्राधिकारस्तन्मते।[12] अतएव च दुष्यन्तः वियोगव्यथाव्यथितः चिरप्रबोधाद् धर्मासनमध्यवसितुमसंभाव्यमानः अमात्यवर्येण प्रत्यवेक्षितं यावत्पौरकार्यम्पत्रे समारोपितं दिदृक्षते।[13] एवं न विरमति कार्यात् अपितु स्वसुखनिरभिलाषः सन् लोकहेतोः खेदं भजते।[14] सानुमती च कर्मतत्परं दुष्यन्तं दृष्ट्वा विस्मिता भवति स्वत एव च निर्गच्छति तन्मुखाद् "अहो ईदृशी स्वकार्यपरता कथन्न स्यादीदृशः यस्यादर्श एवैतादृशः' तथाहिः—

अभि० शाकु० १— पृ० ११८ २— पृ० ९६। ३—पृ० १८०।
४—पृ० २ ५—पृ० ४।
६—पृ० ३ ७—पृ० ४
८—पृ० ५। ९—पृ०
१०—पृ० ५८ ११— पृ० १६४ १२—पृ० १६४
१३—पृ० २१८ १४— पृ० १६८ १५—पृ० २२४

भानुः सकृद्युक्ततुरंग एव रात्रिन्दिवं गन्धवहः प्रयाति।
शेषः सदैवाहितभूमिभारः, षष्ठांवृत्तेरपि धर्म एष[1]॥

**राजस्वभावः —**

सत्स्वेतेषु संख्यातीतेषु सद्गुणेषु तत्र विद्यमानः राजस्वभावः कदाचित्तापयितुं प्रभवेत् कांश्चित्सदयान्सहृदयान्। योहि यत्र कुत्रचित् तस्मिन्समलोक्यते। येन सः कर्दथितानपि दृष्ट्वा कदाचिदानन्दलेशमनुभवति। तथा हि तस्मै प्राणभयमापन्नः कस्मिन्नपि क्षणे दौष्यन्तं शरनिपातं संभावयन् पश्चार्धेन पूर्वार्धं प्रविविक्षति तादृशः मृगोभिरामः प्रतीयते—ग्रीवाभंगाभिरामं मुहुरनुपतति स्यन्दने दत्त दृष्टिः" इत्यादि।

सर्वथाव्यथितमपि दुष्यन्तं दृष्ट्वा सानुमती तस्य सन्तापेन रमते अस्य सन्तापेनाहं रमे[2] कंचुकी अपि शकुन्तलायै उत्सुकं अतएवातिदुःखितं दुष्यन्तं प्रियदर्शनं मनुते एवमुत्सुकोपि प्रियदर्शनो देवः[3] मृगयाविहाराय गतः दुष्यन्तः शकुन्तलां दृष्ट्वा तन्मनस्कः "अधिज्यं धनुर्न मयितुमप्यशकः[4]" सेनापतये "गिरिचर इव नागः प्राणसारं बिभर्ति।[4]" राजस्वभावोयं परदुःखे विनोदानुभवरूपः स दोषो वा गुणो वेति संभवति विवादः। तस्मिन्दोषे सत्यपि कालिदासस्य गुणगणगणना गरीयः व्यक्तित्वं नावद्यं कर्तुं पारयति यथोक्तं तेन—एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवांकः" इति।

एवं कालिदासस्य व्यक्तित्वं प्रसंगेभिज्ञानशाकुन्तलतो निदर्शनभूतानि कतिचिच्चित्राणि अत्रभवतां भवतां पुरतः समुपस्थापितानि। विषयेस्मिन्क्रियते श्रमश्चेत्कालिदासस्य चरित्रस्य च विषये वल्लालप्रभृतिभिरुद्भाविताः प्रथिताः अनेकाः भ्रान्तयः दूरीभवेयुरिति मे द्रढीयान् विश्वासः।

शाकुन्तले १—पृ० १६४ २--पृ० १० ३---पृ० २२४
४-- पृ० २१६ ५---पृ० ६० ६--पृ० ६१

—*—

# आख्यातपदलक्षणम्

## जगदीश-चतुर्वेदी

व्याकरणं किल पदशास्त्रम् । पदशब्देन सुबन्तस्य तिङन्तस्य च बोधो भवति। तत्र सुबन्तपदेन नामनिपातोपसर्गाणां पदानां ग्रहणं भवति । तत्र रामकृष्ण-मुकुन्दादय: नामपदानि, च ह वा इत्यादि निपातपदानि । प्र,परा, अप समित्यादि चोपसर्गपदानीति प्रसिद्धम् । तिङन्तपदेन च पचति, पठति, गच्छति, इत्यादि क्रियापदं गृह्यते । नामाख्यातयोर्योगे न वाक्यं भवति । तत्र वाक्यार्थबोधे आख्यातस्य प्राधान्यं भवति, अत: आख्यातलक्षणं किमिति प्रस्तूयते ।

तत्र तावद् ऋग्वेदप्रातिशाख्ये यत्र "तन्नाम येनाभिदधाति सत्त्वमिति" नामलक्षणं प्रोक्तम्, तत्रैवानुपदं "तदाख्यातं येन भावं, स धातु[1]" रित्यभिहित-माख्यातस्वरूपमपि । अस्य सूत्रस्यायमर्थो यत् येन=शब्देन भावं क्रियामभिदधाति स धातु: आख्यातमुच्यते । ततश्च नामपदं सत्त्वप्रधानमाख्यातपदं च क्रिया-प्रधानमिति नामाख्यातयो: स्वरूपवैलक्षण्यं स्पष्टं प्रतिभाति । क्रियाया: प्राधान्य-मेवाख्यातस्वरूपपरिचायकमिति प्राय: सर्वै: स्वीक्रियते ।

तथाहि शुक्लयजुर्वेदप्रातिशाख्येऽपि "क्रियाप्रधानमाख्यातमिति[2]" स्पष्टमे-वोक्तम् । सामान्यतस्तु व्यापारबोधक: क्रियाशब्दो व्यवहारे प्रचलति । प्रातिशाख्यात्परं यास्काचार्येणाऽपि "भावप्रधानमाख्यातमिति[3]" पूर्वोक्त-माख्यातलक्षणमेव समर्थितम् । एतच्च भावप्रधानम्, क्रियाप्रधानम् वा तिङन्त-पदे एव बोध्यते न केवले धातौ, न केवले तिङ्प्रत्यये वेति आख्यातपदं तिङन्त-बोधकमिति निश्चय: ।

यद्यपि सर्वाणि नामान्याख्यातजानीति निरुक्तवाक्ये आख्यातजानि इत्यस्य धातुजानीति व्याख्यानमुपलभ्यते तस्मात्, आख्यातपदेन धातोरपि ग्रहणमस्तीति वक्तुं शक्यते, तथापि न केवलेन धातुना नाम्नां व्युत्पादनं भवितुमर्हति, अपितु सप्रत्ययेन धातुरूपणेति । तत्राप्याख्यातपदं तिङन्तबोधकमेव पर्यवस्यति । तिङन्तरूपा-ख्यातजानि सर्वाणि नामानीति तद्वाक्यतात्पर्यमिति मन्तव्यम् ।

१. ऋग्वेदप्रातिशाख्यस्य १२ प० सूत्रम् १९
२. शु. यजु. प्रा. अ. ८ सू० ४६
३. निरुक्तम् १।१।९।

मीमांसाशास्त्रेऽपि मुख्यतः आख्यातपदेन तिङ्पदमेव गृहीतमस्ति । यथा मीमांसादर्शने—"येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि"[1] इत्युक्तम् । अस्य सूत्रस्य शाबरभाष्यमेवमस्ति "येषां शब्दानामुच्चारणोत्पत्तौ स्वे अर्थे प्रयोगो न विद्यते, प्रयोगकाले येषामर्थो नोपलभ्यते इत्यर्थः, तान्याख्यातानीति भावशब्दान् पर्यायशब्देनोपदिशति । कथं पर्यायशब्दता भावशब्दानाम् यत् एषां विभक्तयः आख्यातिक्य इत्युच्यन्ते, कतमास्ताः पचति पचतः पचन्तीत्येवमादयः"। एतेन भाष्येण स्पष्टं भवति यद् भावप्रधानमाख्यातमिति प्रसिद्धप्रातिशाख्य-निरुक्त-प्रोक्तलक्षणमेवार्थतोऽनुसरति जैमनिमुनिप्रोक्तमाख्यातलक्षणमपि। किन्तु मीमांसकेषु आपदेवः स्वकीयमीमांसान्यायप्रकाशे "यजेत स्वर्गकामः" इति वाक्यविवरणे आख्यातशब्दमेव विविनक्ति "यजेत इत्यत्रांशद्वयम्, यजि धातुः, प्रत्ययश्च । तत्र प्रत्ययेऽपि अस्त्ययंशद्वयमाख्यातत्वं लिङ्त्वं च आख्यातत्वं च दशलकारेषु विद्यते, लिङ्त्वं पुनः केवलं लिङ्येव । तत्र आख्यातत्वलिङ्त्वाभ्यां भावनैवोच्यते"[2] इति । अत्र आख्यातपदेन केवलप्रत्ययग्रहणे चेदमेव कारणं यद् मीमांसकमते पचति, आगच्छन्तीत्यादि तिङन्तस्थले फलं धात्वर्थः भावना च प्रत्ययवाच्या भवति, ततश्च आख्यायते कर्तृकर्मणी येनेति व्युत्पत्तिमङ्गीकृत्य तिङ्पर्यायत्वेनाख्यातपदव्यवहारो जातः ।

मीमांसादर्शनवन्नव्यायदर्शनेऽपि प्राचीननैयायिकैराख्यातस्वरूपं भावप्रधानमुक्तम् । तथाहि उद्योतकरो भारद्वाजः "क्रियाकालिकप्रयोगाभिधायिक्रियाप्रधानमाख्यातमिति"[3] स्पष्टमेवोक्तवान्, यतोहि क्रियाकालिकप्रयोगाभिधायित्वं तिङन्तपदे एव भवति नतु धातुविरहिते केवले तिङ्प्रत्यये । तस्मात् प्राचीनन्यायसम्मतमाख्यातलक्षणमपि पूर्वोक्तप्रातिशाख्यानुरूपमेवास्ति ।

नव्यनैयायिकेषु जगदीशभट्टाचार्यः

धात्वर्थेन विशिष्टस्य विधेयत्वेन बोधने ।
समर्थः स्वार्थयत्नस्य शब्दो वाऽऽख्यातमुच्यते ॥[4]

---

१—मीमांसादर्शनम् २अ० १पा० ४सूत्रम् ।
२—मीमांसान्यायप्रकाशः पृ० २ धर्मनिरूपणम्.
३— न्यायवार्तिके २ अ० २ आदि न० ६सूत्रे
४— शब्दशक्तिप्रकाशिकायाम् पृ० ३९५ का० ९७

इत्याख्यातलक्षणमुक्त्वा धात्वर्थाविच्छिन्नपर्यायत्वादिति व्याख्यातवान्। तत्त्वतः पर्यालोचने तु तत्रापि धात्वर्थसम्बन्धस्यानियतत्वात् प्रकृतिप्रत्यय-विशिष्टस्यैवाख्यातत्वं सिध्यति।

"अविशिष्टलिङ्गमाख्यातं क्रियावाचि"[1] इति कौटिल्यार्थ-शास्त्रोक्तमाख्यात-लक्षणं तु स्पष्टमेव तिङ्ङन्तपदं वक्ति, यतोहि ततः सामान्यंलिङ्गता क्रियावाचक-ता च गम्यते, तच्च गच्छति-नमति-पठति-प्रभृतिषु तिङ्ङन्तेष्वेव दृश्यते। तथाहि तटः तटी तटमिति त्रिलिङ्गेष्वपि 'गम्यते' इत्येकमेवाख्यातपदमुप-युज्यते। अन्यत्र कृदन्ते तु तटः गतः, तटी गता, तटं गतमिति व्यवह्रियते। तस्मात् क्रियावाचित्वे सति सामान्यलिङ्गत्वमाख्यातलक्षणं सर्वथा समुपयुक्तं भाति।

वैयाकरणसिद्धान्ते च आख्यायते स्म अनेनेति व्युत्पत्या योगरूढमाख्यतपदं निर्विवादं तिङ्ङन्तःपदबोधकमस्त्येव। अतएव महर्षिपाणिनिः मयूरव्यंस-कादयश्चेति सूत्रस्थगणपाठे "आख्यातमाख्यातेन क्रियासातत्येत्यत्र[2]" तिङ्ङन्तमेव जग्राह। तेन अश्नीत पिबतेत्येवं सततं यत्राभिधीयते सा अश्नीतपिबता, खादतमोदतेत्यादि समासप्रयोगः सुसम्पन्नो भवति। यत्र वैयाकरणेष्वपि कौण्डभट्टः "नन्वनयोराख्यातार्थत्वे किं मानम्[3]" इत्यत्र कर्तृकर्मणोः आख्यातार्थत्वे तिङर्थत्वे मानमिति तिङ्पर्यायत्वेनाख्यातमुक्तवान्, तत्तु नव्यनैयायिकवासनयेति बोध्यम्। वस्तुतस्तु वाक्यार्थबोधे धात्वर्थे क्रियायाः प्राधान्यात् तिङ्ङन्तस्यैव ग्रहणं संभवति। अतएव नागेशभट्टेन "नामाख्यातोपसर्गनिपाताश्चेति[4]" भाष्य-व्याख्याने आख्यातं तिङ्ङन्तमिति प्रोक्तम्। तस्मात् शाब्दिकानामाख्यातं तिङ्ङन्तमेव, न केवलं तिङिति बोध्यम्। इत्थं च प्रातिशाख्यादारभ्य क्रमशः मीमांसान्यायार्थशास्त्रव्याकरणसम्मतमाख्यातपदलक्षणमिह विवेचितम्।

---

१-- कौटिल्यआर्थशास्त्रे २ अधि० १० अ० १९ सूत्रम्।
२-सि० कौ० गणपाठे ७५४।२।१।७२।१५
३-वै० भू० सारः धात्वर्थनिरूपणे
४-व्या० महाभाष्यम् पस्पशाह्निके

# श्रवणमनननिदिध्यासनानां विधिविमर्शः

## केशवप्रसाद-पाठकः

अद्वैतवेदान्तस्य 'ब्रह्म सत्यं जगन्मिथ्या' अयमेव सिद्धान्तः इत्यत्र नास्ति केषामपि विमतिः। तत्रापि आत्मतत्त्वप्रपिपादकानां ज्ञानकाण्डाख्यया प्रसिद्धानामशेषवेदान्तसिद्धान्तसारभूतानामुपनिषदां 'तद्ब्रह्मोपनिषत्परम्' 'तद्गुह्यं गूढेषु उपनिषत्सु' इत्यादिश्रुतिभिः ब्रह्मणि पर्यवसानमस्ति। तथा च तदेव ब्रह्म भगवत्पादबादरायणाचार्येणाऽपि स्वीये ब्रह्मसूत्रे प्रतिपादितमस्ति। यच्चानन्तरं शंकराचार्यप्रभृतिभिराचार्यैं विशदीकृतं स्वस्वभाष्येषु। इयमेव खलु ब्रह्मविद्या, वेदान्तविद्या, पराविद्या, अध्यात्मविद्या, इत्यादिभिर्नामभिर्व्यवह्रियते। इयमेव सर्वासां विद्यानां मूलभित्तिः। तथा चोक्तं मुण्डकोपनिषदि—

'स ब्रह्मविद्यां सर्वविद्या-प्रतिष्ठाम्' अतः भारतायार्यजीवनस्याधारशिलाभूतमिदमात्मतत्त्वज्ञानमुपङ्गीकृत्यैव सर्वाणि विधिनिषेधशास्त्राणि प्रवर्तन्ते। अमुमेव सिद्धान्तमुररीकृत्यैव वेदे ज्ञानकाण्डे सूक्ष्मरूपेण प्रतिपादितानां परब्रह्मादितत्त्वानां विषये श्रवणमनननिदिध्यासनान्येव साधनानि सन्तीति कथ्यते। यदुक्तं श्रुतावपि आत्मा वाऽरे द्रष्टव्यः श्रोतव्यः मन्तव्यः निदिध्यासितव्य इति (बृ. उ. ६) अथ कथं हि श्रवणादीनामात्मसाक्षात्कारे विधित्वमिति जिज्ञासायामुच्यते। श्रोतव्यः मन्तव्यः निदिध्यासितव्य इत्यनया श्रुत्या आत्मज्ञानस्योपायो विहितः। अत्र हि त्रिषु पदेषु श्रवणं मननं सततं ध्यानं च धात्वर्थः, प्रैषश्चात्र तव्यप्रत्ययस्यार्थः।[1] प्रैषश्चात्र विधिः। स च त्रिविधः परिकीर्तितः अपूर्वविधिः नियमविधिः परिसंख्याविधिश्चेति। यदुक्तम् :—

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते। इति

तत्र प्रमाणान्तरेण अप्राप्तस्यार्थस्य प्रापको विधिः अपूर्वविधिः। तस्य च विधेरज्ञातार्थज्ञापकता विधिवाक्यादृतेऽन्यत्प्रत्यक्षादिप्रमाणेन न सम्भवति। तच्चाज्ञातार्थज्ञापकत्वं यथा—'ज्योतिष्टोमेन स्वर्गकामो यजेत्' इत्यत्र विहितस्य ज्योति—

१—प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च सि० कौ० ३-३-१६३।

ष्टोमयागस्य स्वर्गादिफलवत्त्वं केवलमनेनैव विधिवाक्येन सम्भवति न केनापि प्रमाणान्तरेण ।

पक्षेऽप्राप्तस्य प्रापको विधिः नियमविधिः यथा 'व्रीहीनवहन्ति' इति । अत्र हि व्रीहीणां निष्पत्तिकारणस्य नखविदलनादेरपि लोकावगतत्वेन तस्यापि पक्षे प्राप्तावहननाप्राप्तांशस्य सम्भवात् तदंशपूरणफलकोऽवहननविधिः नियमविधिः। यदुक्तम्—'नानासाधनसाध्यक्रियायामेकसाधनप्राप्तौ अप्राप्तस्यापरसाधनस्य प्रापको विधिः नियमविधि[1]:' इति ।

उभयोश्च युगपत् प्राप्तौ इतरव्यावृत्तिपरो विधिः परिसंख्याविधिः । यथा–पञ्चपञ्चनखा भक्ष्या' इत्यत्र पञ्चपञ्चनखभक्षणं न विधि; किन्तु तत् पञ्चेतरापञ्चनखभक्षणमपि रागात्प्राप्तं तन्निवृत्त्यर्थम् ।

ननु 'आत्मा वाऽरे द्रष्टव्यः' इत्यत्र न नियमविधिः नापि परिसंख्याविधिः। नियमविधौ हि नियमादृष्टजन्यपरमापूर्वमेव तत्कल्पकम्, इह तु ब्रह्मज्ञानस्य नित्यत्वाददृष्टजन्यत्वाभावेन नियमादृष्टकल्पने सामर्थ्याभावेन तद्वैषम्यात् । नाप्ययं परिसंख्याविधिः, अत्र ह्यात्मसाक्षात्कारस्योपनिषदतिरिक्तात् प्राप्त्यसंभवेन तदभावात् । एवमपूर्वविधित्वस्वीकारात् वेदान्तश्रवणे ब्रह्मसाक्षात्कारहेतुत्वस्य लोकतोऽसिद्धिः । अपि च गर्भगतस्य वामदेवस्यापि वेदान्तश्रवणाभावेऽपि ब्रह्मसाक्षात्कारस्य सत्त्वेनान्वयव्यतिरेकव्यभिचारात् । न च सामान्येन श्रवणमात्रस्य तत्तद्विषयसाक्षात्कारे हेतुत्वमिति । कर्मकाण्डादिश्रवणात् तद्विषयधर्मादिसाक्षात्कारस्यादर्शनेन तथा कल्पयितुमशक्यत्वात् । अतएव शांकरभाष्ये---'सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्[2]' इत्यधिकरणे बाल्यपाण्डित्यवद् मौनस्य विधित्वमित्युक्तत्वेन पाण्डित्यशब्देन गृहीतस्य श्रवणस्य विधित्वस्वीकारः संगच्छते इति प्रकटार्थकारादयः[1] ।

विवरण काराणामाशयः—नायमपूर्वविधिः अपितु, नियमविधिरेव । दृष्टफलस्य धर्मसानस्य हेतुभूते पूर्वमीमांसायां 'स्वाध्यायोऽध्येतव्यः' इत्यत्र अध्ययनविधौ नियमविध्यङ्गीकारकृतकत्वेन तद्वदेवात्रापि सम्भवात् । यथा–'व्रीहीनवहन्ति' इत्यादौ परमापूर्वस्य नियमादृष्टजन्यस्य नियमविधिकल्पकत्वम्, तद्वदत्रापि ब्रह्मज्ञानस्य सर्वादृष्टजन्यनियमविधिकल्पकत्वमिति सुवचम्, 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इति गीतावाक्येन ब्रह्मज्ञानस्य सर्वादृष्टजन्यत्वात् ।

---

१–अर्थसंग्रह--नियमविधि पृ० ५४ हरिदाससंस्कृत—( ग्रन्थमाला )

२–तत्रोपायापरिज्ञानादलौकिकसमीक्षणे, प्रकटार्थकृतः प्राहुरपूर्वं श्रवणे विधिम् ।

ननु प्रमाणान्तरेणाप्राप्तत्वाद् अपूर्वविधित्वमेवात्र कल्पनीयमिति चेत् न 'यत्साक्षादपरोक्षाद् ब्रह्म' इत्यनया श्रुत्या सामान्यरूपेण अपरोक्षवस्तुविषयक प्रमाणत्वावच्छेदेन साक्षात्कारहेतुत्वस्य सिद्धौ वेदान्तश्रवणस्यापि ब्रह्मज्ञाने हेतुत्वस्य प्राप्तेः सुगमत्वात् ।

एकदेशिनो मते[1]—शब्दो हि पूर्वं शाब्दात्मकं परोक्षज्ञानमेव जनयति । पश्चाद् मनननिदिध्यासनाभ्याम् युक्तः सन् प्रत्यक्षमपि जनयति । यथा कामिनीभावना-भावितं कामुकस्य मनः कामिन्याः साक्षात्कारं सम्पादयति एवं च शब्दस्य स्वविषये स्वतः परोक्षज्ञानकृत्यस्य मननादिप्रयुक्तभावनाधिक्यस्य, सहभावेनाप-रोक्षज्ञानजनकत्वस्य च प्राप्तत्वान्नियमविधिरयमिति ।

वार्त्तिककृतां मते[2] तु—यथा चिकित्साज्ञानार्थं चरक–सुश्रुतादि-ग्रन्थश्रवणे प्रवृत्तो मध्येऽन्यव्यापारेऽपि प्रवर्तते, तथैव ब्रह्मज्ञानार्थं वेदान्तश्रवणे प्रवृत्तस्या-ऽप्यन्यत्राऽपि व्यापारे प्रवृत्तिः सम्भवति, अतस्तन्निरासफलकोऽयं परिसंख्या-विधिः । स च तत्र चान्यत्र च प्राप्तावन्यनिवृत्तिफलको भवति ।

कस्यचिदाचार्यस्य मते[3] तु—वेदान्तश्रवणं न ब्रह्मसाक्षात्कारे हेतुः, अपि तु मन एव, 'मनसैवानु द्रष्टव्यमि--ति' श्रुतेः । श्रवणं तु असन्दिग्धपरोक्षज्ञानार्थमिति । परोक्षज्ञानार्थत्वेनायं नियमविधिरिति ।

संक्षेपशारीरककाराणां मते---श्रवणं नाम वेदान्तवाक्यानामद्वितीये ब्रह्मणि तात्पर्यनिर्णयानुकूलन्यायविचारात्मकश्चेतोवृत्तिविशेषः । तथा च परोक्षमपरोक्षं वा ज्ञानं न जन्यते, अपितु प्रमाणेन परोक्षात्मिकाऽपरोक्षात्मिका वा वृत्ति-र्भवति । अपि च ज्ञानस्याविधेयत्वेन अङ्गीकारे तात्पर्यविशिष्टं शाब्दज्ञानमेव श्रवणमित्यत्र विध्यनुपपत्तिः । अत एव श्रवणं नाम तात्पर्य निर्णयद्वारापुरुषा-पराधनिराससम्पादनार्थमित्यत्रायं श्रवणविधिः ।

अथवा 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' इत्यत्र भिन्नात्मज्ञानेन मुक्तिः प्रदर्शिता । अतः भिन्नात्मविचाररूपे दर्शनान्तरे विद्यमाने तत्रापि प्रवृत्तिः पाक्षिकी स्यात् । अतएव एतन्निवृत्तये नियमविधिरेव आश्रयणीयः ।

१—सिद्धान्तलेशसंग्रह पृ० २८
२—सिद्धान्तलेशसंग्रह पृ० ३७-४०
३—सिद्धान्तलेशसंग्रह पृ० ३२-३६

केचिन्मन्यन्ते—यथा प्रत्यभिज्ञास्थले प्रथमं तु चैत्रादिविषयीभूता निर्विकल्पात्मिका परोक्षरूपा प्रमा उत्पद्यते, तदनन्तरमिन्द्रियस्य पूर्वसंस्कारसहितस्य सामर्थ्याद् तत्राऽपरोक्षरूपा सविकल्पात्मिका प्रमा जन्यते, तद्वदत्रापि प्रथमक्षणे शब्दज्ञानेन परोक्षज्ञानमेवोत्पद्यते, शब्दस्य परोक्षज्ञानजननस्वभावात्। तत्पश्चात् सहकारिसमवधानादिनाऽपरोक्षं ज्ञानमुत्पद्यते। एवमत्रापि प्रथमं वेदान्तश्रवणेन परोक्षज्ञानं जन्यते, ततस्तु मनननिदिध्यासनसहकारिभ्यामात्मसाक्षात्कारः उत्पद्यते। अतः स्वातंत्र्येण आत्मसाक्षात्काररूपस्य अज्ञातार्थज्ञापकत्वस्याकरणत्वेन नायमपूर्वविधिः, किन्तु नियमविधिरेव।

केषाञ्चिन्मते—आचार्यमुखतः सर्ववेदान्तवाक्यानां षड्विधलिङ्गैः शक्तितात्पर्यनिर्णयीभूतमिति श्रवणम्। अन्यथा कल्मषादिप्रतिबन्धकसद्भावाद् अविद्यानिवृत्यभावात् मोक्षस्यानुपपत्तिः स्यात्। अतः अद्वैतात्मपरिभाषाप्रबन्धश्रवणेऽपि पक्षे प्रवृत्तिः स्यात्, एतन्निवारणार्थं नियमविधिराश्रयणीयः।

आचार्यवाचस्पतिमिश्राणां मतम्—

'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यः' इत्यत्र आत्मविषयकत्वेन निबध्यमानं श्रवणमागमाचार्योपदेशजन्यमात्मविषयकं शाब्दज्ञानमेव, न तु तात्पर्यविचाररूपम्। यथा हि मननादौ आत्मा विषयस्तद्वदत्रापि स ज्ञेयः। अतएव ज्ञानस्य चाविधेयत्वाद् न ह्यत्र कोऽपि विधिः सम्भवति। यदुक्तं भामत्याम्—"ननु आत्मेत्येवोपासीत" इत्यादयो विधयः श्रूयन्ते, न च प्रमत्तगीताः, तुल्यं हि सम्प्रदायिकम्, तस्माद्विधेयेनात्र भवितव्यमित्यत आह—तद्विषया लिङ्गादय इति। सत्यं श्रूयन्ते लिङ्गादयः न त्वमी विधिविषयाः, तद्विषयत्वेऽप्रामाण्यप्रसंगात्। स एव च हेयः उपादेयो यं पुरुषः कर्तुमकर्तुमन्यथा वा कर्तुं शक्नोति। ………किमर्थानि तर्हि वचनान्येतानि, अन्यतः प्राप्ता एव हि श्रवणादयो विधिस्वरूपैर्वाक्यैरनूद्यन्ते, न चानुवादोऽप्यप्रयोजनः, प्रवृत्तिविशेषकत्वात्। तथाहि………प्रवृत्तिविशेषकरताऽनुवादानामस्तीति सप्रयोजनतया स्वाध्यायविध्यधीनग्रहणत्वमुपपद्यते।

अत्र चात्मदर्शनं न विधेयम्, तत्र दृशेरुपलब्धिवचनत्वात् श्रवणं वा प्रत्यक्षं वा स्याद् प्रत्यक्षमपि लौकिकमहंप्रत्ययो वा भावनाप्रकर्षपर्यन्तजं वा। तत्र श्रवणं न विधेयम्, तस्योपासनाविधानादेव वाजिनवदनुनिष्पादितत्वात्।"

[ भामतीपृष्ठ-१२६ ]

एवं चात्र भगवत्पादशंकराचार्यमतानुयायिनां वाचस्पतिमिश्राणां मते श्रवणादीनां ब्रह्मज्ञानसाधनीभूतानां पूर्वमुक्तत्वान्न कोऽपि विधिः। अपि च मननं त्वत्रानुमितिरूपमेव ज्ञानम्, न तु ज्ञानसामान्यम्। तच्चानुमानम्—आत्मा ब्रह्मस्वभावः, चिद्रूपत्वात् ब्रह्मवत्। बुध्यादिकल्पितः दृश्यत्वात् शुक्तिरजतादिवत्। यदुक्तम्—आगमार्थविनिश्चित्यै मन्तव्य इति भण्यते।

वेदशब्दानुरोध्यत्र तर्कोऽपि विनियुज्यते।
पदार्थविषयस्तर्कस्तथैवानुमिति र्भवेत्॥[1]

भगवत्पादशंकराचार्यैरपि 'तत्तु समन्वयात्' इत्यस्मिन्नधिकरणभाष्ये आत्मज्ञानस्य विधित्वं निराकृत्य शङ्कितम्—किमर्थानि तर्हि आत्मा वाऽरे द्रष्टव्यः' इत्यादिश्रुतिवाक्यानि विधिच्छायानि इत्यत्र स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः, इति रूपेण समाहितम्। अपि च वेदान्ततात्पर्यभूतस्यापि श्रवणस्य तात्पर्यनिर्णयद्वारा वेदान्तानां तात्पर्यप्रतिबन्धकीभूतभ्रमसंशयादीनामेव निरासः फलम्, न तु ब्रह्मज्ञानमिति। एवं च तस्य लोकतः एव सिद्धेर्न कोऽपि विधिः सम्भवति।

तथा च व्याख्यातं कल्पतरावपि—दर्शनार्थं कर्तव्यत्वेनान्वयव्यतिरेकावगतान् श्रवणादीननुवदन्ति वचांसि तद्गतप्राशस्त्यलक्षणया तेषु रुचिमुत्पाद्य नात्मचिन्तायामरुचिं कुर्वन्ति। ( वेदान्तकल्पतरु पृ० १३० )

अत एव विस्तरभयात् आचार्यवाचस्पतिमतानुयायिनां मतं श्लोकेनानेन संकेतं लभते—

वेदान्ता यद्युपासां विदधति विधिसंशोधिमीमांसयैव
प्राच्या तर्हीरितार्था इति विफलमिदं ब्रह्मजिज्ञासनं स्यात्।
अत्युच्चश्चातिनीचो जनिमृतिमयभाग्वैधधीसाध्यमोक्ष—
कर्मोत्थैः स्वर्गपश्वाद्यतिमधुरफलैः कोऽपराधः कृतो नः॥ इति

—:०:—

# नञर्थ-विमर्शः

## हरिश्चन्द्रमणि-त्रिपाठी

"घटो न पटः," 'घटोः नास्ति', इत्यादावसमासस्थले 'घटभेदवान् पटः', 'घटप्रतियोगिकोऽभावः', इत्यभावविशेष्यकशब्दबोधस्य सार्वजनीनप्रसिद्धिसिद्धत्वान्नञोऽभावार्थकत्वमावश्यकम् । एवञ्चोत्तरपदार्थप्राधान्यादिव्यवस्था सिद्ध्यति । किन्तु समासस्थले 'असः' इत्यादौ तदभाव इत्यर्थेऽभावे तत्पदार्थस्य विशेषणत्वेन 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः' इत्यभियुक्तोक्त्या सर्वनामकार्यं न स्यादिति 'असर्वस्मै' इत्यादि प्रयोगा न सिद्ध्येरन् । अतो नञ्समासस्थले 'अब्राह्मणः' इत्यादौ समासघटकब्राह्मणादिपदानामारोपितब्राह्मणत्वादिप्रवृत्तिनिमित्तमिति नञा द्योत्यत इति आरोपितत्वं नञ्द्योत्यं स्वीकार्यम् । तथा चोक्तं वैयाकरणभूषणसारे[1]—

> "नञ्समासे चापरस्य प्राधान्यात् सर्वनामता ।
> आरोपितत्वं नञ्द्योत्यं न ह्यसोऽप्यतिसर्ववत् ॥"

अन्यथा 'अतिसर्वः' इत्यादौ 'सर्वातिक्रमणकर्ता' इत्यर्थे सर्वशब्दस्य प्रकारताप्रयोजकतया इतरपदार्थनिष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारताप्रयोजकत्वरूपोपसर्जनत्वस्य सत्त्वात् 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः' इति वार्तिकेन[2] निषेधात् यथा सर्वनामता न भवति तथा 'असर्वः' इत्यत्र 'सर्वभिन्नः' सर्वाभावो वेत्यर्थे सर्वपदार्थस्य प्राधान्याभावे सर्वनामता न स्यात् ।

नञ्समासे भाष्यकारेण त्रयः पक्षाः प्रतिपादिताः । तथाहि—अन्यपदार्थप्रधानः, पूर्वपदार्थप्रधानः उत्तरपदार्थप्रधानश्चेति । यदा जातौ ब्राह्मणशब्दाः 'नास्ति ब्राह्मणः, ब्राह्मणत्वं यस्य सोऽब्राह्मणः' इति तदाऽन्यपदार्थप्रधानः क्षत्रियादिः । यदा तत्सामान्यवृत्तिर्नञ् ब्राह्मणादिभिर्विशेष्यते 'ब्राह्मणत्वेनासन्' अब्राह्मणशब्देनोच्यते तदा पूर्वपदार्थप्रधानः । यदा तु दुरुपदेशान् मिथ्याज्ञानाद्वा ब्राह्मणशब्दः क्षत्रियादौ प्रयुज्यते, स्वाभाविकी ब्राह्मणपदपदार्थनिवृत्तिश्च नञा द्योत्यते, तदा उत्तरपदार्थप्रधानः । इदमत्राकूतम्—अनियतविशेषगुणस्य नियतविशेषगुणप्रतिपादनाय विशेषणं प्रयुज्यते, न तु तद्रूपघाताय । यदि च नञा

१. "वैयारणभूणसारः' का० ४० ।
२. "पा० सू०१।१।२९ ।

ब्राह्मणपदार्थः प्रतिविधीयते तदा सर्वात्मना तदर्थस्याभावात् कथमुत्तरपदार्थप्राधान्यं स्यात्। तस्मात् 'अब्राह्मणः' इत्यत्र नञोऽब्राह्मणगतविशेषगुणस्याव-चनात् अनर्थकत्वमेव। तथा चात्राब्राह्मणशब्दोऽपि ब्राह्मणवाचक एव स्यादिति। यद्वा भेदप्रतियोगिब्राह्मणः, इत्यर्थे ब्राह्मणस्य विशेष्यतया तत्रैव कर्मत्वान्वये 'अब्राह्मणमानय' इत्युक्तौ ब्राह्मणस्यानयनं प्रसज्यते। अन्यपदार्थप्रधानस्तर्हि भविष्यति; यत्रान्यपदार्थप्रधानस्तर्हि—'अवर्षा हेमन्तः' इति हेमन्तस्य यल्लिङ्ग वचनं च तत्समासस्यापि प्राप्नोति। अथवा पुनरस्तूत्तरपदार्थप्रधानः। ननु चोक्तम्—'अब्राह्मणमानय' इत्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोतीति। नैष दोषः, यथेह 'राजपुरुषमानय' इत्युक्ते राजा विशेषकः प्रयुज्यते तेनैवंविशिष्टस्यानयनं भवति। इहापि तर्हि नञ् विशेषकः प्रयुज्यते। तेन नञ्विशिष्टस्यानयनं भविष्यति। कः पुनरसौ नञ् ? निवृत्तपदार्थकः ? निवृत्तः पदार्थो मुख्यं ब्राह्मण्यं यस्मिन् स क्षत्रियादिरर्थः ? सादृश्यादिनाऽध्यारोपितब्राह्मण्य इत्यर्थः। एवञ्चारोपितत्वं नञ्द्योत्यमिति स्पष्टमेवोक्तम्। आरोपितत्वञ्च—तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताकप्रतीतिविषयत्वम्। तथा च—'अब्राह्मणः' इत्यनेन ब्राह्मणत्वाभाववत् क्षत्रियादिनिष्ठविशेष्यतानिरूपितब्राह्मणनिष्ठप्रकारताकप्रतीतिविषयीभूतब्राह्मणक्षत्रियादिरिति बोधः।

नञः आरोपितत्वद्योतकत्वे 'असर्वस्मै' इत्यादौ यद्यपि सर्वनामसंज्ञा सिद्ध्यति तथापि 'अघटः' इत्यादिना सर्वजनानुभवसिद्धस्य 'घटभिन्न' इत्याद्यर्थस्यापलापः स्यादिति घटभिन्ने एव घटत्वारोपात् आरोपितघटत्वस्य घटभेदस्य च सामानाधिकरण्यात् तथाविधस्यानुभवस्य साधयितुं सुलभत्वात्।

आरोपितत्वञ्चात्र आरोपविषयत्वम्। आरोपमात्रमर्थो विषयत्वं संसर्ग इति निष्कर्षः। आरोपश्च तदभाववद्विशेष्यकं तत्प्रकारकं ज्ञानम्। तथा च विषयतासम्बन्धेनारोपविशिष्टं यद् ब्राह्मणत्वं तद्वान्' इति 'अब्राह्मण' इत्यनेन बोधः। तथा च नञः शक्यतावच्छेदकमारोपत्वमिति लाघवम्। आरोपितस्य शक्यत्वे तु आरोपविषयत्वं शक्यतावच्छेकमिति गौरवम्। यद्यपि विषयत्वस्य संसर्गत्वे प्रकारत्वे वा शक्यत्वं स्वीकार्यमेव, तथापि समासे एकार्थीभावात्मकशक्तिस्वीकारेणाकाङ्क्षाभास्यत्वासम्भवः। न चैवं लाघवाभावः, संसर्गीभूतविषयत्वस्य सम्बन्धाभावकृतलाघवसत्त्वात्। विषयत्वस्य प्रकारविधया भाने तु निरूपितत्वस्वरूपसम्बन्धयोर्भाने गौरवम्।

भाष्ये तु अन्योऽपि पक्षः प्रतिपादितः। तद्यथा—'सर्व एवैते शब्दाः गुणसमुदायेषु वर्तन्ते, ब्राह्मणः, क्षत्रियः, वैश्यः, शूद्र इति। तथा चोक्तम्—

"तपः श्रुतञ्च योनिश्चेत्येतद्ब्राह्मणकारकम् ।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥"

समुदाये ब्राह्मणशब्दः प्रवृत्तोऽवयवेष्वपि वर्तते जातिहीने गुणहीने चेति। अत्रेदं तात्पर्यम्—नञ्शब्दः क्वचिद्गुणं निषेधति– 'अब्राह्मणोऽयं यस्तिष्ठन् मूत्रयति,[1] 'अब्राह्मणोऽयं यस्तिष्ठन् भक्षयति' इति । अत्र ब्राह्मणशब्दो जाति-मात्राश्रयपरः । नञ् पदं गुणक्रियाराहित्यं द्योतयति । गुणक्रियारहितो ब्राह्मणत्वजातिमानित्यर्थः । क्वचिज्जातिं निषेधति 'शुच्याचारं पिङ्गलं कपिलकेशं गौरं दृष्ट्वा"ऽध्यवस्यति ब्राह्मणोऽयमिति । ततः पश्चात् प्रमाणेन 'अब्राह्मणोऽयमिति जानाति । अत्र ब्राह्मणशब्दः शुचित्वादिगुणमात्राश्रयपरः, नञ् च जातिं निषेधति; ब्राह्मणत्वजातिरहितः शुचित्वादिगुणविशिष्टश्चायमिति बोधः ।

ननु आरोपितत्वस्य नञर्थत्वे 'वायौ रूपं नास्ति' 'पीतः शङ्खो नास्ति' इत्यादौ शाब्दबोधानापत्तिः । वाय्वधिकरणकरूपकर्तृकसत्तायाः, पीतशङ्खकर्तृकसत्तायाश्चाप्रसिद्धया कथमसदर्थसत्तायां विशिष्टसत्तात्वारोप इति वाच्यम् ? विशकलितानां वाय्वादीनां, प्रसिद्धेरदोषात्, मिलिताप्रसिद्धेश्चाप्रयोजकत्वात् । विशिष्टं तावन्त एव पदार्थास्ते च प्रसिद्धाः । यद्वा विशिष्टप्रसिद्धिराहार्य-रूपैव । किञ्च रूपकर्तृकसत्तायां वाय्वधिकरणकत्वम्, शङ्खकर्तृकसत्तायां पति-कर्तृकत्वञ्चारोप्यते । रूपकर्तृकाऽऽरोपितवाय्वधिकरणत्विका सत्ता इति, शङ्खकर्तृकारोपितपीतकर्तृकत्विका सत्ता इति च बोधः ।

अथवा 'नञ्'—सूत्र[1]—भाष्यपर्यालोचनेन नञोऽभावोऽर्थोऽस्तीति लभ्यते । उक्तञ्च वैयाकरण[2]—भूषणसारे—

"अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाशयात् ।
विशेषणं विशेष्यो वा न्यायतस्त्ववधार्यताम् ॥"

तत्र हि भाष्ये पूर्वपदार्थस्य प्राधान्ये 'असः' इत्यादिसर्वनामकार्याभावादि-रूपं दूषणमुक्त्वा--'अथवा पुनरस्तूत्तरपदार्थप्रधानः' इत्युक्तम् ।

अत्र पक्षे प्रतियोगितासम्बन्धेन भेदविशिष्टो ब्राह्मणः इत्यर्थे ब्राह्मणस्यैव विशेष्यतया 'अब्रह्मणमानय' इत्युक्ते ब्राह्मणस्यानयनं प्राप्नोति इत्युक्त्वा --"नैषः दोषः, इदं तावदयं प्रष्टव्य······राजपुरुषमानय" इत्युक्ते राजा विशेषकः

३—पा० सू० २।२।६
४—वैयाकरणभूषणसारः—का० ४१ ।

प्रयुज्यते, तेन राज्यविशिष्टस्यानयनं यथा भवति, तथा इहापि नञ् विशेषकः प्रयुज्यते। तेन नञ् विशिष्टस्यानयनं भविष्यति। कः पुनरसौ नञ्? निवृत्त-पदार्थकः" इति।

अत्रेदं रहस्यम्—यद्यपि 'नञ्' सूत्रभाष्यपर्यालोचनया कैयटोक्तारोपितार्थस्य साधुत्वं लभ्यते तथापि तद्भाष्यस्य भेदप्रत्यक्षे क्वचिद् योग्यानुपलब्धेर्हेतुत्व-प्रदर्शनपरतयैवोपपत्तेर्नञ आरोपवाचकत्वे तदुपष्टम्भकत्वाभावात्। अन्यथा-ऽत्यन्तासदृशे उक्तयुक्त्या तदारोपासम्भवेन तत्र नञस्तदर्थकत्वासम्भवात् 'अघटः पटः' इत्यनापत्तेः : 'प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ' इत्युक्तेः 'नीलो घट' इत्यादौ तादात्म्येन घटांशे नीलपदार्थभावान्नञ्समभिव्याहारे तादात्म्यसम्बन्धाव-च्छिन्ननीलाभावबोधस्य सर्वानुभवविरुद्धस्य नञोऽभावार्थकत्वं विनाऽनुपपत्ते— 'नेदं रजतमिदं' रजतमिति वाक्यजन्यबोधयोस्तदभावानवगाहितया परस्पर-प्रतिबन्ध्यप्रतिबन्धकभावानापत्तेश्च नञोऽभेदार्थकत्वमावश्यकम्। न च नञोऽभेदा-र्थकत्वे 'अब्राह्मणमानय' इत्यादितो ब्राह्मणभिन्नलोष्टादेरपि बोधापत्तिः? न चेष्टापत्तिः, "नह्यब्राह्मणमानयेत्युक्ते लोष्टमानीय कृती भवति" इति भाष्य-विरोधादिति वाच्यम्? घटत्वेन घटार्थकटपदात् सन्निहितव्यक्तिबोधवत् प्रकरणादिना ब्राह्मणभिन्नमात्रार्थकाद् ब्राह्मणपदात् क्षत्रियादेरेव बोधसम्भवात्। तस्मादघटो न पट इत्याद्यसमस्ते नञो भेद एव शक्तिः, भेदत्वस्याखण्डोपाधितया तस्य शक्यतावच्छेदकत्वे लाघवात्। समासघटकस्य तस्य तूत्तरपदस्य तद्भिन्ने लक्षणायां तात्पर्यग्राहकत्वमेव। न च 'न ब्राह्मणैरेतैरुपद्रुतम्' इत्यादौ नञो-भेदार्थकत्वे तत्प्रतियोग्यनुयोगिवाचकपदयोः समानविभक्तिकत्वामुपपत्तिः, सामाना-धिकरण्याभावादिति वाच्यम्? प्रतियोग्यनुयोगिनोरभेदान्वयबोधौपयिकाङ्क्षायां सत्यामेव नञाभेदबोधनेन तयोः समानविभक्तिकत्वस्य तदुपजीव्यत्वात्। एवञ्च नञा भेदबोधने प्रतियोग्यनुयोगिवाचकपदयोः समानविभक्तिवचनत्वं नियामकम्। अतएव 'भूतले न घट' इत्यादौ भेदबोधो न भवति, किन्तु अत्यन्ताभावबोधः। दृश्यते च 'यजतिषु ये यजामहं करोति नानुयाजेषु' इत्यत्र नञा पर्युदासबोधः। उक्त वाक्ये 'यजति'—शब्दो यागस्वरूपवचनः। तथा च अनुयाजभिन्नेषु यागेषु ये यजामहशब्दवन्मन्त्रं करोति—उच्चारयतीत्यर्थः। अत एवात्रानुयाजभिन्नेषु यजतिषु ये यजामहपदवन्मन्त्रप्रयोगरूपैकार्थविधानादेकविषयार्थकत्वरूपैकवाक्यत्व-मुपपद्यते। अन्यथा यागेषु ये यजामहपदवन्मन्त्रविधानमनुयाजेषु निषेधविधान-

मिति विधेयद्वयार्थकत्वरूपवाक्यभेदापत्तेः, 'ये यजामहे' पदानुषङ्गकल्पने गौरवाच्च। यत्तु केचित्[५]—

''तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः॥''

इत्यभ्युपगच्छन्तः —'अब्राह्मणः=ब्राह्मणसदृशः, अपापम्=पापाभावः, अनश्वः=अश्वभिन्नः अनुदरा=अल्पोदरा, अपशवः=नोऽश्वेभ्योऽन्ये पशवो प्रशस्ता इत्यर्थः, अधर्मः=धर्मविरुद्धः इत्यादीन्युदाहरन्ति तत्तु भेदप्रतियोगित्वप्रकारकब्राह्मणादिबोधानन्तरभाविमानसबोधमभिप्रेत्य प्रतिपादितवन्तः।

५—वैयाकरणभूषणसारे उद्धृतः—पृ० ३१३ ] चौखम्बासंस्कृतसीरिजतः प्रकाशित सं० १९९६ ]

# रामायणे असामञ्जस्यम्

## राधावल्लभः त्रिपाठी

श्रीमद्वाल्मीकिरामायणे बहुषु स्थलेषु पूर्वापरविरोधो विसंवादश्च विलोक्यते । तथाहि—

(१) अयोध्याकाण्डे वनगमनात् प्राक् रामो भाषते—

विद्धि मामृषिभिस्तुल्यं विमलं धर्ममास्थितम् । अ० १९.२०
चतुर्दश हि वर्षाणि वत्स्यामि विजने वने ।
कन्दमूलफलैर्जीवन् हित्वा मुनिवदामिषम् ॥ अ० २०-२९

एष रामस्तस्मिन्नेव सर्गे सीतां मांसेन छन्दयन् प्रदर्शितः—

निषसाद गिरिप्रस्थे सीतां मांसेन छन्दयन् ।
इदं मेध्यमिदं स्वादु निष्टप्तमिदमग्निना ।
एवमास्ते स धर्मात्मा सीतया सह राघवः ॥ अ० ९६।१-२

(२) दिवङ्गते दशरथे केकयदेशमागतान् दूतान् भरतः पृच्छति—

आत्मकामा सदा चण्डी क्रोधना प्राज्ञमानिनी ।
अरोगा चापि माता मे कैकेयी किमुवाच ह ॥ अ० २।७०।१०

भरतस्तु कैकेयीकृतरामविवासनादिवृत्तेन सर्वथानभिज्ञः कथं स्वमातुः कृत एतादृशविशेषणानि प्रयुञ्जीत ? मन्थराकृतमन्त्रणायाः प्राक् तु कैकेयी नासोदात्मकामा चण्डी क्रोधना वा, अपि तु सर्वथा प्रशस्यं चारित्र्यमेव सा प्रदर्शयामास । रामराज्याभिषेकवृत्तं श्रुत्वा सा हर्षविह्वला मन्थरायै आभूषणानि दातुमियेष—

मन्थराया वचः श्रुत्वा शयनात् सा शुभानना ।
उत्तस्थौ हर्षसम्पूर्णा चन्द्रलेखेव शारदी ॥
अतीव सा तु सन्तुष्टा कैकेयी विस्मयान्विता ।
दिव्यमाभरणं तस्यै कुब्जायै प्रददौ शुभम् ॥
दत्त्वा त्वाभरणं तस्यै कुब्जायै प्रमदोत्तमा ।
कैकेयी मन्थरां दृष्ट्वा पुनरेवाब्रवीदिदम् ॥
इदं तु मन्थरे मह्यमाख्यातं परमं प्रियम् ।
एतन्मे प्रियमाख्यातं किं वा भूयः करोमि ते ॥ अ० ७।३१-३४

एतादृशशीलसम्पन्नायाः कैकेय्याः कृतेऽविज्ञातरामविवासनादिवृत्तस्य भरतस्य मुखादुपर्युक्तविशेषणानां प्रयोगो न युज्यते ।

(३) चित्रकूटे रामभरतसमागमप्रसङ्गो विद्यते । भरतः प्रथमं रामाय पितुर्मरणवृत्तमावेदयति, रामश्चोदासीनः कमपि शोकमप्रकटयन् अज्ञातपितृमरणवृत्तान्त इव केवलं राज्याय स्वकीयामनिच्छां प्रकटयन् भरतं परावर्त्तनाय प्रबोधयति।[1] अग्रिमे सर्गे भरतः पुनः पितृनिधनं निवेदयति,[2] तच्छ्रुत्वा रामः शोकेन गतचेतनो जायते, संज्ञामुपलभ्य च करुणं विलपति ।[3] अत्र भरतस्य द्विः पितृनिधननिवेदनं, प्रथमं रामस्य उदासीन इव स्थितिः, द्वितीयनिवेदने च शोक इति विसङ्गतिः ।

(४) अरण्यकाण्डस्य चतुर्थसर्गे एकस्मिन् पद्ये कविः कथयति—लक्ष्मणो विराधं श्वभ्रे प्राक्षिपदिति ।[4] अग्रिमे पद्ये पुनः कविराह—

तमाहवे दारुणमाशुविक्रमौ स्थिरावुभौ संयति रामलक्ष्मणौ ।
मुदान्वितौ चिक्षिपतुर्भयावहं नदन्तमुत्क्षिप्य बलेन राक्षसम् ॥ ४।२९

अनन्तरं पुनः कविस्तमेवार्थं विवृणोति----

प्रहृष्टरूपाविव रामलक्ष्मणौ विराधमुर्व्यां प्रदरे निपात्य तम् ।
ननन्दतुर्वीतभयौ महावने दिविस्थितौ चन्द्रदिवाकराविव ॥४-३३

अत्र प्रथमं लक्ष्मणेन विराधस्य श्वभ्रे प्रक्षेपणं निरूप्य पुना रामलक्ष्मणाभ्यां तस्य प्रक्षेपणमिति पूर्वापरविरोधः ।

(५) तस्मिन्नेव काण्डे प्रणयाभिलाषिणीं शूर्पणखां राम आह—

अनुजस्त्वेष मे भ्राता शीलवान् प्रियदर्शनः ।
श्रीमानकृतदारश्च लक्ष्मणो नाम वीर्यवान् ॥१८-३

अत्र पूर्वनिरूपितलक्ष्मणविवाहेन विसङ्गतिर्विद्यते रामस्योक्तेः । रामेण शूर्पणखाया मनो लक्ष्मणं प्रति विलोभयितुमकृतदारोऽयमित्यसत्यभाषणं कृतमिति विरोधस्यास्य परिहारोऽपि कर्त्तुम् शक्यते ।

(६) अरण्यकाण्डे शूर्पणखाप्रसङ्गे कविः कथयति—

सुमुखं दुर्मुखी रामं वृत्तमध्यं महोदरी ।
विशालाक्षं विरूपाक्षी सुकेशं ताम्रमूर्धजा ।

---

(१) अ० १०१।५; १०१।१६-२७
(२) अ० १०२।५,६; (३) १०३।१-४, १०३।८-१८
(३) विराधं प्राक्षिपच्छ्वभ्रे नदन्तं भैरवस्वनम् । अर० ४।२८

न्यायवृत्तं सुदुर्वृत्ता प्रियमप्रियदर्शना ।
शरीरजसमाविष्टा राक्षसी राममब्रवीत् ॥
प्रियरूपं विरूपाक्षी सुस्वरं भैरवस्वना ।
तरुणं दारुणा वृद्धा दक्षिणं वामभाषिणी ॥ अर० १७।१०-१२

अनेनोपोद्घातेन स्पष्टं प्रतीयते यत् प्रथममेव शूर्पणखाविकरालवेषेणैव राघवस्य पुरत उपस्थितेति तस्मिन्नेव प्रसङ्गे तस्मिन्नेव रूपे संस्थिता सा रामेणोच्यते—'त्वं हि तावन्मनोज्ञाङ्गी राक्षसी प्रतिभासि मे'—(अर० १७।१९) इति । रामस्य वचने न प्रतिभाति परिहासस्य लवोऽपि । तर्हि कथमस्य विरोधस्य परिहार: कर्त्तुम् शक्य इति चिन्त्यम् ।

(७) बालकाण्डस्य विंशसर्गे रामस्यावस्था षोडशवर्षान्न्यूना प्रदर्शिता विश्वामित्रागमनसमये।[१] अरण्यकाण्डे मारीचो रावणाय रामस्य विश्वामित्रेण वनगमनवृत्तान्तं विवृण्वन् रामस्यायुस्तस्मिन् समये द्वादशवर्षान्न्यून इति प्रतिपादयति ।[२] अनन्तरमस्मिन्नेव काण्डे सीता वनगमनसमये रामं पञ्चविंशवर्षकल्पं स्वात्मानं चाष्टादशवर्षदेशीयां ख्यापयति । द्वादशवर्षाणि विवाहानन्तरं मया दशरथभवने उषितानीत्यपि तया अत्रैव भणितम् ।[३] तेनोद्वाहसमये सीताया आयुः षट्वर्षकल्पं रामस्य त्रयोदशवर्षकल्पं सिद्धयति । तेन बालकाण्डे दशरथस्य विश्वामित्रं प्रति 'ऊन–षोडशवर्षो मे रामो राजीवलोचन' इति वचो न सङ्गच्छते ।

(८) अथ किष्किन्धाकाण्डस्यैकः प्रसङ्गः पर्यालोचनीयः । रामसुग्रीवयोरग्निसाक्षिके सख्ये जाते सुग्रीवः सालस्यैकां शाखामास्तीर्य सराघवो निषसाद, हनूमांश्च लक्ष्मणाय चन्दनशाखामासनाय ददाविति वर्णनं प्राप्यते—

ततः सुपर्णबहुलां भङ्क्त्वा शाखां सुपुष्पिताम् ।
सालस्यास्तीर्य सुग्रीवो निषसाद सराघवः ॥
लक्ष्मणायाथ संहृष्टो हनुमान्मारुतात्मजः ।
शाखां चन्दनवृक्षस्य ददौ परमपुष्पिताम् ॥ ५।२०-२१

तदनु तस्मिन्नेव प्रसङ्गे सुग्रीवानुचरैः सीताभरणानयनं, तद्दृष्ट्वा रामकृतं

१. ऊनषोडशवर्षो मे रामो राजीवलोचनः ।
न युद्धयोग्यतामस्य पश्यामि सह राक्षसैः ॥ बाल० २०।२
२. ऊनद्वादशवर्षोऽयमकृतास्त्रश्च राघवः । अर० ३८।६
३. उषित्वा द्वादशसमा ईक्ष्वाकूणां निवेशने ।
भुञ्जाना मानुषान् भोगान् सर्वकामसमृद्धिनी ॥ अर० ४७।४

परिदेवनं सुग्रीवेण रामस्याश्वासनम्, रामकृतां वालिवधप्रतिज्ञां च वर्णयित्वा कविस्तमेवार्थं पुनरपि विवृणुते--

तस्यैकां पर्णबहुलां शाखां भङ्क्त्वा सुशोभिताम् ।
रामस्यास्तीर्य सुग्रीवो निषसाद सराघवः ॥
तावासीनौ ततो दृष्ट्वा हनुमानपि लक्ष्मणम् ।
शालशाखां समुत्पाट्य विनीतमुपवेशयत् ॥

रामसुग्रीवलक्ष्मणानां सकृदुपवेशनं निरूप्य अनन्तरं तेषां परिदेवन-वार्त्तालाप-समाश्वासनादिकानां वर्णयित्वा पुनस्तेषां सालशालयोरुपवेशनस्य वर्णनं न केवलं पुनरुक्तिरपितु महती असङ्गतिरपि ।

( ९ ) किष्किन्धाकाण्डे वालिसुग्रीववृत्तान्तस्य प्रसंगो विद्यते । तत्रैकस्मिन् स्थले दुन्दुभिसुतं मायाविनामकं दानवं हत्वा वालेः पुनरागमनं सुग्रीवमन्त्रिणो बद्ध्वा पुरुषवाक्यकथनमिति वृत्तमुपवर्णितम् । सुग्रीवो वालिनो दुश्चेष्टितं भ्रातृ-गौरवयन्त्रितस्तूर्णीं सहते ।[1] अनन्तरं वाली असुरं हत्वा पुरीं प्रविष्टः सुग्रीवश्च तं यथाविधि सदकरोदिति वृत्तं पुनः कथितम् ।[2] बालिनः पुर्यामागमनं सकृत् वर्ण-यित्वा तदनु तस्य चेष्टितमपि कथयित्वा अनन्तरं पुनः पुर्यां बाल्यागमनवर्णन-मित्यत्रायं विसंवादः ।

( १० ) किष्किन्धाकाण्डस्य चतुर्थसर्गे हनूमान् रामं साक्षात्कर्त्तुं प्रस्थितः भिक्षुवेषमास्थाय रामेण संगच्छते । रामस्य परिचयं सम्प्राप्यासौ भिक्षुवेषं परित्यज्य रामलक्ष्मणौ पृष्ठमारोप्य सुग्रीवसकाशं समायाति ।[3] अथ पुनः पञ्चमे सर्गे सुग्रीवसकाशमागत्य कपिर्भिक्षुरूपं तत्याज इति कवेर्वचो न सङ्गच्छते ।[4]

---

१. राज्यं प्रशासतस्तस्य न्यायतो मम राघव ।
आजगाम रिपुं हत्वा दानवं स तु वानरः ॥
अभिषिक्तं तु मां दृष्ट्वा क्रोधात् संरक्तलोचनः ।
मदीयान्मन्त्रिणो दृष्ट्वा पुरुषं वाक्यमब्रवीत् ।
निग्रहे च समर्थस्य तं पापं प्रति राघव ।
न प्रावर्तत मे बुद्धिर्भ्रातृगौरवयन्त्रिता ॥ अर० ६।२१-२३

२. हत्वा शत्रुं स मे भ्राता प्रविवेश पुरं तदा ।
मानयंस्तं महात्मानं यथावच्चाभिवादयन् ॥ अर० ९।२४

३. भिक्षुरूप परित्यज्य वानरं रूपमास्थितः ।
पृष्ठमारोप्य तौ वीरौ जगाम कपिकुञ्जरः ॥ ४।३४

४. ततो हनूमान् सन्त्यज्य भिक्षुरूपमरिन्दमः । ५-१३

(११) तस्मिन्नेव काण्डे हृते वालिनि विलासप्रसक्तं सुग्रीवं सीतान्वेषणाय प्रेरयितुं क्रुद्धो लक्ष्मणः किष्किन्धां प्रविवेश इति,[1] तं रोषवशमापन्नं वीक्ष्य भयपरीताङ्गा वानरा विद्रुता इत्यपि वर्णनं दृश्यते।[2] अग्रिमे सर्गे हनुमत्सुग्रीवयोः संवादं वर्णयित्वा तदनु कवि पुनः किष्किन्धायां लक्ष्मणस्य प्रवेशं निरूपयति।[3] अत्रापि पुनरुक्तिरसङ्गतिश्च दृश्येते, सकृत्प्रविष्टे लक्ष्मणे, पुनस्तत्प्रवेशवर्णनात्।

(१२) तस्यैव काण्डस्य चत्वारिंशसर्गे रामः सुग्रीवमाह—

ज्ञायतां सौम्य वैदेही यदि जीवति वा न वा।
स च देशो महाप्राज्ञ यस्मिन् वसति रावणः॥ ११

सुग्रीवोऽपि तत्रैव विनतं नाम यूथपं निर्दिशति—

अधिगच्छ दिशं पूर्वां सशैलवनकाननाम्।
तत्र सीता च वैदेही निलयं रावणस्य च।
मार्गध्वं गिरिदुर्गेषु वनेषु च नदीषु च॥ ४०।१८-१९

एतेन रामसुग्रीवौ रावणावसतिं न जानीत इति स्पष्टं प्रतीयते। किन्तु तत्रैवाग्रिमसर्गे दक्षिणस्यां दिशि लङ्कायां रावणो वसतीति सुग्रीवः कथयति—

द्वीपस्तस्यापरे पारे शतयोजनविस्तृतः।
अगम्यो मानुषैर्दीप्तस्तं मार्गध्वं समन्ततः॥
तत्र सर्वात्मना सीता मार्गितव्या विशेषतः।
स हि देशस्तु वध्यस्य रावणस्य दुरात्मनः।
राक्षसाधिपतेर्वासः सहस्राक्षसमद्युतेः॥ ४१।२३-२५

प्रथमं सुग्रीवस्य रावणवसतिविषयकमज्ञानं सूचयित्वा ततश्च तन्मुखात् राक्षसराजस्यावसथं वर्णितमित्ययमत्र पूर्वापरविरोधः।

(१३) सुन्दरकाण्डे द्वाविंशसर्गे रावणो सीतां बहुविधं भयं प्रदर्श्य मासद्वयावधि निधार्य स्ववेश्म प्रविवेश इति कथितम्।[4] अग्रिमे सर्गद्वये रावणे गते राक्षसीभिः सीतायास्तर्जनं, तदनु पञ्चविंशे सीताया विषादः षड्विंशे च तस्या आत्मघातविनिश्चयः सप्तविंशे कविः कथयति—

१. कि० ३१।९
२. कि० ३१।२०
३. कि० ३३।१
४. सु० २२।४६

सा राक्षसेन्द्रस्य वचो निशम्य तद्रावणस्याप्रियमप्रियार्त्ता ।
सीता वितत्रास यथा वनान्ते सिंहाभिपन्ना गजराजकन्या ।।२८१।।

रावणस्तु द्वाविंशे सर्ग एव सीतां तर्जयित्वा प्रयातः । तदनु अग्रिमेषु पञ्च-सर्गेषु नास्ति क्वचिदपि सीतारावणयोः संवादो रावणस्य पुनरागमनप्रसङ्गो वा । तेन अष्टाविंशसर्गे त्रिजटाकृतसमाश्वासनानन्तरं राक्षसेन्द्रस्य वचनं निशम्य सीता वितत्रास इति वचोऽसङ्गतम् ।

(१४) रावणं विजित्य रामोऽयोध्यायां परावर्त्तते । भरताय पूर्वसूचनां प्रदातुमसौ हनूमन्तं प्रेषयति । हनूमत्कथितं रामस्यागमनं श्रुत्वा भरत आह—

बहूनि नाम वर्षाणि गतस्य सुमहद्वनम् ।
शृणोम्यहं प्रीतिकरं मम नाथस्य कीर्त्तनम् ।।युद्ध० १२६·१।।

एतेन भरतो रामस्य वृत्तान्तेनाद्यावध्यनभिज्ञ इति सुस्पष्टं ध्वन्यते । अथानन्तरं भरतः पृच्छति—

राघवस्य हरीणां च कथमासीत् समागमः ।
कस्मिन् देशे किमाश्रित्य तत्त्वमाख्याहि पृच्छतः ।। १२६.३

यदि भरतो वने रामस्य यद् यद् वृत्तं तेनानभिज्ञः, मानुषरूपधारिणो[१६] हनुमत एव इदम्प्रथमतया यद्यसौ रामोदन्तमुपलब्धवान्, हनुमतापि च राम-सुग्रीवयोर्मैत्री वानरैश्च समागमस्तस्मै न निवेदिते, तर्हि कथमसौ अज्ञातवृत्तान्त इव पपृच्छ—राघवस्य हरीणां च कथमासीत् समागम इति ।

उपरिलिखितचतुर्दशस्थलेषु चत्वारि श्रीमद्भी रामजीउपाध्यायमहाभागैरपि स्वकीये संस्कृतसाहित्येतिहासग्रन्थे प्रदर्शितानि । रामायणस्य कानिचित् स्थलानि न वाल्मीकिना विरचितान्यपितु इतरकविभिः सङ्कलितानीति मतं तैस्तत्र प्रकटितम् ।[१७] रामकथानुबन्धीनि बहुविधान्याख्यानानि जनतायां प्रचलितान्यासन् । तैस्तैः कविभिः कुशीलवैः स्वरुच्यनुकूलमेतेषां कथांशानां समावेशो रामायणे विहितः । अत एव रामायणे पूर्वापरविरोधो यत्र तत्र स्फुटति । रामायणे बहुषु स्थलेषु पुनरुक्तयः पिष्टपेषणं च दरीदृश्यते । इत्थमेतादृशदोषैर्युक्तानि स्थलानि नैकस्य कवेर्भवितुमर्हन्ति ।

१६. युद्ध १२५।१६
१७. संस्कृतसाहित्य का आलोचनात्मक इतिहास-डॉ० रामजी उपाध्याय ( द्वितीयसंस्करणम्--प्रथमो भागः ) पृ० १४५-१४६

कथांशेषु यत्र तत्र भासमानो विरोधो मतमिदं पोषयति । विण्टरनिट्ज-महाभागस्य मते रामायणे पूर्वापरविरोधस्य द्वे कारणे स्तः—रामायणस्य रचनायाः प्राक् रामकथा राजसभायां सूतादिकैः जनतायां च कुशीलवैर्गीयते स्म, वाल्मीकिनामधेयश्च कश्चित् कविः सूतादिकानां कुशीलवानां च रचनाः सङ्कलय्य सुशृङ्खलेन सुसम्बद्धेन च रूपेण ताः संयोजयामास ।[1] अन्यच्च—रचनायां जातायामपि नैकैः शतकैः वाल्मीकेः काव्ये कुशीलवादिकैर्मूलकथायां यथेच्छं परिवर्त्तनं विहितम् ।[2]

रामायणकाव्यस्य समारम्भः सूतादिकैर्विहित इति विण्टरनिट्जमतस्य दासगुप्तमहाभागेन खण्डनमकारि ।[3] सूतादिप्रवर्त्तितानि काव्यानि वाल्मीकिना सङ्कलितानीत्युक्तिरप्यनौचित्येन प्रवर्त्तिता खलु विद्यते । किन्तु वाल्मीकेः रचनायां परवर्त्तिकविभिः कुशीलवैः मातृकालेखकैः बहुशः परिवर्त्तनं कृतमिति नास्ति संशीतिलेशः ।

---

1. and we have no reason to doubt that a poet of this name really lived and shaped that the ballads which were scattered in the mouths of the bards into the form of a united poem.

---Hiitory of Indin Lietrature; Vol. 1, Winternitz, p. 475.

2. We must imagine the Ramayana having been orally transmitted for a long time......perhaps through centuries in the circles of travelling singers like the kusa and lava ......These singers and min strels regarded the epic songs as their property, with which they could take every kind of liberty.

---Ibid, p.497

3. History of Sanskrit Literature : S. N. Dass Cupta & S. K, De ( Inrroduction )

# शोधनवनीतम्

म० ज० कशालीकरः

जैनसंस्कृतकविषु हेमचन्द्रः (१०९३-११७३ ई०) अग्रगण्यः। तेन त्रिषष्टिशलाकापुरुषचरितमहाकाव्ये दशपर्वसु त्रिषष्टिमहात्मनां चरितानि वर्णितानि। तत्र अष्टमे पर्वणि कृष्ण-बलराम-कौरव-पाण्डव-जरासन्ध-सम्बद्धाः कथा अप्युपनिबद्धाः। अस्य पर्वणो द्वितीये सर्गे हरिवंश-यदुवंशीयानां राज्ञां पूर्वजानां विवरणमुपनिबद्धम्। षष्ठे सर्गे कृष्णस्य विवाहान् वर्णयित्वा पाण्डवानां पूर्वचरित्रं चित्रितम्। सप्तमे सर्गे यादवानां जरासन्धेन सह युद्धो वर्णितः। हैमचन्द्रानुसारं कौरवा अस्मिन् संग्रामे जरासन्धस्य पक्षे युद्धमाचेरुः। अस्मिन्नेव युद्धे कौरवा पाण्डवैर्निहताः। ततः परं दशमसर्गे विचित्रा काश्चन कथा गुम्फिताः। तत्र पद्माख्येन भूभुजा याज्ञसेन्या अपहरणं, कृष्णेन तस्या मोचनं, कृष्णेन शप्तानां पाण्डवानां देशनिर्याणं चोपवर्णितम्। देशान्निर्गताः पाण्डवा पाण्डु-मथुरानाम्नीं पुरीं निर्ममिरे, अन्ततश्च तीर्थङ्करनेमिनाथ-वासुदेवकृष्णयोर्निर्वाणवृत्तमुलभ्य दुःखकर्शिताः प्रायोपवेशेन प्राणांस्तज्यतुरित्यपि कथानकोऽत्र दृश्यते। इत्थं हेमचन्द्रस्य महाभारतकथा व्यासकृतमहाभारतादत्यन्तमेव विभिद्यते। हेमचन्द्रेण जैनधर्मप्रचाराय कथायाम् अस्यां स्वमतयनुकूलं परिवर्त्तनं विहितम्। समसामयिकपरिस्थितीनामपि व्यापकः प्रभावो हेमचन्द्रीयकथायां दृश्यते। अन्यच्च—हेमचन्द्रस्योपजीव्यं व्यासकृतमहाभारताद् भिन्नमपरं महाभारतं किमप्यासीदित्यपि सम्भाव्यते।

—Journal of Oriental Institute, Baroda March 1970

# ग्रन्थसमीक्षा

## कविरभिनवगुप्तः

जे० एल० मेसनः

अभिनवगुप्तविरचितपद्यानि तत्कृतदार्शनिककाव्यशास्त्रविषयकग्रन्थेषु यत्र तत्र बहुशो विकीर्णानि। तन्त्रसारनाम्निग्रन्थे प्रत्येकस्याध्यायस्य समाप्तौ साररूपेणैकं पद्यं समुपस्थापितम्। तन्त्रालोकस्तु सर्वांशतया पद्यात्मक एव।

अभिनवगुप्तस्य कानिचित् पद्यान्यतीव रुचिराणि सन्ति। किन्त्वेतेषां पद्यानां भाषासरणिर्न तथा चमत्कारकारिणी यथा तत्रोपस्थापितं वस्तु। अभिनवस्य काव्यं दार्शनिकताया आग्रहेण ग्रथिलं सञ्जातम्। तस्य रुचिर्जटिलतायां विद्यते न सरलतायां, स्थूलस्य स्थाने अमूर्त्तमेवासौ वृणुते। तस्य कविता सायासं निर्मिता प्रतिभाति आनन्दवर्धनोपस्थापितसिद्धान्ताश्च तत्र सप्रयत्नमादर्शीकृताः।

---Journal of Oriental Insistute, Baroda March '70

## होल्करवंशम्

सौ० रेवती देशपाण्डे

होल्करवंशमहाकाव्यं प्रायशः १९१० ई० वर्षे इन्दौरनगरवासिना श्रीरावजि-वासुदेव-टुल्लू इत्यभिधानभाजा विरचितम्। काव्यमिदं अद्यतः अतीतेषु पंचोत्तरपंचाशद्वर्षेषु होलकरसंस्कृतविद्यालयस्य (आधुनिकसंस्कृतोपाधिमहाविद्यालस्य) 'त्रैमासिक'-पत्रे प्रकाशमुपगतम्। कुमारसम्भवस्यानुकरणपूर्वकमस्य प्रारम्भिक-पद्यमित्थं गुम्फितम्—

अस्त्युत्तरस्यां दिशि मालवाख्यो
देशः समृद्धो यशसोन्नतश्रीः।
यत्रास्ति विन्ध्यः स नगेन्द्रगण्यो
हृतस्मयो नामित-तुङ्ग-शृङ्गः ॥१·१॥

महाकाव्येऽस्मिन् उच्चस्तरीया काव्यसर्जना, रमणीयाः कल्पना प्रसन्नमधुरा वैदर्भीरीतिश्च विलसन्ति। प्रकृतिवर्णनमपि हृदयावर्जकम्। तद्यथा रात्रि-वर्णनम्—

असंख्यतारोल्लसदभ्रमण्डपो
ग्रहावलिप्रोज्ज्वलदीपधारकः।
अखण्डताराधिपगोलदीपको
विनिर्मितः सत्कृतये नु वेधसा ॥२·३॥

उत्साहप्रदीपिका राष्ट्रिया भावनाप्यत्रोल्लसति—

कथं विदेशीयपदं सहध्वे
दुःसह्यभारं प्रियनन्दना मे।
निःसारणायास्य यदा यतध्वे
तदार्थवन्नन्दनतां लभध्वम् ।।१·४६।।

—अहिल्या ( स्मारिका ) १९७०

## अहल्याचरितम्—अनुशीलनमेकम्

श्री स० का० दीक्षितः

श्री सखारामशास्त्रिभागवतविरचितम् अहल्याचरितमहाकाव्यं विंशशतकस्य महाकाव्येषूत्कृष्टं स्थानमर्हति। अत्र सप्तदशसर्गेषु १२६१ श्लोकाः गुम्फिताः। महाकाव्येऽस्मिन् स्थाने स्थाने सहृदयकवेर्न्याय-वेदान्त-काव्यशास्त्र-प्राचीनकाव्यानां गहनमनुशीलनं प्रतिबिम्बितं विद्यते। महाकाव्यस्य ऐतिहासिकता स्फुटास्ति। कविना वहुविधदुष्प्राप्यशिलालेखादीनां अध्ययनं कृत्वाऽत्र तिथिविषयिकाः प्रचलितभ्रान्तधारणा निराकृताः। कालिदासस्य प्रभावोऽत्र स्फुटं भासमानो वर्त्तते। शब्दालंकाराणां प्रयोगश्चातुर्येण विहितः तद्यथा—

मधुरं मधु मादकं मुदा सततं तं स्वजनैर्निपीतवान्।
प्रियराज ममाद्य जाह्नवीजलमेतद्धि समर्प्यते तव ।। ( ५।२२ )

अहिल्यायाः सैनापतित्वे सज्जितस्य स्त्रीणां सैन्यस्य वर्णनमपि मनोहरम्—

काञ्चीगुणैरुल्लसितास्तदास्तत् स्त्रियः परं खड्गविराजमानाः।
मनोहरा यद्यपि ताः परेषां युद्धे तथा प्राणहरा बभूवुः ।।
भावैर्मनोरञ्जककार्यकर्त्र्यः खड्गैः खरैः शात्रवशीर्षहर्त्र्यः।
तदा बभूवुः सकलाः स्त्रियस्ता हेतुश्च राज्ञी कुशलात्र नान्यः ।।

सादिन्यस्ता वारबाणाहितान्यो
वादिन्यस्याच्छिन्दि भिन्धीति शब्दान्।
अग्रे स्थातुं धावमानाः स्वसैन्या-
च्छत्रूञ्जेतुं शीघ्रमत्युत्सुकाश्च ।।

मालतीनियतकुन्तलहस्ताश्चन्द्रहाससुविराजितहस्ता ।
वर्णिता कविभिरप्यबलास्तास्सम्बभुर्वलयुता अतिचित्रम् ॥

तत्रैव ( ६।४९-५२ )

[ प्रस्तोता: राधावल्लभः त्रिपाठी]

**निरुक्तमीमांसा** : पं० श्री शिवनारायणशास्त्री,

प्र० इण्डोलॉजिकल बुक हाउस, वाराणसी । मू० २५ रूप्यकाणि ।

ग्रन्थे ऽस्मिन्नूनत्रिंशदध्यायेषु यास्कीयनिरुक्तस्यानुशीलनं प्रस्तुतम् । प्रथमे-
ऽध्याये निरुक्तशास्त्रस्य कथमुद्भवः सञ्जात इति विषयमवलम्ब्य गवेषणापूर्णं
व्याख्यानमुपनिवद्धम् । निर्वचननिरुक्तशब्दद्वयस्य वैशिष्ट्यमप्यत्र प्रकाशितम् ।
द्वितीयेऽध्याये यास्ककृतनिघण्टोः पाठद्वयस्य चर्चा विद्यते । तत्र लघुपाठ-बृहत्-
पाठयोः किमन्तरमिति सम्यक् विमृष्टम् । तृतीयेऽध्याये निघण्टोः प्रतिपाद्य
विवेचितम् । निघण्टुनिरुक्तयोः रचयिता क इति प्रश्नं विषयीकरोति । अत्र यास्क
एव निघण्टुकर्त्तेति प्रमाणितम् । पञ्चमेऽध्याये निरुक्तस्य पाठद्वयं तत्र विभेदश्च
दर्शितः । षष्ठे च निरुक्तस्य परिशिष्टं प्रामाणिकं न वेति प्रश्नो विचारितः ।
तत्र विभिन्नमतानामुल्लेखं विधाय परिशिष्टं यास्करचितमेवेति लेखकः प्रतिपाद-
यति । सप्तमेऽध्याये निरुक्तस्य प्रतिपाद्यो विषयो विवेचितः । अष्टमे निरुक्त-
कारयास्कस्य विषय ऐतिहासिकी सामग्री समुपस्थापिता । नवमेऽध्याये निरुक्त-
स्योपयोगिता प्रतिपादिता । दशमाध्यायात् पञ्चविंशं यावत् मन्त्राणामर्थः,
पदविभागः, नामाख्यातयोर्विवेचनम्, उपसर्गाः, निपाताः, निर्वचनसिद्धान्ताः,
देवभावना, देवानां संख्या तेषां भेदाश्चेत्यादयो विषया निरुक्तमतेन विवेचिताः ।
षड्विंशेऽध्याये निरुक्तस्य सांस्कृतिकी भूमिका समुद्घाटिता । अत्र वर्णाश्रमव्यवस्था,
नारी-स्थितिः, सामाजिक-धार्मिका आचाराश्चेत्यादयो विषया निरूपिताः ।
सप्तविंशेऽध्याये यास्कस्य दर्शनं विवेचितम् । अत्र ब्रह्मजीव-प्रकृतिविषये यास्कस्य
चिन्तनं समुन्मीलितम् । अष्टाविंशेऽध्याये व्याकरण-काव्यशास्त्रयोः कृते यास्कस्य
महान् दायो वर्त्तत इति सोदाहरणं प्रतिपादितम् । ऊनत्रिंशेऽध्याये निरुक्त-व्या

रणयोः सम्बन्धः, निरुक्ताध्ययनस्यैकाङ्गिता, पाठसम्पादन-योजना तथा चान्ये स्फुटविषया विलसन्ति ।

निरुक्तमधिकृत्य पूर्वसूरिणामभिमतानि स्थाने-स्थाने संशोध्य शास्त्रिणा स्वकीयमनुसन्धानकौशलमादर्शीकृतम् । न केवलं निरुक्तस्यापितु पूर्वापरसमग्र-ग्रन्थानां तत्सम्बन्धि सम्यगालाडनमत्र प्रतिभासते । ग्रन्थोऽयं शोधरतानां विदुषामुपयोगाय भविष्यतीत्याशास्महे ।



## विमुक्तिः

डॉ० वे. राघव

डा० राघवमहोदयानां विमुक्तिर्नाम प्रहसनं संस्कृतसाहित्ये नूनं नूतन एवोपक्रमः । अत्र कविकोकिलेनानेन सर्वाण्यपि पात्राणि प्रतीकपरमार्थतयोपनिबद्धानि । अथाप्ययमत्र विशेषो यदिमानि प्रबोधचन्द्रोदय इवात्र वाच्यभावं न स्पृशन्ति । तानि हि तदैव प्रतीकतया प्रतीयन्ते यदा प्रहसनपरिपूर्तौ—

"ईशस्त्वं, पुरुषोस्मि, गेहमिह मे देहं, स दंष्ट्री यमः,
सा भार्या प्रकृतिः, गुणा भगिनिकाः, माया च तासां प्रसूः ।
षट् पुत्रा मन-इन्द्रियाणि, नगरं लोको, विमुक्त्यै ततः
सत्त्वस्था प्रकृतिः, तथा प्रहसनं दृष्ट्वा जना जानताम् ॥"

इति भरतवाक्यं श्रूयते । एतेन हि प्रेक्षकस्य चित्तं पूर्वं वाच्ये विश्राम्यति येन हि प्रतीयमानं वस्तु प्रतीयमानमेव तिष्ठति, ध्वन्यात्मतां वासादयति, विदग्धजनवन्द्याम् । प्रबोधचन्द्रोदयादिषु पुनः प्रतीयमान एवार्थः प्रमुखमुपसीदति येन सुसंदृब्धोऽपि लोकवृत्तान्तः स्वप्नसोदरायते । परिधानविहीनं सुभगाशरीरमिव तं सहृदया जुगुप्सैकसाधनं मन्येरन्, न तु रसौपयिकम् । वस्तुतस्तु य इमे लोकभागा एतेषां सत्यपि ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वे न नास्त्यविद्यावधूकटाक्षविक्षेप-

सौभगानुयोगित्वम् । यच्चेदं तथाकथितं ब्रह्म तदपि यत्परिहारैकसुलभकैवल्यं स करणग्राम एव हि लोके पुरस्स्फूर्तिकः । ततश्च नन्दिरुद्र एव हि पूर्वं पूज्यः परमेश्वरः पश्चात् । वाच्यरूपा विद्योपाधिरेव हि तेन पूर्वमुपास्यः, प्रतीयमान-रूपमुपनिषत्तत्त्वं ततः परम् । येन पुनरविद्यामपास्य ब्रह्मैव साक्षाज्जिघृक्ष्यते स किलाविभिद्यैव जटात्वचौ नालिकेररसं पिपासति । का नु चमत्कृतिस्तस्य महामतेः कविकर्मणि । विमुक्तौ किल स्थितिरियं परित्यक्तविपर्यया सुप्रतिष्ठ-दात्मौचितीरहस्यमुद्रा च लभ्यते ।

वाकोवाक्यमत्र गद्यमात्रोपनिबद्धमिति संवादेष्वप्यत्र स्वाभाविकतैव ।-संगीतनिगडिता ह्युक्तिः काकुप्रसरं संकोचयन्ती स्वभावविरुद्धत्वमेव केवलं राजा नयति । विमुक्तिस्ततो विमुक्तैव । अयमेषां गद्यवाक्यानामपरो विशेषो यदेषु लोको-क्तिबहुलत्वेन शिष्टजनोचितव्यवहारपेशलत्वं प्रतिपदं जागर्त्ति । जाया पत्युः, पतिश्च जयायाः प्रसादसौमनस्याय कलहोत्तरं कथमिव प्रवर्त्तेते, वाचाटैरपत्यैः अकुटिल-चेतसः पितरः किमिव प्रतार्यन्ते, चपलाभिः श्यालिकाभिरार्द्रहृदया भावुकाः कीदृ-गुत्तानीक्रियन्त इति विमुक्तिः प्रत्यक्षं प्रस्तुवन्ती "सर्वस्य नाट्यं भावानुकीर्तनम्" इति भरतोक्तिं सत्यापयति । एतासु कूटकलासु युवभिः सुखेन विनयो लब्धुं शक्यते इति यत्सत्यं महदुपकारि श्रीमतां राघवमहोदयानां शिल्पमिदं तेभ्यः ।

प्रहसनमिदं शृंगारप्रगुणमपि श्लीलतां न त्यजति । वाचिकाभिनयप्रचुर-मप्यांगिकमभिनयं न शिथिलयति, संस्कृतधेनुं दुहानमपि सभ्यतापेशलिमानं न तिरस्करोति । तेन कान्तासंमित उपदेशकर्मणि सर्वथा प्रबलत्वमेव तेनाज्यते ।

अत्र द्विजानां दुर्भगां गतिं मायायाः कर्कशत्वं च प्रख्याप्य मन्ये सकविनानेन गृहीतदण्डा दण्डिन एव प्रेक्षकधुरि नियोजिताः, न तु समुपात्तताम्बूलिदलकरंकषण्डा गृहिणः । गृहिणो हि धूता-वसन्तसेनयोरेव स्पृहयालवो दृश्यन्ते ययोरेका चतुस्स-मुद्रसारभूतामेकावलीम् अपरा च प्राणाधिकानि रत्ताभरणानि तृणीकृत्य प्रियं प्रणयिनं चोपास्ते इयमेव हि सांसारिकी स्थितिः । संसारे हि रस एव केवलो भगवान्, न तु तद्रूपतामासाद्य मोदमानं किमपि ब्रह्म, तद्धि प्रतिसंसृतौ भगवदायेत । जगन्नाट्यमिदं यस्य नटराजस्य शिल्पं तत्र का नु बीभत्सता, का च बीभत्सता

तस्य सौन्दर्यसर्वस्वभूतायां भगवत्यां पर्वतराजपुत्र्याम् । यदिदं द्वैतं तदेव एतत् सर्वम् । अस्मिन् सर्व—रूपिणि शर्वे, शर्वात्मनि च नियतिमुल्लंघ्यार्जितैकशेष-भावायां शर्वाण्यां च किं नु तद् यत्र विक्रियालेशो-प्यनुभूयेत । ततः उमाकृतव्यतिकरे स्वांगे श्रीपरमशिवेन विभक्तमिदं रूपकशिल्पं भारतीयेषु विडम्बनागर्हां कथमपि न स्पृशति । एवं च ब्रह्मदिशा जगदिदं नाट्यवस्तुनि परिहासास्पदतां न ह्येव भजतीति केवलमेतद्विपर्ययमेव विमुक्तौ प्रेक्षामहे ।

राघवमहोदयाः संस्कृतसाहित्ये सांप्रतमाचार्यत्वेनापि प्रथितयशसः । एतेषां काव्यकौशलमभिवीक्ष्य राजशेखरः प्रसभमेव स्पृशति चेतनाम्—

कश्चिद् वाचं रचयितुमलं भोक्तुमेवापरस्तां
कल्याणी नो मतिरुभयथा विस्मयं नस्तनोति ।
न ह्येकस्मिन्नतिशयवतां सन्निपातो गुणाना-
मेकः सूते कनकमुपलस्तत्परीक्षाक्षमोऽन्यः ॥

इति ब्रुवाणः ।

—रेवाप्रसादद्विवेदी

—❀—

रजि० संख्या १३०४३ ६७

## सागरविश्वविद्यालयस्य संस्कृतपरिषदः प्राप्यपुस्तकानि

**डॉ० रामजी उपाध्याय-विरचित-सम्पादितानि—** मूल्यम्

१–प्राचीन भारतोय साहित्य की सांस्कृतिक भूमिका
( डी० लिट्० शोधग्रन्थ ) ३२-५०
३-००
२–द्वा सुपर्णा ( संस्कृतोपन्यासः )
3–Sanskrit & Prakrit Mahakavyas
( D. Phil शोधग्रन्थः ) 15-00
२-५०
४–संस्कृतस्वयंशिक्षक
७-००
५–आधुनिक-संस्कृत-साहित्यानुशीलनम्
८८-००
६–सागरिका [ वर्ष १-९ सजिल्द ]
७०-००
अजिल्द
३-००
७ धम्मपद ( हिन्दी अनुवाद तथा टिप्पणी सहित )
१२-००
८–भारतस्य सांस्कृतिकनिधिः
१-५०
९–मनुस्मृतिनवनीतम्

**डॉ० वनमालाभवालकरविरचितानि—**
२०-००
१०–महाभारत में नारी [ पी-एच०-डी० शोधनिबन्धः ]
१-००
११–पाददण्डः ( संस्कृतरूपकम् )
१-००
१२–रामवनगमनम् ( संस्कृत-संगीतिका )
१-००
१३–पार्वतीपरमेश्वरीयम् ,,

**डॉ० पुल्लेलरामचन्द्रुडुकृतम्—**
४-००
१४–सुसंहतभारतम् ( संस्कृतरूपकम् )

**शिंगभूपालविरचितः**
८-००
१५–रसार्णवसुधाकरः

**डॉ० रेवाप्रसादद्विवेदिरचितम्**
४-००
१६–सीताचरितम् [ संस्कृतमहाकाव्यम् ]
३-००
१७–साहित्यसन्दर्भाः

**डॉ० फतहसिंहस्य**
१५-००
१८–सिन्धुसभ्यतालिपे रहस्योद्घाटनम् [ सचित्रम् ]

# सागरिका

## विश्वसंस्कृतसम्मेलनविशेषांकः

वि० सं० २०२६

सागरविश्वविद्यालयः, सागरम्

मध्यप्रदेशः [ भारतम् ]

# सागरिका

त्रैमासिकी

[ दशमवर्षे चतुर्थाङ्कः ]
२०२६

## विश्व-संस्कृतसम्मेलन-विशेषाङ्कः

संपादकः

डॉ० रामजी उपाध्यायः

सागरविश्वविद्यालये

संस्कृतविभागस्य प्राध्यापकाध्यक्षः

[ भारतवर्षम् ]

मूल्यं १० रूप्यकाणि

प्रकाशिका
संस्कृतपरिषद्
सागरविश्वविद्यालयः,
सागरम् [ म० प्र० ]

देयम्

| | |
|---|---|
| प्रत्यङ्कम् | ३ रूपकाः |
| वार्षिकम् | १० रूपकाः |
| वस्त्रावरणसहितवार्षिचतुरङ्काणाम् | १२ रूपकाः |
| आजीवनग्राहकस्य | १५० रूपकाः |
| अङ्कनिर्गमनम् | आषाढ-आश्विन-पौष-चैत्र- ( जून-सितम्बर-दिसम्बर-मार्च ) मासेषु |

मुद्रकः
श्रीशिवनरायण उपाध्यायः
नयासंसारमुद्रणालयः
भदैनी
वाराणसी–५

## अभिवादनं प्राच्याः

प्राची स्वशुद्धनिटिले निज-रक्त-सिन्धून्
सोढ्वापि राक्षसबलानि मलानि कृत्वा ।
स्वातन्त्र्य-कुङ्कुम-विशेषकमादधे यत्
तस्याभिवादनमिमे वयमालपामः ॥

# स्वागतं तपोधनानाम्

'अस्मिँस्तपोमहति भारतवर्षनाम्नि
तीर्थें समागतवतां विदुषां वराणाम् ।
ब्रूतेऽभिनन्दनवचो दशवर्षदघ्ना
निघ्ना भवन्मतिषु 'सागरिका' ऽस्मदीया ॥

या भारती जगति 'संस्कृत'—नामधेया
सा भारतीयजनतैकपरायणा नो ।
तस्याः पयांसि मधुराणि पिबन्ति सर्वा
आशाः, दुहन्ति निखिला अपि तां वसिष्ठाः ॥

नो तत्र सिन्धुपरिखा गिरिमेखला वा
प्रत्यूहमाचरति सार्वजनीनतायै ।
नो तत्र जाति-तनु-वर्ण-वयो-धनादि-
रेखाः समादधति भेदधियं वराकीम् ॥

ये केऽप्युपासत इमां हृदयेन विश्वं
विश्वात्मभावविशदाः सुपथेन नेतुम् ।
स्युः केऽपि ते, शिरसि तच्चरणारविन्द-
धूलिं दधाति मखधूलिमिवैष देशः ॥

# अस्मिन्नङ्के



———

# छायानाटकम्

डॉ० रामजी उपाध्यायः

[ छायानाटके छायानामभिनयः स्यादेवेति भ्रान्तिवशादद्यावधि कतिपयविद्वांसो दूताङ्गदादीनां छायानाटकत्वं सन्दिहन्ति। छायानाटके कस्यचित् पात्रस्य मायामयी छाया प्रतिकृतिः ( shadow ) प्रयुज्यते, अतएव छायानाटकं नाम सार्थकं भवतीति पर्यालोचितं लेखकेन ]

किं नाम छायानाटकमित्यस्मिन्विषये विदुषां विप्रतिपत्तिर्दृश्यते। तद्यथा दूताङ्गदादीनि छायानाटकानि सन्ति न वेति प्रश्नं समाधातुं चिरकालादेव विपश्चितां विमर्शो विपथे जागर्ति। एतेषु रूपकेषु छायाभिनयः (Shadow-play) भवतीति सिद्धान्तितं पिशेल-ल्यूडर्सादिमहाभागैः।[१] डा०डे महोदयः स्पष्टमेवाभिप्रैति 'यद्यपि किन्नाम छायानाटकमित्यतिनिगूढमस्ति,तथापि छायाभिनय-(Shadow play) सिद्धान्तो नितरां निराधार एव। नैतेषु किमपि छायाभिनयस्य लक्षणं प्रतीयते' इति[२] छायाभिनयो वस्तुतो वैदेशिकी रीतिः। एतस्य प्रमुखं लक्षणमधोनिर्दिष्टम्—

(१) श्रोतृशालारङ्गमञ्चयोर्मध्ये काचित् तिरस्करिणी नीचैरुपरि प्रसार्यते।

(२) नाट्यवृत्तिपराणि पात्राणि तिरस्करिण्यास्तले छायाद्वारेण प्रतिबिम्बी-

१. दूताङ्गदे छायाभिनयो वर्तते इति मतं प्रतिपादयन्ति—
R. Pischel, Das altindische Schattenspiel in SBAW, 1906, pp. 482-502; H. Luders, Die subhikas in SBAW, 1916; p. 698 f; sten konow, Op, cit, pp 89-90; Winternitz, GIL, III, p. 243 ( also in ZDMG; LXXIV, 1920, p. 118 f )

2. While the counotation of the term Chaya nataka itself is extremely dubuious, the shadow-play theory, however, appears to be entirely uncalled for and without foundation, and there is hardly any characteristic feature which is not otherwise intelligible by purely historical and literary considerations. History of Skt. Lit. P. 501.

क्रियन्ते ।[१]

एतानि लक्षणानि दूताङ्गदादिषु न संगम्यन्ते छायानाटके छायापदस्यौचित्यमन्यत्र गवेषयन् कीथमहोदयो राजेन्द्रलालमित्रस्यैतद्विषयकं मतमुद्धरन्नाह—नाटकाङ्गानामभिनयस्यान्तराले कदाचित् दूताङ्गदस्याभिनय उद्दिष्ट आसीत्। एतस्य हेतोर्नाटकस्याभिनयार्थं संक्षिप्तश्छायारूपेण सम्पादिता।[२] 'दूताङ्गस्य वास्तविकं काव्यरूपं निर्धारयितुं किमपि तत्त्वमेतस्मिन् पुस्तके नास्त्येव इति कीथस्यापि मतम्।[३]

अतो हि नाम छायानुसन्धेया। छायानाम्नः संकेततत्त्वानि दूताङ्गदे सन्त्येवेति प्रतिपाद्यतेऽस्माभिः।

## छायापदस्य सार्थकता

तद्यथा भासस्य प्रतिमानाटकं विद्यते, तथैव सुभटस्य छायानाटकमस्तीति निश्चप्रचमेव। प्रतिमानाटके दशरथस्य प्रतिमायाः किञ्चिदभिनवमायोजनं कृतम्। एतस्याः प्रतिमाया माहात्म्यं विशदयितुमेव नाटकस्य नाम प्रतिमा-नाटकं कृतम्। अनया दिशा कुन्दमाला नाम कुन्दमालाया माहात्म्यं स्पष्टयितुं वर्तते। उत्तररामचरिते सीतायाश्छायाया अभिनवायोजनस्य लोकप्रियत्वं वा माहात्म्यं वा विशदयितुं तृतीयाङ्कस्य नाम कविना छायाङ्क इति निर्धारितम्। तदनुसारं छायायाः किमपि विशिष्टमेव महत्त्वं दूताङ्गदे वर्तते।

## दूताङ्गदे छायाविधानम्

दूताङ्गदे छायाया बोधार्थं प्रथमं तावत् पौराणिकी छाया प्रकल्पनीया वर्तते। छाया तु संज्ञायाः प्रतिरूपा सती सूर्यस्य पत्नी बभूव। संज्ञा सूर्यस्य

---

1. A play in which the actors appear as shadows cast upon a screen placed between the stage and the auditorium, The Oxford English Dictionary.

2. It is natural to suggest, as did Pishel that the Dutangada of subhata, which is styled a Chayanataka, really was shadow play. On the other hand, Rajendralalamitra suggested that the drama was perhaps simply intended as an entracte, and this may be justified on the interpretation of the term of drama in the form of a shadow : i. e. reduced to the minimum for representation in such a form. sanskrit Drama p. 269.

3. Ibid. p. 2[illegible]

तापमसहमाना पत्नीत्वे स्वकीयां प्रतिरूपां छायां नियुज्य पितुर्गृहमगमत्। कालान्तरे सूर्यस्य छायायां त्रीणि अपत्यानि बभूवुः। पश्चात् सूयण समाज्ञातं यदियं मम पत्नी संज्ञा नास्ति। सा छायाप्रतिरूपा एव संज्ञायाः।[१] अनेन प्रकरणेन छायायाः प्रतिरूपत्वं प्रमाणितम्। इदमेव प्रतिरूपत्वं छायानाटकस्य विशिष्टं लक्षणमिति प्रतिपाद्यमस्माकम्।

दूताङ्गदे सीतायाश्छाया मायामैथिलीति पुरस्कृता वर्तते। यदाङ्गदो रावणं सीतायाः प्रत्यावर्तनाय कथयामास, तदा तेन प्रहस्तद्वारा मायामैथिली प्रयोजिता। सा मायामैथिली प्रहस्तेन सह रावणसमीपं रङ्गमञ्चे आगच्छति। नाटकानुसारं तु—

(ततः प्रविशति प्रहस्तेन सह मायामैथिली)।

मैथिली—जयतु जयत्वार्यपुत्रः। (इत्यभिदधाना रावणोत्सङ्गमारोहति)

रावणः—(स्वगतम्) साधु, भो मायामयि, साधु जानासि दशकण्ठमाराधयितुम्।

अङ्गदः—(सविषादमात्मगतम्) अपि नाम जानकी पण्याङ्गनाचरितमाचरेत्। भवतु विलोकयामि तावत्।

रावणः—देवि, विदेहनन्दिनि, प्रतिबोध्यतां रामप्रहितोऽयं शाखामृगः।

मायामैथिली—(अङ्गदं सबहुमानमवलोक्य) वत्स, अङ्गद, मम वचनैः प्रतिबोधय राघवम्—

एषामुपरि कस्मात् खिद्यसे राघव तद् व्रज निजं नगरम्।
दत्ताहं निज हृदये साक्षीकृत्य मदनमेतस्मै॥ २८

अपि च

मयि रावणाङ्कपङ्कजविलासहंस्यामद्य रघुनाथः।
राक्षसभटैर्भञ्जितभरतं भूषयतु निजराज्यम्॥ २९

अङ्गदः—(कर्णौ पिधाय) न खलु भवति जानकी यतः

अश्रुतपूर्वाविनया पर्याप्तालंकृता च शीलेन।
सा राघवस्य पत्नी पुनाति भुवनानि गङ्गेव॥ ३०

---

१. The Practical Sanskit-English Dictionary ग्रन्थे छाया। शब्दकल्पद्रुमानुसारं च छाया सूर्यपत्नी : सा संज्ञाप्रतिकृतिः। यथा मत्स्यपुराणे ११.५

अनेन छायाविधानेन दूताङ्गदस्य छायानाटकं नाम प्रसिद्धम् । अन्यत्रापि सर्वेषु तेषु छाया-नाटकेषु छायाविधानं वर्तते । तथाहि—हनुमन्नाटकं महानाटकं वा छायानाटकमिति संज्ञितम् । तदनुसारं

रावणः—महान्तं प्रपञ्चमुत्पाद्य नूनं जानकीमनुभविष्यामीत्यवधार्य—

भेरीनिःसाणशंखध्वनिगणतुरगस्यन्दनस्फीतनादैः
सानन्दं राक्षसेन्द्रः कटकभटभुजास्फालकोलाहलेन ।
लङ्कामापूर्य रामः स्वयमभवदथो मायया रावणस्य-
च्छिन्नान् मूर्ध्नो दधानः शिरसिरुहभरेष्वेकतः पंच पंच ।। १०.१८

एवंविधो भूत्वा पुनरशोकवनिकां प्रविश्य रावणः

लङ्काभटोऽथ रघुनन्दनवेशधारी
पापो जगाम पुरतो जनकात्मजायाः ।
नाम्नापि यस्य कुत इच्छति तस्य रूपा-
दन्याङ्गनापहरणे न मनः कदाचित् ।। १०.१९

जानकी—( रघुनन्दन-वेषधारिणं तमालोक्य ) सहर्षं—

साक्षादालोक्य रामं झटिति कुचतटीभारनम्रापि हर्षा—
दुत्थायोदस्तदोर्भ्यां दरचलितकुचाभोगचैलोन्नताङ्गी ।
त्वं मामालिंग्य खेदं जहि विरहमहापावकः शान्तिमेतु ।। १०.२०
( इत्यालिंगितुमिच्छति )

रामवेषधारी रावणः—( सविषादम् )

भूत्वा ततोप्यवसरे जनकात्मजायां
लङ्कापतिर्मकरकेतुशरातुरायाम् ।
क्लीबो विशीर्णमणिदण्डयुतः स्मरार्तः
पापात्ततः शिवशिवान्तरधीयत द्राक् ।। १०.२१

अस्मिन् प्रकरणे स मायया राम एव बभूव । यतो हि नाम रहस्यं जानन्ती सरमया विज्ञापिता सती सा 'नायं रामोऽपितु रावणः' इति तथ्यं व्यजानात् ।

पुनश्च महानाटके सीतायाः प्रतिरूपं प्रयोजितं वर्तते । तद्यथा

सभयं रणसंकटमुपलभ्य सप्रपञ्चम्—

पापो विरच्य समरे जनकस्य पुत्रीं
हा राम राम रमणेति गिरं गिरन्तीम् ।
खड्गेन पश्यत वदन्निति रे प्रवीरा
मायामयीं शिवशिवेन्द्रजिदाजघान ।। १२.१३

द्विधाकृतां तां पुनराददानो मायारथस्थोऽम्बरवर्त्मना च ।
ब्रह्मोपदेशात् स निकुम्भिलाद्रेन्यग्रोधमूलावटमाजगाम ॥ १२-१४

राम :—समरचत्वरे

दृष्ट्वा मायाजनकतनयाखण्डनं रामचन्द्रो
गुर्वीमुर्वीतलमुपगतो दीर्घमासाद्य मूर्च्छाम् ।
तत्पादाग्रे पुनरनुजनिश्चेतनां प्राप्य रामं
कृत्वोत्सङ्गे स्मरसि न गिरो व्याहरन्नित्यरोदीत् ॥१२-१५

छायानाटकस्योपर्युक्तं लक्षणमविजानन्नेव डेमहाभागः छायानाटके छायाभिनयस्य ( Shadow play ) वर्त्तनमावश्यकं मन्यमानो भ्रान्तिवशात् सिद्धान्तयति—महानाटके किमपि तत्त्वं नास्ति येनैतस्य छायानाटकत्वं प्रमाणितं स्यादिति ।[1]

मेघप्रभाचार्येण स्वोपज्ञे धर्माभ्युदये नाटके [2]पुत्तलकाभिनयोऽभिनवप्रयोग इति लोकप्रीत्यर्थं प्रयोजितः । पुत्तलकस्यापि प्रतिरूपत्वात् धर्माभ्युदयस्य छायानाट्यप्रबन्ध इति ख्यातिः कविना समारोपिता । धर्माभ्युदये प्रतिरूपवत्पुत्तलकप्रयोगोऽस्ति, अतएव च छायानाट्यप्रबन्ध इति तस्याभिख्या वर्तते । अनया दिशा दूताङ्गदादीनां मायामैथिली-प्रयोगेण छायानाटकमिति नाम समीचीनमस्ति ।

---

1. Nor can the origin of the Mahanataka be sought in the far-fetched hypothesis of the shadow-play, the very existence of which in ancient India is not yet beyond doubt. We have here no description of the work as a Chayanataka, as we have in the case of Dutangada and some other plays; and there is nothing in the work itself, in spite of its irregularities, to show that the composition was intended or ever used for shadow-pictures. Hist. of Sanskrit Lit. p. 507.

२. तत्र रङ्गनिर्देशो वर्तते—यमनिकान्तराद् यतिवेषधारी पुत्तलकस्तत्र स्थापनीयः ।

उल्लाघराघवं छायानाटकमिति तस्य लेखकेन सोमेश्वरदेवेन पुष्पिकायां निर्दिष्टम् । तद्यथा,

इति कुमारसूनोः श्रीसोमेश्वरदेवस्य कृताबुल्लाघराघवे च्छायानाटके चतुर्थोऽङ्कः समाप्त, इति ।

नाटकेऽस्मिन् मायासीतां निर्माय तस्याश्च शिरो विलूनं कृत्वा रावणस्तां रामस्य समक्षं मृतामदर्शयत् ।

## छायानाट्यम्

धर्माभ्युदयं छायानाट्यप्रबन्ध इति लेखकेन मेघप्रभाचार्येण निर्दिष्टम्। तत्र नायकस्यच्छाया पुत्तलकरूपेणाभिनयार्थं प्रयोजिता । तस्मिन् युगे चित्रद्वारेणापि नाट्याभिनयः प्रयोजित आसीत् । तद्यथोल्लाघराघवे सप्तमेऽङ्के प्रमाणितं सोमेश्वरदेवेन प्रसङ्गतो वृकमुखकार्पटिकयोः संवादमुखेन । तद्यथा—

वृकमुखः—सखे, कियदप्यन्तर्गतं मया रामलक्ष्मणयोः स्वरूपं स्वामिनो मनोविनोदाय पत्रपट्टे विन्यस्तमस्ति तदवलोकयतु । ( इति पट्टमर्पयति )

कार्पटिकः—( गृहीत्वा विलोक्य च ) साधु महामते, साधु ।

**छायानाट्यानुसारेण** मनोहरमिदमालिखितं भवता । ( इति वाचयति )

प्रकरणेऽस्मिन् रामलक्ष्मणयोरन्तर्गतं स्वरूपमभिनयात्मकमेवेति मुख्यत्व-मेव । चित्रपट्टेषु कृतानां नायिकानायकादीनां प्रतिरूपात्मकाभिनयस्य योजनात् छायानाट्यत्वं प्रसिद्धमिति प्रतिभाति ।

---

१. राम :— सवैलक्ष्यम् ) प्रिये श्रूयताम् । इह हि—

मायाकृतामपि मृगाक्षि मृतिं त्वदीयां
सत्यां विदन् न सहसैव मृतोऽस्मि यस्मात् ।
व्रीडाजडस्तदहमेष मृषानुरक्तः
शक्तो न दर्शयितुमात्मसुखं पुरस्ते ।

सीता—अज्जउत्त एसो वि जणो इत्थ समाणावराह ज्येव ।

राम :—( विमृश्य ) प्रिये कदाचिदस्मदीयमपि कृतविलूनं शिरस्तै-तैर्दुरात्मनिर्दर्शितं भविष्यति ।

प्रतिरूपस्य त्रैविध्याच्छायानाटकानि त्रिविधानि स्युरिति प्रमीयते। तद्यथा--

(१) मायाद्वारेण प्रमुखपात्राणां प्रतिकृतयो रङ्गमञ्चे नियोजिता आसन्। अभिनयकाले प्रेक्षकास्ताः प्रतिकृतीर्मूलपात्रेभ्योऽभिन्ना अमन्यन्त। एतादृशी योजना हनुमन्नाटके, उल्लाघराघवे, दूताङ्गदे च वर्तते।

(२) रङ्गमञ्चे प्रमुखपात्रस्य प्रतिरूपं पुत्रकद्वारेण स्थापितम्। एतादृशी योजना धर्माभ्युदये वर्तते।

(३) तथा च प्रमुखपात्रस्याभिनयात्मकं प्रतिरूपं रंगमञ्चे चित्रद्वारेण पुरस्कृतमासीत्। तदेतदुल्लाघराघवस्योल्लेखेन प्रतीयते।

कथावस्तुनि प्रतिरूपस्य ( छायायाः ) आयोगाच्छायानाटकत्वं सार्थकमभवत् न तु छायायाः ( Shadow ) अभिनयस्य तत्र व्यपेक्षया।

---

# महाकविहरिचन्द्रस्य धर्मशर्माभ्युदयम्

श्रीपन्नालालः साहित्याचार्यः

धर्मशर्माभ्युदयस्य प्रत्येकसर्गस्यावसाने दत्तैः पुष्पिकावाक्यैरेकोनविंशतितमसर्गस्य ६८-६६ श्लोकाभ्यां रचिते षोडशदलकमलबन्धे सूचितेन 'हरिचन्द्रकृतं धर्मजिनपतिचरितम्' इति पदेन, तस्यैव सर्गस्य १०१-१०२ श्लोकाभ्यां निर्मिताच्चक्रबन्धान्निर्गतया –

'आर्द्रदेवसुतेनेदं काव्यं धर्मजिनोदयम् ।
रचितं हरिचन्द्रेण परमं रसमन्दिरम् ॥'

इत्युक्त्या, तस्यैव च सर्गस्य १०३-१०४ श्लोकाभ्यां निर्मितचक्रबन्धान्निर्गतेन 'श्रीधर्मशर्माभ्युदयः हरिचन्द्रकाव्यम्' इत्युल्लेखेन सिद्धमस्ति यद्धर्मशर्माभ्युदयस्य रचयिता महाकविर्हरिचन्द्रो वर्तते । कोऽयम् ? कस्यासौ पुत्रः ? इत्यस्य परिचयो धर्मशर्माभ्युदयस्यान्ते प्रदत्तया प्रशस्त्या प्राप्यते ।

उक्तप्रशस्त्या ज्ञायते यन्नोमकवंशस्य कायस्थकुले समुत्पन्नयोरार्द्रदेवरथ्याभिधानयोर्दम्पत्योः पुत्रोऽयमासीत् । प्रशस्तेः पञ्चमश्लोकेन महाकविना स्वस्यानुजस्य लक्ष्मणेति नाम सूचितम् । यथा हि भगवान् दाशरथिर्भक्तेन शक्तेन चानुजेन लक्ष्मणेन निर्व्याकुलीभूय समुद्रस्य पारं गतवान् तथा महाकविहरिचन्द्रोऽपि तथाविधेन स्वानुजेन लक्ष्मणेन निर्व्याकुलीभूय शास्त्रसागरस्य परं पारं प्राप्तवान् ! कविनेत्येतत्तु लिखितं यद् गुरोः प्रसादान्मदीया वाणी निर्मलाभवत् किन्तु, स गुरुः क इति नोल्लिखितम् । काव्यस्य प्रतिपाद्यपदार्थानां वर्णनेन प्रतीयते यदयं दिगम्बरजैनधर्मानुगोऽभूत् ।

## हरिचन्द्रनामानोऽनेके विद्वांसः

'कर्पूरमञ्जरी'-नाटिकायां महाकविराजशेखरेण प्रथमयवनिकाया अनन्तरमेकस्य विदूषकेण[1] हरिचन्द्रकवेरुल्लेखः कृतः । एकस्य हरिचन्द्रस्योल्लेखो बाणभट्टेन 'श्रीहर्षचरिते' कृतः[2] । एको हरिचन्द्रो विश्वप्रकाशकोषस्य कर्ता

---

१. विदूषकः—( ऋज्वेव तात्किं न भण्यते, अस्माकं चेटिका हरिचन्द्रनन्दिचन्द्र कोटिशहालप्रभृतीनामपि सुकविरिति )

२. पदबन्धोज्ज्वलो हारी कृतवर्णक्रमस्थितिः ।
भट्टार हरिचन्द्रस्य गद्यबन्धो नृपायते ॥

महेश्वरस्य पूर्वजश्चरकसंहितायाष्टीकाकारः साहसाङ्कनृपतेः प्रधानवैद्य आसीत्। परन्त्वेषां सर्वेषां धर्मशर्माभ्युदयस्य कर्त्रा हरिचन्द्रेण साकं कोऽपि सम्बन्धो न सिध्यति। यतो हि धर्मशर्माभ्युदयस्यैकविंशतितमे सर्गे जैनधर्मस्य यद्वर्णनमस्ति तद् यशस्तिलकचम्प्वाश्चन्द्रप्रभचरिताच्च प्रभावितं वर्तते। अतस्तस्य कर्ता सोमदेवाद् आचार्यवीरनन्दिनश्च परवर्ती भवेन्न पूर्ववर्ती। यदा च कर्पूरमञ्जर्याः कर्ता राजशेखरः श्रीहर्षचरितस्य च कर्ता बाणभट्टः पूर्ववर्ती वर्तते। जीवन्धरचम्प्वाः [1]प्रस्तावनायां जीवन्धरचम्प्वा धर्मशर्माभ्युदयस्य च तुलनात्मकान्युद्धरणानि दत्त्वा मयैतत्साधितं यद् धर्मशर्माभ्युदयस्य कर्त्ता हरिचन्द्र एव जीवन्धरचम्प्वा अपि कर्ता विद्यते। जीवन्धरचम्प्वाः कथानकं यत्र वादीभसिंहसूरेः क्षत्रचूडामणेर्गद्यचिन्तामणेश्च समास्ति तत्र गुणभद्राचार्यस्योत्तरपुराणादपि तत्प्रभावितं वर्तते। अतो हरिचन्द्रो गुणभद्रात्परवर्ती सिध्यति। सार्धमेवात्र भावकस्याष्टानां मूलगुणानां वर्णनं कृतं तद् यशस्तिलकचम्प्वा रचयितुः सोमदेवस्य मतानुगुणं विद्यते ततोऽपि सोमदेवात्परवर्ती सिध्यति। सोमदेवेन यशस्तिलकचम्प्वा रचना १०१६ विक्रमाब्दे कृता। धर्मशर्माभ्युदस्यैका प्राचीना पुस्तिका पाटणस्य 'संघवीपाड़ा' इत्येतस्य पुस्तकभाण्डारे १२८७ विक्रमाब्दस्य लिखिता विद्यते[2]। एतेन निश्चीयते यत् महाकविर्हरिचन्द्र उक्तसम्वत्सरात् पूर्ववर्ती वर्तते। इत्थं पूर्वापरावधिसमीक्षणेन ज्ञायते यदयं ११-१२ विक्रमशताब्द्या विद्वानस्ति। धर्मशर्माभ्युदयोपरि कालिदास-भारवि-माघानां काव्यशैल्याः प्रभावो लक्ष्यते। कालिदासस्येन्दुमतीस्वयंवरवर्णनमनुसृत्य हरिचन्द्रेण धर्मशर्माभ्युदये प्रभावत्याः स्वयंवरवर्णनं कृतम्। भारवेः शैलीमनुसृत्य राजनीतेर्जलक्रीडायाश्च वर्णनं विहितं। माघस्य शैलीमनुश्रित्य च स्वयम्वरयात्राया विन्ध्याचलस्य च वर्णनं कृतम्। प्राक्तनकवीनां शैल्या अनुसरणेऽपि धर्मशर्माभ्युदये सर्वत्र कविप्रतिभाया विलक्षणश्चमत्कारो दृश्यते।

### महाकविहरिचन्द्रस्यान्याः कृतयः—

महाकविना हरिचन्द्रेण रचितेषु ग्रन्थेषु धर्मशर्माभ्युदयं तस्य निर्भ्रान्ता कृतिरस्ति। जीवन्धरचम्प्वा विषये स्व० नाथूराम प्रेमीत्येतस्य मतमासीत्

---

१. भारतीयज्ञानपीठवाराणसीतः प्रकाशिता जीवन्धरचम्प्वाः प्रस्तावना ( पृष्ठाः ३७-४० )

२. द्रष्टव्या, 'संघवीपाड़ा' इत्येतस्य पुस्तकभण्डारस्य सूची, गायकवाडग्रन्थमालया प्रकाशिता, बड़ौदा ९१७ ई०।

यदेषा कृतिः कस्याप्यन्यस्य कवेरस्ति, परन्तु यदा मयोभयोस्तुलनात्मकपद्धत्या लिखिता जीवन्धरचम्प्वाः प्रस्तावना तत्समीपे प्रेषिता तदा तेन तयोरेककर्तृकत्वं स्वीकृतम्। आंग्लेन विदुषा डा० कीथमहाशयेनापि हरिचन्द्र एव जीवन्धरचम्प्वाः कर्ता स्वीकृतः। धर्मशर्माभ्युदयं जीवन्धरचम्पूश्च द्वे अपि कृती मया सम्पादिते भारतीयज्ञानपीठात् प्रकाशिते। उभयोरपि कोमलकान्तपदावली विविधालंकारचातुरी च पाठकानां हृदयं बलादाकर्षति। तत्र

## धर्मशर्माभ्युदयस्य काव्यवैभवम्

पण्डितराजजगन्नाथेन काव्यस्य प्राचीन-प्राचीनतरलक्षणानां समन्वयं कुर्वता स्वकीये रसगङ्गाधरे काव्यस्य लक्षणं लिखितम्—

'रमणीयार्थप्रतिपादकः शब्दः काव्यम्'

इति। रमणीयार्थप्रतिपादकशब्दसमूह एव काव्यमस्तीति तदर्थः। सा च रमणीयतालंकारेण, अभिधया, लक्षणया, व्यञ्जनया वा प्रकटिता स्यात्। केवलैः सुन्दरशब्दैः, केवलैः सुन्दरार्थैश्च काव्यं काव्यं न कथ्यते, किन्तूभयोः संयोगेनैव काव्यं निगद्यते। महाकविना हरिचन्द्रेण धर्मशर्माभ्युदये शब्दार्थयोरुभयोरपि सुन्दरः संयोगः संस्थापितः। संदर्भेऽस्मिन्नेते श्लोकाः संप्रेक्षणीयाः—

अर्थे हृदिस्थेऽपि कविर्न कश्चिन्निर्ग्रन्थिगीर्गुम्फविचक्षणः स्यात्।
जिह्वाञ्चलस्पर्शमपास्य पातुं श्वा नान्यथाम्भो घनमप्यवैति ॥११४॥
हृद्यार्थवन्ध्या पदबन्धुरापि वाणी बुधानां न मनो धिनोति।
न रोचते लोचनवल्लभापि स्नुही क्षरत्क्षीरसरिन्नरेभ्यः ॥११५॥
वाणी भवेत्कस्यचिदेव पुण्यैः शब्दार्थसंदर्भविशेषगर्भा।
इन्दुं विनान्यस्य न दृश्यते द्युत्तमो धुनाना च सुधाधुनी च ॥११६॥

उक्तसंदर्भस्य तात्पर्यमिदमेवास्ति यद् धर्मशर्माभ्युदये शब्दार्थयोरुभयोरेव सुन्दरः संयोगो विद्यते।

उपमालंकारापेक्षयोत्प्रेक्षालंकारः कविप्रतिभां विकसिततमां विदधाति। प्रेक्षेऽहं यद् धर्मशर्माभ्युदयस्य मध्य उत्प्रेक्षालंकारस्य धारा महानद्याः प्रवाह इव प्रारम्भादारभ्यान्तं यावत् अजस्रगत्या प्रवाहिता वर्तते! उपमा, रूपकं, विरोधाभासः श्लेषः, परिसंख्या, दीपकोऽथान्तरन्यास इतिप्रभृतयोऽलंकाराः पदे पदेऽस्य शोभां वर्धयन्ति। यथा

श्लेषः (१।१०)

लब्धात्मलाभा [1]बहुधान्यवृद्ध्यै निर्मूलयन्ती घन[2]नीरसत्वम् ।
सा मेघसंघात[3]मपेतपङ्का[4] शरत्सदां संसदपि क्षिणोतु ॥

उत्प्रेक्षा ( १।६३ )

संक्रान्तबिम्बः स्रवदिन्दुकान्ते नृपालये प्राहरिकैः परीते ।
हृताननश्रीः सुदृशां चकास्ति काराधृतो यत्र रुदन्निवेन्दुः ॥

क्षरच्चन्द्रकान्ते प्राहरिकैः परीते च राजभवने प्रतिफलितमण्डलो मृगाङ्क एवं भाति यत्सुलोचनानामास्यलक्ष्म्या अपहारकत्वापराधेन काराधृतस्तेन च रोदितीव।

अन्योऽपि (२।३६)

[5]प्रयाणलीलाजितराजहंसकं विशुद्धपार्ष्णिं विजिगीषुवत्स्थितम् ।
तदंघ्रिमालोक्य न कोषदण्डभाग् भियेव पद्मं जलदुर्गमत्यजत् ॥

**रूपकोपमयोः संमिश्रणम्** ( २।५९ )

अनिन्द्यदन्तद्युतिफेनिलाधरप्रवालशालिन्युरुलोचनोत्पले ।
तदास्यलावण्यसुधोदधौ बभुस्तरङ्गभङ्गा इव भङ्गुरालकाः ॥

**श्लेषोपमा** ( ४।२३ )

स्वस्थो धृतच्छद्मगुरूपदेशः श्रीदानवारातिविराजमानः ।
यस्यां करोल्लासितवज्रमुद्रः पौरो जनो जिष्णुरिवावभाति ॥

यस्यां नगर्यां नगरवासिजन इन्द्र इव शोभते यतोहि यथेन्द्रः स्वस्थः—स्वः स्वर्गे तिष्ठतीति स्वस्थो वर्तते तथा नगरवासिजनोऽपि स्वस्थः—स्वस्मिन् तिष्ठतीति स्वस्थो नीरोगो विद्यते। यथेन्द्रश्छलरहितस्य गुरोर्बृहस्पतेरुपदेशं धरति तथा नगरवासिजनोऽपि निश्छलगुरोरुपदेशं धरति । यथेन्द्रः श्रीदानवाराति-

१. शरत्पक्षे बहुधान्यानां वृद्ध्यै सतां संसदः पक्षे बहुधा-अनेकधा अन्येषां वृद्ध्य ।
२. शरत्पक्षे घनेषु मेघेषु नीरस्य सत्त्वं पक्षे घनञ्च तत् नीरसत्वं च घन-नीरसत्त्वम् ।
३. मेघानां घनानां समूहं शरत्पक्षे, मे मम अघसघातं पापपुञ्जं सतां संसदः पक्षे ।
४. अपगतकर्दमा शरत्पक्षे, अपगतपापां सतां संसदः पक्षे ।
५. प्रयाण प्रकृष्टगमनं पक्षे युद्धाय प्रस्थानं तस्य लीलया जिता राजहंसका हंसविशेषा येन पक्षे राजश्रेष्ठा येन तम् ।

विराजमानः-- श्रीसंपन्नेन दानवारातिना-उपेन्द्रेण सुशोभितो भवति तथा नगरवासिजनोऽपि श्रीदानवारा लक्ष्मीदानसलिलेन + अतिविराजमानो विशोभितो विद्यते। यथा चेन्द्रः करोल्लासितवज्रमुद्रः—करे वज्रायुधधारको विद्यते तथा नगरनिवासिजनोऽपि करधृतहीरकाङ्गुलीयकोऽभवत्।

**अर्थान्तरन्यासः ( ७।५३ )**

स वारितो मत्तमरुद्द्विपौघः प्रसह्य कामश्रमशान्तिमिच्छन्।
रजस्वला अप्यभजत्स्रवन्ती रहो मदान्धस्य कुतो वियोगः॥

यथा मदनोद्रेकनिपीडितः कश्चित्प्रतिषिद्धोऽपि बलात्कामखेदमपनिनीषू रजस्वला अपि स्त्रियः सेवते तथा देवानां मदोन्मत्तमतङ्गजसमूहो वारितो—जलात्स्वकीयश्रमशान्तिमभिकाङ्क्षन् रजस्वला पङ्किला अपि नदीरभजत्। अत्र मदान्धस्य विवेकाभावो हेतुत्वेनार्थान्तरतया न्यस्तः।

**परिसंख्या ( २।३० )**

निशासु नूनं मलिनाम्बरस्थितिः प्रगल्भकान्तासुरते द्विजक्षतिः।
यदि क्विपः सर्वविनाशसंस्तवः प्रमाणशास्त्रे परमोहसंभवः॥

यदि मलिनाम्बरस्य—मलिनाकाशस्य स्थितिरासीत्तर्हि निशास्वेवासीत् नतु तत्रत्यमनुष्येषु मलिनाम्बराणां मलीमसवस्त्राणां स्थितिरासीत्। यदि द्विजक्षतिर्दन्तक्षतिरासीत् तर्हि प्रगल्भकान्तानां प्रौढकान्तानां सुरते संभोग एवासीत्, न तु तत्रत्यमनुष्येषु द्विजक्षतिर्ब्राह्मणादिघात आसीत्। यदि सर्वविनाशसंस्तवो निखिलवर्णानां लोपस्य प्रसङ्ग आसीत् तर्हि क्विप्प्रत्ययस्यैव न तु तत्रत्यमनुष्येषु कस्यचित्सर्वस्वनाशोऽभूत्। परमोहसंभवः परमस्य निर्बाधत्वेन समुत्कृष्टस्य ऊहस्य तर्कस्य संभवो यद्यासीत्तर्हि प्रमाणशास्त्रे न्यायशास्त्र एवासीत् नतु तत्रत्यमनुष्येषु परमोहस्य अत्यधिकमोहस्य, अन्यजनमोहस्य वा समुत्पत्तिरासीत्।

**विरोधाभासः ( २ । ३० )**

महानदीनोऽप्यजडाशयो जगत्यनष्टसिद्धिः परमेश्वरोऽपि सन्।
बभूव राजापि निकारकारणं विभावरीणामयमद्भुतोदयः॥

स राजा जगति महानदीनो महासागरोऽपि सन् अजडाशयो जलरहितोऽभवत्, परमेश्वरोऽपि सन् अणिमाद्यष्टसिद्धिरहितोऽभूत्, राजा चन्द्रोऽपि

सन् विभावरीणां रात्रीणां निकारकारणं दुःखकारणमभवदिति विरोधः। परिहारपक्षे स राजा महान्-अत्युदारः अदीनः— दैन्यरहितः, अजडाशयः प्रबुद्धाशययुक्तो बभूव। परमेश्वरोऽपि सम्पन्नोऽपि न नष्टा सिद्धिर्यस्य तथाभूतोऽभवत्। राजा नृपतिः सन् अरीणां विभौ शत्रूणां स्वामिनि निकारकारणं दुःखकारणमजायत।

## धर्मशर्माभ्युदयस्य कौतुकावहस्थलानि—

काव्यमिदमनेकैः कौतुकावहैः स्थलैः परिपूर्णं वर्तते। महाकाव्यस्य लक्षणे लिखितं—'क्वचिन्निन्दा खलादीनां सतां च गुणकीर्तनम्'। एतदनुसृत्य प्रायो गद्यपद्यात्मकेषु काव्येषु निखिलेष्वपि सज्जनप्रशंसाया दुर्जननिन्दायाश्च-प्रकरणानि निहितानि, परन्तु धर्मशर्माभ्युदयस्यैतत्प्रकरणं ( प्रथमसर्गस्य १८-३१ ) संस्कृतसाहित्ये निरौपम्यमेव तिष्ठति। गृहस्थदम्पत्योरधिहृदयं पुत्रस्य स्वाभाविकी स्पृहा भवति। तेन विना तयोर्गार्हस्थ्यमपूर्णं भवति। रघुवंशे कालिदासेन दिलीपस्य पुत्राभावो वर्णितः। बाणभट्टेन कादम्बर्यामेतस्य सविस्तरं मार्मिकञ्च वर्णनं विहितम्। चन्द्रप्रभचरिते महाकविना वीरनन्दिनायकस्य चर्चा रचिता। परन्तु धर्मशर्माभ्युदयस्य द्वितीयसर्गान्ते ( ६८-७४ ) महाकविना हरिचन्द्रेण सुव्रताया राज्ञ्याः पुत्रानुत्पत्त्या महासेनमहाराजस्य मुखेन यद् दुःखं प्रकटितं तत्सत्वरमेव हृदये प्रविशति। उदाहरणार्थं तस्य द्वौ श्लोकौ द्रष्टव्यौ—

सहस्रधा सत्यपि गोत्रजे जने सुतं विना कस्य मनः प्रसीदति।
अपीद्धताराग्रहगर्भितं भवेदृते विधोश्यामलमेव दिङ्मुखम् ॥२।७०॥

न चन्दनेन्दीवरहारयष्टयो न चन्द्ररोचींषि न चामृतच्छटाः।
सुताङ्गसंस्पर्शसुखस्य निस्तुलां कलामयन्ते खलु षोडशीमपि ॥२।७१॥

दीपकदीपितोऽन्योप्येतत्प्रकरणागतः श्लोकः प्रेक्षणीयो वर्तते प्रेक्षावताम्—

नभो दिनेशेन नयेन विक्रमो वनं मृगेन्द्रेण निशीथमिन्दुना।
प्रतापलक्ष्मीबलकान्तिशालिना विना न पुत्रेण च भाति नः कुलम् ॥२।७२

तृतीय सर्गस्य वर्णनं कवेर्वैदुष्यं वर्णयितुं स्वसादृश्यं न प्राप्नोति। अस्य प्रकरणस्यैतान् श्लोकान् निरीक्ष्य कवेः श्लेषचातुरीं प्रशंसन्तु सन्तः—

[1]कान्तारतरवो नैते [2]कामोन्मादकृतः परम् ।
अभवन्नः प्रीतये सोऽप्युद्यन्मधुपराशयः[3] ॥२३॥
[4]अनेक - विटपस्पृष्टपयोधरतटा स्वयम् ।
वदत्युद्यानमालेयमकुलीनत्वमात्मनः[5] ॥२४॥
[6]उल्लसत्केसरो [7]रक्तपलाशः कुञ्जराजितः[8] ।
कण्ठीरव इवारामः कं न व्याकुलयत्यसौ ॥२५॥
एताः [9]प्रवालहारिण्यो मुदा [10]भ्रमरसंगताः ।
मरुन्नर्तकतालेन नृत्यन्तीव वने लताः ॥३४॥
चित्रमेतज्जगन्मित्रे[11] नेत्रमैत्रीं गते त्वयि ।
यन्मे जडाशयस्यापि[12] पङ्कजातं[13] निमीलति ॥५१॥
युष्मत्पदप्रयोगेण[14] पुरुषः स्याद्यदुत्तमः[15] ।
अर्थोऽयं सर्वथा नाथ लक्षणस्यापि गोचरः ॥५२॥

---

१. कान्तारस्य वनस्य तरवो वृक्षाः पक्षे कान्तारतस्य स्त्रीसंभोगस्य रवः शब्दः
२. कामस्योन्मादं कुर्वन्तीति कामोन्मादकृतः पक्षे कामोन्मादेन कृतः ।
३. उद्यन् मधुपानां राशिः पक्षे उद्यन् प्रकटीभवन् मधुपरो मद्यपानपर आशयो यस्मिन् सः ।
४. अनेकविटपैरनेकशाखाभिः स्पृष्टं पयोधरतटं मेघतटं यया सा पक्षे अनेकविटपैरनेकभुजङ्गैः स्पृष्टं पयोधरतटं स्तनतटं यस्याः सा ।
५. कौ पृथिव्यां लीनत्वं कुलीनत्वं तथा न भवति अकुलीनत्वं पक्षे नीचकुलोत्पन्नत्वम् ।
६. उल्लसन्तः केसरा बकुलवृक्षाः पक्षे सटा यस्य सः ।
७. रक्ता लोहितवर्णाः पलाशाः किंशुका यस्मिन् सः पक्षे रक्तपले रुधिरमांसे अश्नातीति तथा ।
८. कुञ्जैर्लतागृहै राजितः शोभितः पक्षे कुञ्जरैः करिभिरजितोऽपराजितः
९. प्रवालैः पल्लवैर्हारिण्यः पक्षे प्रकृष्टकेशैर्हारिण्यः ।
१०. भ्रमरैः षट्पदैः संगताः पक्षे भ्रमे परिक्रमणे रसं स्नेहं गताः प्राप्ताः ।
११. सूर्ये पक्षे लोकसुहृदि ।
१२. डलयोरभेदात् जलाशयस्यपि पक्षे जडाभिप्रायस्यापि ।
१३. कमलं पक्षे पापसमूहः ।
१४. युष्मत्पदप्रयोगे पक्षे तव चरणयोः संयोगे ।
१५. उत्तमपुरुषः उत्कृष्टश्च ।

चतुर्थसर्गे ( ४१-४४ ) चन्द्रग्रहणस्य यत्कौतुकावहं वर्णनं कविनाकारि तदन्यत्र न प्राप्यते । दृश्यताम्—

अथैकदा व्योम्नि निरभ्रगर्भक्षणक्षपायां क्षणदाधिनाथम् ।
अनाथनारीव्यथनैनसेव स राहुणा प्रैक्षत गृह्यमाणम् ॥४१॥
किं सीधुना स्फाटिकपानपात्रमिदं रजन्याः परिपूर्णमाणम् ।
चलद्द्विरेफोच्चयचुम्ब्यमानमाकाशगङ्गास्फुटकैरवं वा ॥४२॥
ऐरावणस्याथ करात्कथंचिच्च्युतः सपङ्को विसकन्द एषः ।
किं व्योम्नि नीलोपलदर्पणाभे सश्मश्रु वक्त्रं प्रतिबिम्बितं मे ॥४३॥
क्षणं वितर्क्येति स निश्चिकाय चन्द्रोपरागोऽयमिति क्षितीशः ।
दृङ्मीलनाविष्कृतचित्तखेदमचिन्तयच्चैवमुदारचेताः ॥४४॥

वृद्धावस्थाया निमित्तमुपलभ्य राज्ञश्चित्तं संसारशरीरभोगेभ्यो निर्विण्णं जायते। तस्यामेव दशायां स वृद्धावस्थां चिन्तयति । तदा नरस्य दन्ताः पतन्ति, केशाः काशकुसुमसंकाशा भवन्ति, शरीरे वलयो जायन्ते, मध्यं च भुग्नं भवति, एषामखिलानां वर्णनं महाकवेः शब्देषु दृश्यताम् कियत्सुन्दरं विद्यते—

अन्याङ्गनासङ्गमलालसानां जराकृतेर्ष्येव कुतोऽप्युपेत्य ।
आकृष्य केशेषु करिष्यते नः पदप्रहारैरिव दन्तभङ्गम् ॥ ५५ ॥
क्रान्ते तवाङ्गे वलिभिः समन्तान्नश्यत्यनङ्गः किमसावितीव ।
वृद्धस्य कर्णान्तगता जरेयं हसत्युदञ्चत्पलितच्छलेव ॥ ५६ ॥
आकर्णपूर्णं कुटिलालकोर्मि रराज लावण्यसरो यदङ्गे ।
वलिच्छलात्सारणिधोरणीभिः प्रवाह्यते तज्जरसा नरस्य ॥ ५७ ॥
असंभृतं मण्डनमङ्गयष्टेर्नष्टं क्व मे यौवनरत्नमेतत् ।
इतीव वृद्धो नतपूर्वकायः पश्यन्नधोऽधो भुवि बम्भ्रमीति ॥ ५८ ॥
( चतुर्थसर्गः )

चन्द्रप्रभचरिते द्वितीयसर्गस्य विस्तृतं न्यायवर्णनं काव्यानुरूपतां विहाय स्वतन्त्रदर्शनशास्त्रमिव जातम् । एवमेव नैषधचरिते सप्तदशसर्गस्य दार्शनिकत्वं काव्यानुरूपतां नानुसरति परन्तु धर्मशर्माभ्युदयस्य चतुर्थसर्गे ( ६२-७६ ) यश्चार्वाकीयः सिद्धान्तः सुमन्त्रमन्त्रिणा मण्डितो राज्ञा दशरथेन खण्डितश्च स काव्यानुरूपतां न जहाति स्म । सप्तमसर्गस्य ( २०-३८ ) सुमेरुवर्णनं कवेरनुपमं पाण्डित्यं प्रदर्शयितुमलम् । अस्य संदर्भस्य निम्नाङ्कितः श्लोका द्रष्टव्याः सन्ति—

[1]मरुद्ध्वनद्वंश–मनेकताल[2] [3]रसालसंभावित-मन्मथैलम् ।
धृतस्मरातङ्कमिवाश्रयन्तं वनं च गात्रं च सुराङ्गनानाम् ॥ ३० ॥
[4]विशालदन्तं [5]घनदानवारिं प्रसारितोद्दामकराग्रदण्डम् ।
उपेयुषो दिग्गजपुङ्गवस्य पुरो दधानं प्रतिमल्ललीलाम्[6] ॥ ३२ ॥
[7]अधिश्रियं नीरद[8]माश्रयन्तीं नवान्नुदन्तीमतिनिष्कलाभान्[9] ।
स्वनैर्भुजङ्गा[10]ञ्छिखिनां[11]दधानं प्रगल्भवेश्यामिव चन्दनालीम् ॥ ३३ ॥

( सप्तमसर्गः )

अत्र देववाहनत्वेन समागतानां हस्तिनामश्वानां वृषभाणां च स्वभावोक्तिमयं वर्णनं माघस्य शैलीं स्मारयति । अष्टमसर्गेऽपि क्षीरसागरजन्माभिषेकयोर्वर्णनं मालिनीच्छन्दसातिरम्यं जातम् ।

**पुत्रस्पर्शवर्णनम्—**

नवमसर्गे पुत्रस्पर्शवर्णने समागतयोः

---

१. मरुता पवनेन ध्वनन्तो वंशा वेणुवृक्षा यस्मिन् गानपक्षे मरुद्भिर्देवैर्ध्वनन्तो वंशा वाद्यविशेषा यस्मिन् तत् ।
२. अनेके तालास्तालवृक्षा यस्मिन् पक्षे अनेकताला स्वरप्रदर्शनप्रक्रमविशेषा यस्मिन् तत् ।
३. रसालैराम्रवृक्षैः संभाविताः संन्मानिता मन्मथा मदनवृक्षा एलाश्चन्द्रवालवृक्षाश्च यस्मिन्तत् पक्षे रसेनालसं रसालसं यथास्यात्तथा भाविता मन्मथैला कामचेष्टा यस्मिन् तत् ।
४. विशाला दन्ता गजदन्ताभिधानाः प्रत्यन्तपर्वता यस्य तं पक्षे विशाला दन्ता रदना यस्य तं ।
५. घना बहवो दानवारयो देवा यस्मिंस्तं पक्षे घनं प्रचुरं दानवारि मदजलं यस्य तम् ।
६. प्रतिद्वन्द्विलीलाम् ।
७. अधिका श्रीर्यस्य तं प्रभूतलक्ष्मीकं पक्षे प्रभूतशोभम् ।
८. निर्गता रदा दन्ता यस्य तं दन्तरहितं पक्षे नीरं ददातीति नीरदो मेघस्तं ।
९. अतिक्रान्तो निष्कलाभो हेममुद्रालाभो येभ्यस्तान् दरिद्रानित्यर्थः पक्षे अतिनिष्कला कृष्णतरा आभा येषां तान् ।
१०. विटान् सर्पांश्च ।
११. मयूराणां पक्षे शिखण्डिपुरुषाणाम् ।

पुत्रस्य तस्याङ्गसमागमक्षणे निमीलयन्नेत्रयुगं नृपो बभौ।
अन्तः कियद्गाढनिपीडनाद् वपुः प्रविष्टमस्येति निरूपयन्निव ॥१०॥
उत्सङ्गमारोप्य तमङ्गजं नृपः परिष्वजन्मीलितलोचनो बभौ।
अन्तर्विनिक्षिप्य सुखं वपुर्गृहे कपाटयोः संघटयन्निव द्वयम् ॥ ११ ॥

अनयोः श्लोकयोः पुरस्तात् कालिदासस्य रघुवंशे समायातं निम्नाङ्कित-पुत्रस्पर्शवर्णनं न्यूनकलं प्रतिभाति—

तमङ्कमारोप्य शरीरयोगजैः सुखैर्निषिञ्चन्तमिवामृतं त्वचि ।
उपान्तसंमीलितलोचनो नृपश्चिरात्सुतस्पर्शरसज्ञतां ययौ ॥ २८ ॥
रघुवंशतृतीयसर्गे

युवराजो धर्मनाथः शृङ्गारवत्याः स्वयंवरे संमिलितो भवितुं दक्षिणदिशां प्रति प्रयाणं करोति। तदवस्थायाः श्लेषमयं वर्णनं दर्शनीयं वर्तते—

तां नेत्रपेयां विनिशम्य, सुन्दरीं सुधामलं[1] कामयमान उत्सुकः।
क्रामन्नपाचीं 'हरिसेनया वृतो बभौ स काकुत्स्थ[3] इवास्तदूषण[4] ॥६-५१॥

एवं प्रतीयते यत् 'सुधामलं कामयमानः' इत्यस्य मनोज्ञसुरभिः नैषधस्य 'चेतो नलं कामयते मदीयम्' इति यावत्प्रयातः। नवमसर्गस्य ( ६६-७७ ) गङ्गावर्णनं साहित्यिकदृष्ट्योत्कृष्टतरं विद्यते। दशमसर्गस्य नानावृत्तमयं विन्ध्य-गिरिवर्णनं माघस्य चतुर्थसर्गव्याप्तं रैवतकगिरिवर्णनं स्मारयति। उभयत्र यमकालङ्कारस्यानुपमा छटा विकीर्णा वर्तते। माघे 'दारुकमुखेन' अत्र च 'प्रभाकरमुखेन' पर्वतस्य वर्णनं कारितम्।

महाकविना कालिदासेन रघुवंशस्य नवमसर्गे चतुर्थपादव्यापिना यमकेन साकं द्रुतविलम्बितच्छन्दोऽवतार्य काव्यसुधाया या मन्दाकिनी प्रवाहिता तस्या अनुसरणं माघस्य षष्ठस्य धर्मशर्माभ्युदयस्य चैकादशे सर्गे षड्तुवर्णनप्रसङ्गे कृतम्। यथा नासायां धृतमवदातं मौक्तिकं कस्याश्चिच्छुभ्रवदनाया मुखारविन्दं

---

१. तां सुन्दरीं नेत्रपेयां सुधां विनिशम्य अलमत्यर्थं कामयमानोऽभिलषन्, पक्षे तां सुन्दरीं नेत्रपेयां विनिशम्य सुष्ठुधामानि यस्यां तथा भूता सुधामा, सुधामा चासौ लङ्का चेति ताम् अयमानो गच्छन्।
२. हरिसेनया वानरसेनया पक्षेऽश्वसेनया।
३. रामः।
४. निर्दोषः पक्षे निहतदूषणाख्यराक्षसः।

विभासयति तथात्रानेन पदद्वयव्यापिना यमकेन द्रुतविलम्बितच्छन्दो विभासितम्। एतत्संदर्भस्य श्लोकद्वयं दृश्यताम्—

[1]कलविराजिविराजितकानने [2]नवरसालरसालसषट्पदः।
[3]सुरभिकेसरकेसरशोभितः प्रविससार स सारबलो मधुः ॥ १० ॥
तदभिधानपदैरिव षट्पदैः शबलिताम्रतरोरिह मञ्जरी।
कनकभल्लिरिव स्मरधन्विनो जनमदार मदारयदञ्जसा ॥ १२ ॥

धर्म० सर्ग ११

द्वादशसर्गस्य वनक्रीडा छन्दसोऽलंकारनिचयस्य चानुकूल्येन माघस्य वनक्रीडापेक्षयातिमनोहारिणी जाता। समग्रे त्रयोदशसर्गे व्याप्ता जलक्रीडभारवेः किरातार्जुनीयस्याष्टमसर्गव्यापिनीं जलक्रीडां विस्मृतां विदधाति। चतुर्दशसर्गस्य प्रदोषस्य, रजन्या, रजनीरमणोदयस्य च वर्णनं पाठकहृदयममन्दानन्दामृताप्लुतं विदधाति। सति चन्द्रोदये कमलानां लक्ष्मीश्चन्द्रमसोऽभ्यर्णं गतेत्यस्य वर्णनं दृश्यतां कियत्सुन्दर वर्तते—

तावत्सती स्त्री ध्रुवमन्यपुंसो हस्ताग्रसंस्पर्शसहा न यावत्।
स्पृष्टा कराग्रैः कमला तथाहि त्वक्सारविन्दाभिससार चन्द्रम् ॥ ५५ ॥

सर्ग १४

पञ्चदशसर्गस्य मधुपानं काव्यदृष्ट्यात्युच्चकोटिकमस्ति। मदिराया मदेन स्खलितवाचः कस्याश्चित्सुन्दर्या वर्णनं दृश्यतां कियद् हृदयहारि वर्तते—

त्यज्यतां पिपिपिपिपि प्रिय पात्रं दीयतां मुमुमुखासव एव।
इत्यमन्थरपदस्खलितोक्तिः प्रेयसी मुदमदाद् दयितस्य ॥ २२ ॥

षोडश सर्गस्य प्रभातवर्णनं माघस्यैकादशसर्गं स्मारयति। माघस्य प्रभातवर्णने यद्यपि मालिनीवृत्तेनाधिका शोभा समानीता तथापि धर्मशर्माभ्युदयस्य विचित्राः कल्पनास्तस्य स्वभावोक्तिभ्योऽतितरां रम्याः प्रतीयन्ते। दृश्यताम्,

---

१. कलवीनां सुन्दरपक्षिणां राजिभिः पङ्क्तिभिर्यत् विराजितं काननं तस्मिन्।

२. नव रसालसेन अलसाः षट्पदा यस्मिन् सः।

३. सुरभिकेसराणां मनोज्ञबकुलपुष्पाणां केसरेण किञ्जल्केन शोभितः।

चन्द्रोऽस्तोन्मुखो वर्तते, प्राच्यामरुणस्य लोहितिमा समाच्छन्नो विद्यते, दुन्दुभिश्च मन्द्रं ध्वनति। एतद्वर्णनं धर्मशर्माभ्युदये कियन्मनोज्ञं वर्तते—

राजानं जगति निरस्य सूरसूतेनाक्रान्ते प्रसरति दुन्दुभेरिदानीम्।
यामिन्याः प्रियतमविप्रयोगदुःखैर्हृत्सन्धेः स्फुटत इवोद्भटः प्रणादः ॥१६-८॥

एतस्मिन्नेव षोडशे सर्गे सेनायाः प्रस्थानं माघस्य द्वादश सर्गे वर्णितं श्रीकृष्णसेनायाः प्रमाणं स्मारयति। सप्तदशसर्गे शृङ्गारवत्याः स्वयंवरवर्णनं कालिदासस्येन्दुमतीस्वयंवरवर्णनं पृष्ठे त्यजति। स्वयंवरसभां समायान्त्येव शृङ्गारवती राज्ञां मनसि प्रविष्टा इत्यस्य श्लेषमयं वर्णनं दृश्यतां कियत्कौतुकावहं वर्तते—

पयोधरश्री–समये प्रसर्पद्धारावलीशालिनि संप्रवृत्ते।
सा राजहंसीव विशुद्धपक्षा महीभृतां मानसमाविवेश ॥ १७-१८ ॥

स्वयंवरानन्तरं राजपथे शृङ्गारवत्या सार्धं गच्छन्तं धर्मनाथं द्रष्टुं स्त्रीणां कौतूहलं परमार्थतः कुतूहलास्पदे जातम्। धर्मशर्माभ्युदयस्यैतद्वर्णनेन रघुवंश-कुमारसंभवयोर्वर्णनं पश्चात्कृतम्। विवाहदीक्षाया अनन्तरं धर्मनाथः शृङ्गारवत्या साधमधिचत्वरं सुवर्णसिंहासनमलंचकार यदा, तदैव तत्पितुरेकं पत्रं प्राप्तम्, यत्पठित्वा स सहसा कुबेरनिर्मितविमानमधिरुह्य रानपुरं प्रति चचाल। अत्रेवं प्रतीयते यत्कविना रसस्याकाण्डच्छेदः कृतः। पाठकस्य हृदये वहन्ती रसधारा एव शुष्का भवन्ती प्रतिभाति। स्वयंवरानन्तरं भविष्यता युद्धेन धर्मनाथम-स्पृष्टं रक्षितुं कविनैतत्कृतमिति प्रतीयते। कविनासौ धर्मनाथो विमानेन रानपुरं प्रेषितो, युद्धस्य च दायित्वं सुषेणसेनापतेरुपरि निक्षिप्तम्।

अष्टादशसर्गे ( ६–४३ ) संसारस्य मायाममताया विरज्य महासेनो महाराजो मुनिदीक्षां ग्रहीतुं कृतसंकल्पो वर्तते। स राज्याभिषेकानन्तरं युवराज-धर्मनाथाय यमुपदेशं ददाति स कादम्बर्याः शुकनासोपदेशस्य, गद्यचिन्ता-मणेश्चाचार्यनन्द्युपदेशस्य संक्षिप्तसंस्करणमिव ज्ञायते। तेन युवराजधर्मनाथाय गुणार्जनस्य य उपदेशो दत्तः स कविना श्लेषोपमालंकारेण कियदाकर्षकः कृत इति दृश्यताम्—

भृशं गुणानर्जय सद्गुणो जनैः क्रियासु कोदण्ड इव प्रशस्यते।
गुणच्युतो बाण इवातिभीषणः प्रयाति वैलक्ष्यमिह क्षणादपि ॥१८-१॥

एकोनविंशतितमे युद्धवर्णनाय कविना यच्छन्दश्चित्रालंकारश्चावलम्बितः स रसस्यानुकूलो नास्ति। यमकश्चित्रालंकारश्च कवेः काव्यकौशलं परीक्षि-

निकषोपलस्य कार्यं प्रददाति। महाकविहरिचन्द्रस्य कौशलं यद्यपि तदुपरि प्रखरं समवतीर्णं तथापि तेन वीररसस्य धारावरुद्धा जाता। यद्यपि भारविणा माघेन चैतद्वर्णनार्थमनुष्टुपछन्द एवावचितं तथापि पृष्ठे पुरस्ताच्चान्यैश्छन्दोभिर्वीररसस्य वर्णने समायाते तस्य प्रवाहे न्यूनता नायाता। धर्मशर्माभ्युदये तु वीररसवर्णनाय तस्यैवेकस्य सर्गस्य सत्त्वादनुकूलच्छन्दोऽभावे तस्य धारा सामग्र्येण न विकसिता।

विंशतितमे सर्गे धर्मनाथस्य भगवतो राज्यस्य तपश्चरणस्य, समवसरणस्य च यद् वर्णनं कृतं तद् यद्यपि स्वस्मिन् परिपूर्णं वर्तते तथाप्येवं प्रतिभाति यत्कविः काव्यस्यैतत्प्रमुखंकथानकं सत्वरं निवर्त्तयितुमिच्छति। एकविंशतितमस्य धर्मोपदेशो विस्तृतश्छन्दोऽनुरूपश्च विद्यते।

इत्थं धर्मशर्माभ्युदयं काव्यवैभवेन युक्तमुच्चकोटिकं महाकाव्यमस्ति।

---

# पद्यद्वयमीमांसा

## सुदर्शनः शर्मा

सन्दर्भेऽस्मिन् पद्यद्वयं मीमांसामहे। तत्रैकं रत्नावलीपद्यम् रत्नावलीकर्त्तुः, अपरं च मेघदूतकवेः। तत्र

### [१] रत्नावलीपद्यम्

श्रीहर्षवर्धनकृता नाटिका रत्नावली शृङ्गारप्रधाना क्वचित्स्थलेषु पाठभेदान् व्यनक्ति। पाठभेदभावोऽर्थभेदभावको भवितुमर्हतीति विषयमूरीकृत्य पत्रेऽस्मिन् पद्यमेकं विवक्तुमीहे। पद्यं तु तदिदमेव—

'स्थितमुरसि विशालं पद्मिनीपत्रमेतत्
कथयति न तथान्तर्मन्मथोत्थामवस्थाम्।
अतिगुरुपरितापम्लापिताभ्यां यथास्याः
स्तनयुगपरिणाहं मण्डलाभ्यां ब्रवीति॥'[1]

संस्करणान्तरं[2] तृतीयपादे 'अतिगुरुपरितापम्लापिताभ्याम्' इतिस्थाने 'अतिगुरुपरितापम्लापिताङ्ग्या' इति पाठभेदं व्यनक्ति। पाठद्वये शब्दभेदोऽर्थभेदक इति सुतरां व्यज्यते। त्रिपाठिमहोदयस्तु पाद्यमिदमेवं विवक्ति सागरिकायाः स्तनयोर्विशालत्वं सूचयन्नाह स्थितमिति–उरसि=वक्षःस्थले स्थितम् = स्थापितमित्यर्थः, एतत् = इदम्, पुरो दृश्यमानमिति यावत्, विशालम् = महत्, पद्मिनीपत्रम् = कमलिनीदलम्, (अस्याः = चित्रगतायाः सुन्दर्याः), अन्तः = मध्ये हृदयाभ्यन्तरे इति यावत्, मन्मथोत्थां मन्मथेन कामेन उत्थाम् = जनिताम्, कृतामिति यावत्, अवस्थाम् = दशाम्, तथा = तेन प्रकारेण, न कथयति = न वदति, न सूचयतीत्यर्थः, यथा = येन प्रकारेण, अतिगुरुपरितापम्लापिताभ्याम् अतिगुरुः = अतिमहान् यः परितापः सन्तापः, कन्दर्पकृता ज्वरवेदनेति यावत्, तेन म्लापिताभ्याम् = ग्लापिताभ्याम्, मण्डलाभ्याम् = स्तनसंयोगकृताभ्याम् चक्रवालाभ्याम् ('चक्रवालं तु मण्डलम्' इत्यमरः; 'अस्याः, = चित्रितायाः शयनादुत्थाय गतायाः इत्यर्थः, स्तनयुग-

१. रत्नावलीनाटिका—डा० रमाशङ्करत्रिपाठी सम्पादिता। द्वितीयोऽङ्कः पद्यं चतुर्दशम्। पृष्ठम् चतुरुत्तरशतम् (१०४ तमम्)

२. सैव—सी-आर-देवधर-एन-जी-सूरु-विद्वद्द्वयसम्पादितम् संस्करणम्। द्वादशं पद्यम् सप्तत्युत्तरचतुरम् च पृष्ठम्।

परिणाहम्-स्तनयोः कुचयोः युगम = युग्मम तस्य परिणाहः = विशालता ( 'परिणाहो विशालता' इत्यमरः ) तम, ब्रवीति = वदति, बोधयतीत्यर्थः। अतितुङ्गयोः स्तनयोरुपरि वर्तमानस्य कमलिनीपत्रस्य हृदयसंसर्गाभावात् हृदयस्थतापबोधकत्वाभावः।"[१]

देवधरमहोदयश्च पद्यमिदमेवमनुवक्ति—"विपुलं पद्मपत्रमिदम् अस्याः वक्षःस्थले वर्तमानं न तथाविधामस्याः कामयमानामवस्थां प्रकटीकरोति—यस्याः अङ्गानि अत्यर्थमनोव्यथाविसर्पेण ग्लानिं गतानि, यथाविधमुरोमण्डलगोलाकारत्वम्, मण्डलाकारचक्रसदृशबिम्बाभ्याम् व्यनक्ति इति।[२]

विद्वद्द्वयमतविवक्षायाम् विशेषेणार्थभेदः सुतरां शब्दविवक्षापरो मक्षिकास्थाने मक्षिकास्थापनतत्पर एव प्रतीयते। वस्तुतः प्रसंगोऽत्र नाटिकायाम् विप्रलम्भे सम्भोगवाञ्छापरत्वात् भावानुभावगमितः व्यभिचारिभावगर्भितः स्वाद्यत्वमानीयमानः रसनिर्माणापेक्ष्येव। न तु मेघदूतीयो विप्रलम्भोऽत्र विवक्षयः। मालविकाग्निमित्राग्निमित्रमालविकाविप्रलम्भपरकोऽयम् प्रतिमातुं शक्यते। सागरिकापरनामधेया रत्नावली नायिकाभूता उदयनेऽग्निमित्र इव मालविका धारिणीरावतीभ्यामिव वासवदत्तया पत्युः पुरस्तात् परिहारिता 'परस्परप्राप्तिनिराशयोर्वरं शरीरनाशोऽपि समानुरागयोः'[३] कालिदासप्रतिपादिता दर्शविधेयीभूता चित्रविद्याविनोदप्रक्रियामनुभवन्ती वियोगजन्यदुःखं चापहारयन्ती नायकोदयनस्य हृद्गतान् भावानुन्मोचयन्ती कविना चित्रिता वर्तते।

'निर्वेदग्लानिशङ्काश्रमधृतिजडता हर्षदैन्योग्र्यचिन्ता
स्त्रासेर्ष्यामर्षगर्वाः स्मृतिमरणमदाः सुप्तनिद्राविबोधाः।
व्रीडापस्मारमोहाः सुमतिरलसतावेगतर्कावहित्था
व्याध्युन्मादौ विषादोत्सुकचपलयुतास्त्रिंशदेते त्रयश्च ॥'[४]

---

१—प्रथमप्रसंगीये षडधिकशततमे पृष्ठे।

2—This big lotus-leaf that reposed on her bosom does not so much betray the condition produced by love in her, whose limbs have grown languid through the violence of her passion, as it reveals the size of her breasts by the circles ( formed on it ) 12.

द्वितीये प्रसंङ्गे सप्तत्युत्तरपञ्चमं पृष्ठम्।

३—मालविकाग्निमित्रे तृतीयेऽङ्के पञ्चदशः श्लोकः।

४—धनञ्जयकृते दशरूपके—४-८ पृ० २६८

डा० श्रीनिवासशास्त्रिकृते संस्करणे।

इति त्र्यधिकत्रिंशद्व्यभिचारिणो भावाः विप्रलम्भशृङ्गाराधारभूताः मनोविनोदोपायव्यपेक्षिणः रत्नावलीप्रसंगे सुघट्याः स्युः । रत्नावल्यैव सागरिकाभूतया निर्वेदग्लानिशङ्काश्रमदैन्यौग्र्यचिन्तात्रासादिभावविहितात्मभावया मनोविनोदाय चित्रितं चित्रमवलोक्य शङ्काश्रमजडता दैन्यौग्र्यचिन्तात्रासेर्ष्यामर्षगर्वादिभिग्रस्तो नायक उदयनः—

कृच्छ्रादूरुयुगं व्यतीत्य सुचिरं भ्रान्त्वा नितम्बस्थले
मध्येऽस्यास्त्रिबलीतरङ्गविषमे निष्पन्दतामागता ।
मद्दृष्टिस्तृषितेव सम्प्रति शनैरारुह्य तुङ्गौ स्तनौ
साकाङ्क्षं मुहुरीक्षते जललवप्रस्यन्दिनी लोचने ॥[1]

परिम्लानं पीनस्तनजघनसंगादुभयत-
स्तनोर्मध्यस्यान्तःपरिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः सन्तापं वदति नलिनीपत्रशयनम् ॥[2]

इति प्रकारान् मनउद्गारान् प्रकटय्य प्रसंगानुगतं पद्यं पठति । नायिकावपुर्मनसोऽवस्थामवलोक्य नायकमनउद्गारप्रकटीभावः विप्रलम्भशृङ्गारे—

'कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु'[3] इति कालिदासोक्तिपुष्टिकर एव स्यादिति विवेचनं विविच्य उदयनस्य कामार्त्तित्वेन चित्रगतायाः सागरिकायाः वपुर्लतासौहित्यं सूचितम् । चित्रगता नायिकाऽचेतना विप्रलम्भगतेन निर्विवेकेन मूढेन च धृतिश्लथेन नायकेन चेतनस्वरूपैव परिचिता । नायिकयैव स्वेन युक्तो नायकश्चित्रगतः निश्चेतनचित्रेऽपि चेतनबुद्धिमादधानः कमलपत्रपुटयुक्तस्तनीं नायिकाम् चित्रेऽपि चेतनाचितां चिन्वानः प्रसंगानुगतं पद्यं वक्ति यस्मिन् शब्दपरिवर्तनकल्पः प्रयासोऽस्मदीयः अलंकारसुषमामर्थवैचित्र्येण विवक्षामर्हति । विचारेणास्मदीयेन तु—

१ – रत्नावली—द्वितीयेऽङ्के एकादशं पद्यम् ।
त्रिपाठिसम्पादिते संस्करणे ।
नवमं च पद्यं सी–आर–देवधर–सम्पादिते संस्करणे ।
२—तत्रैव २.१३ त्रिपाठीये संस्करणे
२.११ च देवधरीये ।
३—डा० वासुदेवशरणाग्रवालसम्पादिते मेघदूते १५६ तमे पृष्ठे पञ्चमं पद्यम् ।

"स्थितमुरसि विशालं पद्मिनीपत्रमेतत्
कथयति न तथान्तर्मन्मथोत्थामवस्थाम् ।
अतिगुरुपरितापम्लापिताभ्यां यथास्याः
स्तनयुगपरिणाहः मण्डलाभ्यां ब्रवीति ॥"

पद्यमिदं सर्थकत्वदृष्ट्याऽलंकारभावनां पूर्णरूपेणैवमेव पुष्टीकरोति । सान्वयमत्र विश्लेष्यते पद्यमिदम् ।

"उरसि स्थितम् विशलं पद्मिनीपत्रम एतत् एतत् पद्मिनीपत्रं वा तथा अन्तर्मन्मथोत्थाम् अवस्थां न कथयति यथा अस्य : स्तनयुगपरिणाहः अतिगुरु-परितापम्लापिताभ्यां मण्डलाभ्याम् ( ताम् ) ( अन्तर्मन्मथोत्थामवस्थामिति ) ब्रवीति-कथयति प्रकटीकरोति ।"

अतः वक्षःस्थले निहितो वरीयान् स कमलकिसलयः तन्मात्रया सागरिका हृत्तलोत्पद्यमानां कामवासनाजन्याम आर्त्तावस्थाम् न प्रकटीचकार यन्मात्रया तामेव मनोव्यथाम् तस्याः सागरिकायाः कुचयुगलगोलाकारत्वम् अत्यर्थशरीर-दाहज्वरोष्मप्रभावान्निश्वासपरम्परापरिवेपमानचूचुकाभ्याम् परिस्फुटीचकार इति । पाठान्तरे 'अतिगुरुपरितापम्लापिताङ्ग्याः' इति समस्तपदेन—"तस्याः" इति शब्दस्थानमेव पूर्यते । पूर्वार्धे 'परिवेपमानचचुकाभ्यामिति' स्थाने 'परि-शुष्यच्चूचुकाभ्यामिति' भावो विधातुं समीचीयते ।

पयोधरोत्सेधविहितबृहत्सरोरुहपलाशे यथा यथा नायिकायाः निश्वासैः म्लायमानकुचमुखपरिवेपनादुपरिनीचैश्च विकल्पेन याति तेन तस्याः अथवा गरीयोमनोभवभावाभिभूतिप्रभावकृशवपुर्लतायाः मनसो विकारः तेन च नायकमनःप्रसत्तिरिति तादात्म्येन तात्कालिकेन विधिना भवितुमर्हतः । कुच-युगलगतगोलाकारमुखयुगलमार्दवेन तीव्रनिश्वासलीलया चाब्जोर्जित्वप्रसंगः संसूच्यते । कामवासनाधायकत्वं च विशेषेण निश्वासारोहावरोहपरम्परितं प्रवि-सर्पति । इति ।

## [२] मेघदूतीयं पद्यम्

निःशङ्कमेव विद्वद्भिः कालिदासो व्याख्यातबहुलः । न चावकाशो लभ्यते कवेः कृतिषु किमपि नवं नवं व्याकर्तुम्, तथापि 'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः'—इति तत्त्वविशेषप्रकाशनी कवेरस्य प्रज्ञा नवनवोन्मेष-शालिनीप्रतिभाप्रतीका सती किमपि क्षणे क्षणे पुनः पुनरुद्भाव्यमाना नवमेवार्थं

व्यञ्जयति। मेघदूतं हि नाम कवेरस्य कौशलाढ्या कृतिः पद्ये पद्ये प्रीतिं जनयति।

"आराध्यैनं शरवणभवं देवमुल्लङ्घिताध्वा
सिद्धद्वन्द्वैर्जलकणभयाद्वीणिभिर्मुक्तमार्गः।
व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्यन्
स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्तिम्॥"[१]

पद्यमिदमर्थवैचित्र्यव्यञ्जकम् पादोत्तरद्वये व्याख्यामर्हति।

मेघस्य रामगिर्याश्रमादलकायानमार्गम् संसूचयन् यक्षो वक्ति—

"नड्वलतृणगुल्मगुपिलाख्यजातमेनं देवमिमं भगवन्तं कार्त्तिकेयमाराध्य संपूज्य लङ्घिताध्वा संचरितमार्गः वीणिभिः वल्लकीहस्तैः सिद्धद्वन्द्वैः सिद्धानां युगलैः जलकणभयात् पानीयविप्रुड्भिर्वीणाकोणक्लेदनपरित्रासात् मुक्तमार्गः निर्बाधीकृताध्वा"—इति पद्यभागीयपादद्वये तु शब्दार्थः सुस्पष्ट एव। परं तृतीयतुरीयपादद्वये तु मतैक्यं नैव स्यादर्थविवेचने।

"सुरभितनयानां गवामालम्भेन संज्ञपनेन जायते इति यथोक्तम्। भुवि लोके स्रोतोमूर्त्या प्रवाहरूपेण परिणतां रूपविशेषमापन्नां रन्तिदेवस्य दशपुरपतेर्महाराजस्य कीर्तिम्। चर्मवत्याख्यां नदीमित्यर्थः। मानयिष्यन् सत्कारयिष्यन् व्यालम्बेथाः। आलम्ब्यावतरेरित्यर्थः। पुरा किल राज्ञो रन्तिदेवस्य गवालम्भेष्वेकत्र संभृताद्रक्तनिष्यन्दाच्चर्मराशेः काचिन्नदी सस्यन्दे। सा चर्मण्वतीत्याख्यायते। 'इति मल्लिनाथव्याख्या सावधेया।[२] मल्लिनाथटीकासावहितिः सुतरां सूचयति यत्तेन योऽप्यर्थः संगृहीतः स तु पारम्परिक एव। 'संज्ञपनेन' इति शब्दोऽत्र विवादग्रस्त इव लक्ष्यते। अमरसिंहोऽमरकोशे—

---

१—पूर्वमेघः—एम-आर काले सम्पादिते संस्करणे ४८ तमं पद्यम्।
तत्रैव श्रीरञ्जनसूरिदेवीये संस्करणे ४५ तमं पद्यम्।
मेघदूतम्—एस-के-दे-४१ तमं पद्यम्।
मेघदूत विलासः—वाक् कन्वे कृतं संस्करणम् ४५ तमं पद्यम्।

२. एम-आर-काले संस्करणे ४१-४२ पृष्ठद्वयम्।

'निर्वासनं संज्ञपनं निर्ग्रन्थनमपासनम्' संज्ञपनशब्दमर्थचतुष्टयेन वक्ति। न त्वत्र—

'निस्तर्हणं निहननं क्षणनं परिवर्जनम्।[१]
निर्वापणं विशसनं मारणं प्रतिघातनम्॥[२]

इतिप्रकाराः अर्थाः समपेक्षिताः। अतः संज्ञपनशब्दो विशसनमारण-पर्यायस्तु नैव कोशकृतामरसिंहेन परिकल्पितः इति वक्तुं पार्यते। 'निर्वासनं, निर्ग्रन्थनम् अपासनम्' इति शब्दत्रयं तु वासात् निर्मोचनम् विश्लथीकरणम्, दूरीकरणमिति भावत्रयविशेषकं लक्ष्यते अतः मल्लिनाथेनापि—

"गवां संज्ञपनेन लोके प्रवाहरूपेण रूपविशेषमापन्नां दशपुरपतेर्महाराजस्य कीर्तिम् चर्मण्वत्याख्यां नदीमित्यर्थः' इति भावो विशेषीकृतः। 'पुरा किल' इति शब्दैस्तेन गवामालम्भेषु एकत्र संभृतरक्तनिष्यन्दाच्चर्मराशेः काचिन्नदी सस्यन्दे इति भावोत्तरत्वं व्यञ्जितम्। रन्तिदेवो हि नाम राजा गवां हननात् रक्तं स्रावं स्रावं सरित्पूरमाप्लाव्य चर्मण्वतीनदीं निर्मिमाय इति सर्वमान्यो मतोऽर्थरूपेण विद्वद्भिः पेशलीकृतः। परमश्रद्धेयोऽयमभिप्रायो लक्ष्यते कारणान्तरैः।

राजा प्रकृतिरञ्जनात्।[३]
वसुमत्या हि नृपाः कलत्रिणः।[४]
प्रजानां विनयाधानाद्रक्षणाद्भरणादपि[५]
स पिता पितरस्तासां केवलं जन्महेतवः[६]॥

'आर्त्तत्राणाय नः शस्त्रं न प्रहर्तुमनागसि' इत्यादर्शाः कविना कालिदासेन स्वान् राज्ञ अधिकृत्य प्रतिपादिताश्चेत् कथं तर्ह्यसौ नाम 'क्वापि काव्ये

---

१. अकारादिक्रमसंख्या १६६४तमी नारायणरामाचार्यसंस्करणे। पृष्ठमष्टसप्ततितमम्।
२.-५ तत्रैव १६६५-१६६६ पृ० ७८
३. रघुवंशे ४. १२ पृ. ९५. जी-आर-नन्दर्गीकर-संस्करणे।
४. तत्रैव ८. ८३ पृ. २५२.
५. तत्रैव १. २४. पृ. ११.
६. अभिज्ञानशाकुन्तले १. ११. पृ. १८.
एम-आर-काले-संस्करणे।

आदर्शभङ्गः प्राणिसंहारकल्पः केनचित्प्रजारञ्जकेण राज्ञा कृतः कविना च प्रतिपादितः सन् विश्वास्यो भवेदिति विषयो विशेषणीयः। कालिदासो हि नाम वेदाध्येता वेदविद्यार्थमूलप्रतिपत्तिधायकः—

'श्रुतेरिवार्थं स्मृतिरन्वगच्छत्'[1]
'दिनक्षपामध्यगतेव संध्या।'[2]
'निवर्त्य राजा दयितां दयालुस्तां
सौरभेयीं सुरभिर्यशोभिः।'
पयोधरीभूतचतुः समुद्रां
जुगोप गोरूपधरामिवोर्वीम्॥'[3]

इति स्वरघुवंशे 'श्रुतिस्मृत्योः सायुज्यत्वं, सन्ध्याप्रतिरूपिणीं गां परिकल्प्य तां पयोधरीभूतचतुःसमुद्राम् उर्वीम्' मत्वा राज्ञा दिलीपेन परिरक्ष्यमाणां प्रथयति। अथ 'गौः' नाम जन्तुः ऋग्यजुरथर्वसामवेदेषु,[4] शतपथब्राह्मणे[5] तैत्तिरीयब्राह्मणे,[6] ताण्ड्यब्राह्मणे, मनुस्मृतौ[7] च सामान्यतः "अघ्नी" इति मतः। 'अघ्नी' शब्दः ऋग्वेदे[8] (१०-४६-३) इति प्रसंगे 'गोः' समानार्थकः। 'न हन्तुं योग्या' 'हन्तुमयोग्येति' वा 'अघ्नी'।

कथं नु शक्योऽनुनयो महर्षेर्विश्राणनाच्चान्यपयस्विनीनाम्।
इमामनूनां सुरभेरवेहि रुद्रौजसा तु प्रहृतं त्वयास्याम्॥[9]

---

१. रघुवंशे २, २, पृ० ३६ नन्दर्गिकर संस्करणे।
२. तत्रैव २, २०, पृ० ४३,
३. तत्रैव २, ३ पृ० ३७,
४. ऋग्वेदे—१०, ८७; १६, १६; ७-४० ( २, ४ ); यजुर्वेदे ३६, १८; सामवेदे ८०, अथर्ववेदे १६, ४८; १८-४; ८, ६-२३; ५, २६, ११; ८, ३-१८; ५, २६, १०;
५. ६, २, १५, १, १, ६, ७, ८;
६. १८
७. २, १७७
८. संस्कृताङ्ग्लकोशः—सर मोनियरविलियम्ज
९. रघुवंशे २, ५४, पृ० ५५

इति पद्ये कविना पुनरपि 'सुरभितनया' नन्दिनी 'सुरभेरनूना' 'हन्तुमयोग्या' 'अघ्नी' वा पुष्टीकृता । अतः मेघदूतीयं पद्यमिदं वयमेवं परिचिन्मः—

"सुरभितनयानां गवां आलम्भेन समन्ततः प्रापणेन जाताम्[1] अपि च स्रोतोमूर्त्या प्रवाहरूपेण नदीरूपेण वा । गवां प्राप्तिः नदीनां निर्माणं च राज्ञां व्यसनमभूत् । गवां लब्धिः रक्षाविधेया सती राज्ञो यशस्करी । एवमेव सेचनकर्मकौशलमपि राज्ञां यशस्करमेव स्यात् । सुरभितो नयो नीतिमार्गः सुगन्धितो राज्यकार्यविधिः । प्रसरणशीलो विधिः सुव्यवस्थितो वा नीतिमार्गः श्लेषेण गवां प्राप्तये दुग्धप्राप्तिभावं प्रथयति । प्रजानां पोषणं च व्यनक्ति । सुव्यवस्थितनीतिमार्गेण गवां प्राप्त्या च जातामुत्पन्नामेवमेत्र चर्मण्वतीनदीनिर्माणप्रजाहितार्थकार्यकरणं रन्तिदेवस्य यशःपताकां प्रसरन्तीं पृथिव्यां राज्ञोऽस्य कार्यं श्लाघ्यं मानयन्तीम्मानयिष्यन् समादरेण परिकीर्त्ततितुमिच्छन्—व्यालम्बेथाः विश्रामं कुर्याः इति मेघसम्बोधनम् ।"

१—नन्दर्गिकर संस्करणे ।

# मेघदूतेऽभिव्यक्तिदोषाः

## डा० रेवाप्रसादद्विवेदी

कालिदाससाहित्ये मेघदूतम् अभिव्यक्तिदृशा प्रारम्भिकमिव प्रतीयते। यथैतत् तद् यथापद्यक्रमं संक्षिप्योपस्थापयामः। तथाहि—

१. 'कश्चित् कान्ताविरहगुरुणा स्वाधिकारप्रमत्तः
शापेनास्तंगमितमहिमा वर्षभोग्येण भर्तुः।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु॥

इति प्रथम एव पद्ये गर्भितत्वं नाम वाक्यदोषमनुभवामः। तथाहि पद्येऽस्मिन् वाक्यार्थद्वयं हेतु-हेतुमद्भावेन सुकवेर्निबिभन्त्सितम्, शापवाक्यार्थः, प्रवासवाक्यार्थश्च। तत्र द्वितीयो विधेयः। तत्रापि यक्षमुद्दिश्य वसतिकरणक्रिया विधेयतया प्रस्तूयते। ततश्च योऽयं शापवृत्तान्तः स यक्षविशेषणीभूतास्तंगमितमहिमत्वविशेषणतया स्फुटमेवोद्देश्यतावच्छेदकम्, तत एव चाप्रधानम्। अप्रधानस्यास्यात्राविच्छिद्यबोधितैवोचिता। नास्ति च सा, तन्मध्ये 'स्वाधिकारप्रमत्तता-'त्मनो यक्षविशेषणस्य निक्षिप्तत्वात्। तेन हि किंपदवाच्याद् व्यक्तिविशेषाद् उड्डीना मतिः कान्ताविरहगुरुत्वकक्षामाक्रम्य शापक्षेत्रे प्राप्तप्रवेशापि 'स्वाधिकारप्रमाद-' रूपेण व्यक्तिविशेषस्यैव विशेषणेन खण्डितप्रसरा सती तमेव व्यक्तिविशेषं पुनरागच्छति। न च शाप-शप्त-योर्विशेषणगतं साम्यमत्र विवक्षितं 'ततो मृगेन्द्रस्य मृगेन्द्रगामी-'त्यत्रेव, 'विद्युत्वन्तं ललितवनिता' इत्यत्रेव वा, येनेदमधिगतक्रम-वक्रभावविच्छित्तिकमुपगम्येत। ततः—

'कश्चित् कान्ताविरहगुरुणा वर्षभोग्येण भर्तुः
शापेनास्तंगमितमहिमा धर्मलोपागतेन।' इति

योजनान्तरमत्र श्रेयस्करमुत्प्रेक्षामहे। न च 'नास्ति तथापि क्षेमः, शापतद्विशेषण-धर्मलोपागतत्वयोर्यक्षविशेषणीभूतास्तंगमितमहिमत्ववाचकपदव्यवहितत्वात्' इति वाच्यम्, हेतुवाक्यमुख्यार्थीभूते शापे तदपरिहार्यत्वसाधने भर्तृसम्बन्धित्वे, तद्गुरुत्वसाधने कान्ताविरहविषयकत्वे सति वर्षभोग्यत्वे चाखण्डिततया लब्धे तदौचित्यसाधनत्वमात्रौपयिकस्य धर्मलोपागतत्वरूपस्य

विशेषणस्य व्यवधाय बुद्धत्वेपि दोषानुभवाभावात् । अस्ति च धर्मलोपागतत्वं महिमलोपे साधनम् । ततो महिमलोपोपक्षेपानुव्याहृतिकत्वमेवात्र प्रत्युत श्रेयस्करम् । न च 'धर्मकर्मप्रमादी-'ति यक्षविशेषणतयैव धर्मलोपोपक्षेपे कृते नास्ति व्यवहितिभीति-'रिति वाच्यम्, तथा सति व्यवधानदोषाभासनेत्रांजन-परिहारे संभवत्यपि विरुद्धमतिकृत्त्वस्य प्रसक्तेः । ननु कीदृशं तदिति चेत् 'तथा सत्यस्तंगमितमहिमत्वस्यैत्र हेतुत्वं धर्मकर्मप्रमादस्यैव च तत्कार्यत्वमत्र प्रतीयेत', 'यतो यक्षः अस्तंगमितमहिमा ततो धर्मकर्मप्रमादी-'ति । सर्वथा विशेषणविन्यासक्रमोऽत्र कवेश्छन्दोयोजनादौर्बल्यं प्रत्याययति । वस्तुतः श्लोक-द्वयमत्र सुकविना निर्मातव्यम् एकं शापवृत्तान्ताय, अपरं च ततः परं प्रवासोदन्ताय ।

### २. 'आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुम्—'

इत्यत्र प्रथमपदं प्रमुखत्वमात्रपरमिति निर्णीतमेवास्माभिः मेघालोक-शापावसानावधेः प्रसिद्धचातुर्मास्यपरत्वं निर्णीय । प्रमुखत्वाय च पद्येऽत्र प्रमुखमेव पदमत्र दातुं शक्यते । ततश्च तददत्वा तदर्थं प्रथमपदमुपाददता सुकविना दर्शितैवात्मनः अवाचकत्व-निहतार्थत्वान्यतर प्रति अनवहितता । यदि च प्रतिपदेवात्र प्रथमपदाद् विवक्षिता तर्हि 'आषाढस्य प्रतिपदि तिथा-' वित्येवोच्येत । न च 'आषाढस्य मेघं प्रथमदिवस आश्लिष्टसानुं ददर्शे-' त्यन्वयोऽत्र क्षेमंकरः, तथापि 'आषाढीयं प्रथमदिवसे श्लिष्टसानुं स मेघम्'-इति वक्तुं युज्येत, येनात्र गर्भितत्व-संदिग्धत्वा-भवन्मतयोगत्वादिकस्य शङ्का-पङ्कः परिक्षाल्येत ।

### ३. 'प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी
### जीमूतेन स्वकुशलमयीं हारयिष्यन् प्रवृत्तिम् ॥'

इत्यत्र दयिताजीविताालम्बनार्थं मेघस्य 'जीवनस्य मूतः पटबन्ध' इति व्युत्पत्तिगर्भं जीमूतेति पदं स्वकीयं योगार्थमेव प्रदर्शयितुं सार्थकतां बिभर्त्ति । तदर्थं च कविनानेन 'जीमूतं तं स्वकुशलमयीं हारयिष्यन् प्रवृत्तिमि-'ति वचनोपन्यास आदरणीयः । एवं सति मेघपदार्थस्य प्रकरणादेव सुलभत्वे तदर्थं जीमूतपदोपग्रहोऽपुनरुक्ततामासादयेत्, आसादयेच्च स्वकीयं योगार्थं प्रति सचेतसां चेतोधातुं प्रवर्त्तयितुं कुर्वद्रूपताम् ।

---

१. अभिव्यक्तिरत्र वक्तव्यप्रतिपादनम्, न तु व्यञ्जनावृत्तिः ।

४. "धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः
संदेशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ।
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे
कामार्त्ता हि प्रकृतिकृपणाश्चेताचेतनेषु ॥—" इति

पद्यस्य चतुर्थे चरणे यत् प्रकृतिपदं तत् संदर्भविरुद्धम् । तथाहि पदमिदमत्र स्वभावार्थकमेव संभवति, तेन यक्षस्य स्वभावे चेतनाचेतनाविवेककार्पण्य-दोष आधीयते । एतेन च दोषेण तस्य प्रमत्तता पर्यवसीयते । ततश्च 'जातं वंशे भुवनविदित' इति, 'मार्गं तावच्छृणु कथयत' इति विवेकातिशयसौभाग्यभाञ्जि यानि तस्यैव वचांसि तानि स्वभावविरोधं भजन्ति । अस्ति चात्र "प्रणयकृपणा' इति पाठः ।

किं च समापतत्येवास्मिन् पद्यार्थे प्रबन्धानौचित्यम् । ये कामार्त्तास्ते भवन्त्येव चेतनाचेतनेषु प्रणयकृपणाः । कालिदासस्यैव हि तथाविधकार्पण्याय प्रथिताः [1]पुरुरवःप्रभृतयोऽत्र प्रमाणम् । एवं कामार्तत्वेनैत्र प्रणयकृपणतायाः सिद्धौ को नु गुण एतस्य पद्यार्थस्योपनिबन्धने । न च तथोपनिबद्धमेतेन विक्रमोर्वशीये, न वा रघुवंशस्य रामवियोगप्रकरणे । आर्त्तिश्चेयमुपनिबद्धैवः 'कामी' त्यादिभिर्विशेषणपदैः पूर्ववर्त्तिनि संदर्भे । इत्थं पद्यार्थ एष प्रकरणेऽत्र पुष्टात्मतां नासादयति ।

५. 'जातं वंशे भुवनविदिते पुष्करावर्त्तकानां
जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः ।।'

अत्र प्रकृतिपदेनादावर्थद्वयं प्रतीतिपथमुपयाति प्रधानरूपम्, अमात्यरूपं चेति । अनयोः प्रथमे नेयार्थता क्लिष्टता वा प्रसज्यते परत्र च निहतार्थता । तथा हि प्रथमे प्रकृतिपदात् प्रथमं सांख्यानां प्रकृतिरुपतिष्ठते, ततः तस्याः पर्यायः प्रधानम्, तदनन्तरं चाभिन्नानुपूर्वीकशब्दवाच्यतयाऽस्मादेव शब्दादन्यदप्येकं प्रमुखत्वपरं प्रधानपदमुन्मिषेत्, ततश्च कदलीगर्भपत्रन्यायेन विकल्पपरानन्तरं प्रकृतार्थानुगुण्यभाजोऽर्थस्यास्य स्यादुपलम्भः । ततश्च जायेतैव रसभोगे विलम्बः । द्वितीये प्रकृतिशब्दात् अमात्यरूपोऽर्थो निघण्टबलाद् राजशास्त्रप्रसिद्धया वा लब्धोऽपि कथंचित् पुरुषपदसाहचर्याज्जायेतैव सांख्यप्रकृति-

१—एतदर्थं द्रष्टव्योऽस्माकं 'कालिदासभारती'—तिलेखमालायाः पञ्चमो लेखः [ सागरिका ५।४ अङ्के ]।

स्मारकम्, ततश्च जायेतैवानभिमतवाच्यत्वकवलितम्। नास्ति हि अमात्यरूपेऽर्थे प्रकृतिशब्दस्तथा प्रतीतः 'प्रकृतिरेव सतामविषादिता' इत्यादिषु स्वभावरूपे तस्मिन् यथा। एवं च गवेषणमात्रलभ्य एवैषोऽर्थः, न च भवति गवेषणं रसभोगेऽनुगुणम्।

६. 'त्वामारूढं पवनपदवीमुद्गृहीतालकान्ताः
प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादाश्वसन्त्यः ॥'

अत्र यत् पवनपदवीपदं तत् निहतार्थम्, 'क्वचित् पथा संचरते घनानां क्वचित् खगानां मरुतां क्वचिच्च' [ रघुवं० १३ ] इति, 'वायोरमुं परिवहस्य वदन्ति मार्गम्' [ शाकु० ७ ] इति च कालिदास एव वायुमार्गत्वेनाकाशस्थलविशेषस्य प्रथमं प्रतीतेः, अलब्धप्रसरतया च पश्चादाकाशमात्रपरतया तदवगतेः।

७. 'कर्तुं यच्च प्रभवति महीमुच्छिलीन्ध्रामवन्ध्यां
तच्छ्रुत्वा ते श्रवणसुभगं गर्जितं मानसोत्काः।
आ कैलाशाद् बिसकिसलयच्छेदपाथेयवन्तः
सम्पत्स्यन्ते नभसि भवतो राजहंसाः सहायाः ॥'

अत्र मतुप्प्रयोगो व्यर्थः, समासवृत्त्यैव तदर्थलाभात्। न च प्राशस्त्यार्थं स इति वाच्यम्, आश्रयासिद्धेः। कथमिति चेत्, मतुबर्थानां भूमनिन्दादीनामेवात्राप्रसक्तेः। अत एव व्यक्तिविवेककारोऽत्र पौनरुक्त्यमेव पश्यति, त्वगुत्तरासंगवतीमि' [ कुमार–५ ] त्यत्रेव। अत एव च ब्रह्मणि भूमनिन्दादीनामसंगतेः 'अनादिमत् परं ब्रह्मे'ति गीतावचनम् अनादि च मत्परं वासुदेवश्रीकृष्णपरं चेति विच्छिद्य शोधयन्ति विज्ञाः।

८. रत्नच्छायाव्यतिकर इव प्रेक्ष्यमेतत् पुरस्ताद्
वल्मीकाग्रात् प्रभवति धनुष्खण्डमाखण्डलस्ये–'

त्यत्र 'चिन्तारत्नमिव च्युतोऽसि करतो धिङ् मन्दभाग्यस्य मे' इत्यत्रेव, 'हंसीव धवलश्चन्द्र' इत्यत्रैव वा भग्नप्रक्रमत्वं कृतपदमेव। कथमिति चेदेवं 'यदिदमत्र प्रेक्ष्यत्वं तदेवात्र साधारण्येन विवक्षितमिति निर्विवादमेव एतद्वाचकं च यत् प्रेक्ष्यमिति पदं तन्नपुंसकलिंगपठितत्वाद् शब्दवृत्त्या धनुष्खण्डरूपेण केवलेनोपमेयेनैवान्वेति, नोपमानेनापि रत्नच्छायाव्यतिकररूपेण, तद्वाचकस्य पुंसि पठितत्वात्। न च एकशेषेण पुं-नपुंसकयोर्मध्य

न्नपुंसकत्वमात्रशेषमादाय साधारणधर्मसंगतिरिति वक्तुं शक्येत, तथापि व्यतिकरपक्षे कल्पनया शब्दविशेषप्रसवः, ततश्च तदुपनीतेनार्थेन वाक्यार्थोपपत्तिरिति विलम्बार्गलाबन्धान्नास्ति क्षेमंकर एष निर्वाहवृत्तान्तः। नास्ति चैकशेषस्य साहित्यशास्त्रसम्मतत्वम् अनुक्तितिरस्कृतत्वात्। अस्ति च तत्रापि गण्डोपरि स्फोटः, पृथक्शब्दाभ्यामुपस्थितयोर्धर्मयोः साधारण्यस्य पार्थक्यबोधबाधितत्वात्। तत्राप्यभेदसाधनाय कक्षान्तरकल्पनागौरवमंगीक्रियेत। ततश्च स्थित एवात्र चमत्कृतिभंगे विलम्बः।

६. "नीपं दृष्ट्वा हरितकपिशं केसरैरर्धरूढै-
राविर्भूत-प्रथममुकुलाः कन्दलीश्चानुकच्छम्।
जग्ध्वारण्येष्वधिकसुरभिं गन्धमाघ्राय चोर्व्याः
सारंगास्ते जललवमुचः सूचयिष्यन्ति मार्गम्॥"

इति मल्लिनाथादृते पाठेऽत्र क्रमेलकवदसस्थुलो वाक्यार्थः प्रहेलिकार्थं विडम्बयति। अत्र प्रथमं पूर्वार्धवाक्यार्थस्य तृतीयचरणारम्भकप्रथमपदप्रतीतार्थसापेक्षत्वाद् अर्धान्तरैकवाचकत्वरूपो वाक्यदोषः सुप्रतीतः, अपरं च पूर्वकालक्रियायास्त्रित्वेऽत्र द्वितीयक्रियावाक्यार्थसमुच्चयोऽनपेक्षितः, ततश्च तदर्थं द्वितीयपादे चकारव्याहृतिः पुनरुक्तैव। अस्मिंश्चोचिततयाभिमते प्रथमपादगततयापि तादृशस्य कस्यचित् समुच्चायकस्योपादानमभ्यर्हितम्। नास्ति च तदिति जागर्त्येवात्र वाच्यावचनत्वम्, न्यूनपदत्वं वा। नास्ति चात्राधिकं पुष्टम् अधिकत्वम् अधिकसुरभि-पदप्रतिपाद्यम्। सुरभिं गन्धमाघ्रायेति वाक्यादपि प्रतिपाद्योपपत्तेरनुपपत्तेः। वस्तुतोऽत्र तृतीयचरणारम्भे यत् पाठान्तरं तदेव साधीयः। तच्च 'जग्ध्वा' इत्यस्य स्थाने 'दग्धे-'तिरूपम्। अस्ति चैदभिमतं टीकाकृताम्। तेन हि पृथिवीगन्धसौरभ्ये यदाधिक्यं तदप्युपपद्यते, दग्धस्य मृत्पिण्डस्य तथादर्शनात्, कालिदासेऽपि

तदाननं मृत्सुरभि क्षितीश्वरो रहस्युपाघ्राय न तृप्तिमाययौ।
करीव सिक्तं पृषतैः पयोमुचां शुचिव्यपाये वनराजिपल्वलम्॥ इति

रघुवंशे तस्य तथैवोपपादितत्वदर्शनात्। न च भवति तथा समुच्चायकपौनरुक्त्यार्धान्तरैकवाचकत्वयोश्च व्यासंगः। परिह्रियते च तथा तथाकल्पितात्मनो न्यूनपदत्वस्य क्लृप्तिः।

अत्र सारंगपदमपि क्लिष्टार्थकम्। तद्धि कालिदाससाहित्ये तत्समकालिकेऽमरकोशे च मृगश्चातकश्चेति द्वयोरेवार्थयोः प्रसिद्धम्। यथा चैतत् तदमरकोशस्य—'चातके हरिणे पुंसि सारंगः' इति वचनात्, कालिदासस्यैव च—

हरिणार्थे १. रामस्त्वासन्नदेशत्वाद् भरतागमनं पुनः।
आशंक्योत्सुकसारंगां चित्रकूटस्थलीं जहौ॥ रघु० १२।२४

२. तवास्मि गीतरागेण हारिणा प्रसभं हृतः।
एष राजेव दुष्यन्तः सारंगेणातिरंहसा॥ शाकु० १।५॥

३. दूरममुना सारंगेण वयमाकृष्टाः॥ शाकु० १।७॥

४. इमं तावत् प्रियाप्रवृत्तये सारंगमासीनमभ्यर्थये—
कृष्णशारच्छवियोंसौ दृश्यते काननाश्रयाः।
नवशष्पावलोकाय कटाक्ष इव पातितः॥ विक्रमो० ४।५६॥

५. प्रथमं सारंगाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम्।
अनुशयदुःखायेदं हतहृदयं संप्रति विबुद्धम्॥ शाकु० ६।७॥

६. शरीरं क्षामं स्यादसति दयितालिंगनसुखे
भवेत् सास्रं चक्षुः क्षणमपि न सा दृश्यत इति।
तया सारंगाक्ष्या त्वमसि न कदाचिद् विरहितं
प्रसक्ते निर्वाणे हृदय परितापं व्रजसि किम्॥ मा० ३।१॥

—इत्येवं शब्दस्यास्य षोढा प्रयोगात्, प्रयोगाच्च

स्तूयमानः क्षणे तस्मिन्नलक्ष्यत स वन्दिभिः।
प्रवृद्ध इव पर्जन्यः सारंगैरभिनन्दितः॥ रघु० १७।१५॥

इत्येवमेकवारं चातकार्थे। ततश्चास्मिन् मेघपद्ये कुरंग-मतंगयोरपि य... सारंगपदेनादानं तद् दुष्करमेव। यद्यपि पश्चाद्वर्त्तिनि विश्वप्रकाशनाम्नि महेश्वरकृतावनेकार्थकोषे 'सारंगश्चातके भृंगे कुरंगे च मतंगजे' इत्येवं कुरंगम... तंगपरत्वमप्यस्य प्रसिद्धम्, तथापि कालिदाससमये तथाप्रसिद्धेरदर्शनादनु... सन्धानमात्रनेयार्थकत्वमेतयोरर्थयोः, ततश्च सिद्ध एवात्र क्लिष्टत्वनामार्थदोषः।

अत्र इदमप्येकमपरमनुसन्धेयं यत् प्रथमपादार्थकर्तृत्वेनोत्प्रेक्षिते भृंगरूपि... सारंगपदार्थे नीपदर्शनस्य दग्धारण्येति पाठे च द्वितीयपादार्थकर्तृत्वेनोत्प्रेक्षि... मृगे कन्दलीदर्शनस्य कथमुपपत्तिः। तौ हि भृंगकुरंगौ नीपं कन्दलीं च घ्रा... रसनाभ्यां भोक्तुं प्रतीतौ, न तु चक्षुर्भ्यां द्रष्टुम्। एवं सति दृष्ट्वेत्यस्य स्था... स्पृष्ट्वेति पाठकल्पना समौचितीसुभगा स्यात्। सर्वथा एतेषु सर्वेष्वपि... सारंगशब्दस्य पुनरनुसन्धानरूपामावृत्तिं विना संगतत्वाभावादस्त्येवैतत् प... प्रहेलिकासोदरम्, ततश्च विप्रलम्भबन्धुरेऽस्मिन् काव्ये गड्डुभूतमेव।

इदमपरमत्र संभाव्येत यत् यदि दृष्ट्वेत्येव पाठो मन्यते तदा कदाचित् सारंगपदं देशभाषापदमिव मनुष्यार्थकमपि भवेत्। वर्षारम्भे प्रायेण मनुष्या एव वृक्षविकारान् पार्थिवं गन्धं च सप्रहर्षमध्यक्षीकुर्वन्ति। अस्ति च देशभाषा-पदं संस्कृतेऽपि मान्यप्रयोगम्, मन्यते च स्वयं कालिदासस्यैव 'हाला' पदं मल्लिनाथस्तादृशमेव।

१०. 'नीचैराख्यं गिरिमधिवसेस्तत्र विश्रामहेतोः—

इति पद्ये यदिदं विश्रामपदं तत् पाणिनीयां व्याकृतिस्मृतिमनुसृत्य असाधुत्वविश्रान्तिपदमेव 'नोदात्तोपदेशस्य मान्तस्यानाचमेः-' इति वृद्धि—प्रतिषेधात्। 'प्रज्ञादिभ्यश्चे-'ति स्वार्थे अणि श्रामशब्दं संसाध्य विशिष्टार्थकेन 'वि'-पदेन 'प्रादिभ्यो गताद्यर्थे प्रथमये-'ति वार्त्तिकेन समासात् साधुत्वमुद्भाव्यते चेदुद्भाव्यताम्, श्रमापहारस्तु ततो द्योतयितुं न शक्येत, अस्ति चात्र स एव विवक्षितः। नास्ति च सोऽपि मार्गः प्रशस्तः 'अनाचमिकमिवमीनामिति वक्तव्यमि-'ति धात्वन्तराय वृद्धिवर्त्म निर्मिमाणस्य श्रमसंग्रहः क्रियते नु श्रमाय स्याद् वार्तिककर्त्तुः। का चावश्यकता तादृशवार्तिकारम्भस्य, 'प्रज्ञादिभ्यश्चे-'ति सूत्रेणैव काम-वाम-शब्दयोः सिद्धेः। ततश्च 'विश्रामो वे-'ति चान्द्रव्याकरणं शरणीकुर्वाणो मल्लिनाथ एवात्र युक्तदिक् यद्यपि चान्द्रस्यास्य व्याकरणस्य कालिदासपूर्ववृत्तित्वाभावे तत्रापि न प्रसीदति गवेषकाणां चेतः। अतो **विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुरि-'**ति शाकुन्तलप्रयोगोऽपि प्रयोगस्या-स्यास्य सहयुध्वैव।

११. तां कस्यांचिद् भवनवलभौ सुप्तपारावतायाम्'—

इत्यत्र वलभीपदं दीर्घेकारान्तमेव प्रसिद्धम्, गोपानसी तु वलभी-'ति नाम-लिङ्गानुशासनप्रमाणात्, ततश्च

'तेन दूतिविदितं निषेदुषा पृष्ठतः सुरतवाररात्रिषु।
शुश्रुवे प्रियजनस्य कातरं विप्रलम्भपरिशंकिनो वचः ॥र०१९। ८ इति,
'क्लृप्तपुष्पशयनाँल्लतागृहानेत्य दूतिकृतमार्गदर्शनः।
अन्वभूत् परिजनांगनारतं सोऽवरोधभयवेपथूत्तरम् ॥ र० १९।२३ ॥

इति च दीर्घेकारान्तमपि दूतीशब्दं ह्रस्वीकुर्वतः कालिदासस्य वलभी-पदेपि ह्रस्वीकरणप्रयासश्छन्दोमात्रनिर्वाहमूलक एव। यद्यपि 'दूत्यां दूतिरपि-' इति शब्दभेदप्रकाशमाश्रित्य दूतिशब्दः, अभिच्प्रत्ययेन च वलभिशब्दोऽपि

साधयितुं शक्यते, तथापि मार्गान्तरपरिग्रहः स्यादेवात्र क्लेशकरः। ततश्चात्र शब्दासाधुत्वरूपं च्युतसंस्कृतित्वं परिहरत्येव वाक्यार्थैकीभावनिष्कलुषताम्।

१२. ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी
पुत्रप्रेम्णा कुवलयदलप्रापि कर्णे करोति।
धौतापांगं हरशशिरुचा पावकेस्तं मयूरं
पश्चादद्रिग्रहण - गुरुभिर्गर्जितैर्नर्तयेथाः ॥'

अत्र प्रापिपदं दुरूहार्थकम्। मल्लिनाथस्तत्र क्रियाविशेषणत्वं, क्विबन्तत्वात् सप्तम्यन्तकर्णविशेषणत्वं वा पश्यति। तदुभयमपि प्रसादप्रासादच्युतम्। अत एव स्थिरदेव-चारित्रवर्धन-दक्षिणावर्त्तनाथ-पूर्णसरस्वती-परमेश्वरैः 'कुवलय-दलक्षेपी-'ति पठ्यते। उद्ध्रियते च मल्लिनाथेनापि तेषामेष पाठः। पाठान्तरमिदं बर्हविशेषणतया नीयते ततश्च तेषां मते क्विबन्तत्वात् सप्तम्यन्तत्वसाधनेन जायमाना दुर्गतिर्न प्रसज्यते। वस्तुतः मल्लिनाथपाठः संस्कारद्वयेन निर्मितः। एको वल्लभदेवपाठसंस्कारः, परश्च दक्षिणावर्त्तनाथपाठसंस्कारः। वल्लभदेवः 'कुवलयपदप्रापि-'इति पाठं मनुते, ततश्च प्रापीति वल्लभात्, दलपदं च दक्षिणावर्त्तादादाय 'कुवलयदलप्रापी-'ति पाठः प्ररोहति। अनेन च सांकर्येण, किं नु चित्रं यदि व्यालुप्येत मूलम्। यद्यपि 'रुदता कुत एव सा पुनर्भवता नानु-मृतापि लभ्यत' इत्यादिषु क्विबन्तत्वं मल्लिनाथादिभिः प्रसाधयितुं यत्येत तथापि वस्तुतः तत्रापि वर्त्ततेऽसावेव दोषः। अत एव च महिमाचार्यस्तत्र न ह्येव श्रद्धत्ते। सति च सरले पथि क्लिष्टेन तेन को नु सचेता प्रसरीसरीतु।

१३. 'आराध्यैनं शरवणभवं देवमुल्लंघिताध्वा
सिद्धद्वन्द्वैर्, जलकणभयाद् वीणिभिर्मुक्तमार्गः।
व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्यन्
स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्तिम् ॥

अत्र आलम्भशब्दो मीमांसामात्रप्रसिद्धः ततस्तच्छास्त्रानभिज्ञं प्रति नियत-मेव रसप्रतीतिविघ्नविधाता। मल्लिनाथः शब्दमेतं संज्ञपनशब्देन विवृणोति। तदपि च तथैव मीमांसाप्रसिद्धमेव। अमरकोशे शब्द एष वधार्थकतया गणितः—'आलम्भपिञ्जविशरघातोन्माथवधा अपी'—ति। मीमांसकाः पुनः शब्दमिममिदानीमन्यथयितुं प्रयतिताः। ते हि गोवधविरोधाय गवालम्भं गवां स्थानविशेषे बन्धनेन चरितार्थयन्ति। यच्च मल्लिनाथस्य संज्ञपनं तदपि यस्माद् धातोः निष्पद्यते तस्यापि प्रथमतमोऽर्थः मारणमेव। यथा चैतत् तद

पाणिनीयाद् धातुपाठादेव प्रतीतम्—'मारण-तोषण-निशामनेषु ज्ञा' इत्यस्याद् । भानुजिदीक्षितः अनयोः द्वयोः एतत्सहचरितानामन्येषां चाष्टाविंशतेः अमरसिंह-पठितानां 'त्रिंशन्मारणस्य' इति मारणार्थकत्वमेव पश्यति । न च संभवति गवां मारणं विना तेषां रुधिरप्रवाहः, न च संभवति ततो नदीविशेषस्य निर्माणम् । इयमेव च स्थितिः तेषु सर्वेष्वपि स्थलेषु येषु केचित् अप्रसिद्धाः पुराणकथांशाः कविनानेनोपनिबद्धाः ।

१४. 'हस्ते लीलाकमलमलके बालकुन्दाविद्धम्—'

—इति यदनुविद्धमिति पदं सुकविना प्रयोज्यते तत्र स्पष्टमेव श्रुतिकाटवम् । मल्लिनाथो 'नपुंसके भावे क्तः' इति निष्ठाप्रत्ययस्यात्र भावार्थकत्वं मत्वा शब्दमिममनुवेधार्थकं मनुते । तत्र छन्दोयोजनायां स्वयमनुवेधशब्दस्यापि शक्यक्रियत्वात् पापात् पापीयाननुविद्धशब्दः । 'हस्ते लीलाकमलम् अलके बालकुन्दप्रसूनम्' इति यथाप्रक्रममेव कवयितुमुचिते तद्विपरीतं कवनेन प्रक्रमभङ्गोपि न नात्र स्फुटः । अस्ति च दक्षिणावर्त्तनाथोत्र अनुवेधस्यैव पाठत्वदर्शी । स्थिरदेव-चारित्रवर्धनावपि तथाविधमेवान्यमप्येकमिमं पाठमत्र पश्यन्ति 'बालकुन्दानुबन्ध' इति । ततो मल्लिनाथस्य कोन्वत्र व्यामोहः यदसौ परिशीलितदक्षिणावर्त्तनाथपाठोऽपि सदोषमेव पाठं मूलाकरोति ।

१५. 'यत्र स्त्रीणां प्रियतमभुजालिंगितोच्छ्वासितानां
मंगग्लानिं सुरतजनितां तन्तुजालावलम्बाः ।
त्वत्संरोधापगमविशदैश्चन्द्रपादैर् निशीथे
व्यालुम्पन्ति स्फुट-जल-लव-स्यन्दिनश्चन्द्रकान्ताः ।'

अत्र किं तावत् तन्तुजालमिति निश्चेतुं न शक्यत इति सन्दिग्धार्थत्वं दोषः । अत एवात्र 'यन्त्रजालावलम्बा' इत्यपि पाठ केचिदाद्रियन्ते । मल्लिनाथः पदस्यास्यार्थं 'वितानलम्बिसूत्रपुञ्जधारा' इति करोति । तदप्यव्यक्तमेव । चारित्रवर्धनः पुनरत्र 'तन्तुमयं जालमानायस्तत्रावलम्बते प्रसादानामुपरितनेषु भागेषु चन्द्रमणिबन्धरचना तन्तुजालस्थिता इति भाव' इति टीकते । हिन्दी-व्याख्यातारः 'झालर' इतिपदवाच्यं वस्तु तन्तुजालपदाभिप्रेततया नयन्ति ।

१६. 'सा संन्यस्ताभरणमबला पेशलं धारयन्ती
शय्योत्संगे निहितमसकृद् दुःखदुःखेन गात्रम् ।
त्वामप्यस्रं नवजलमयं मोचयिष्यत्यवश्यं
प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ॥'

—इति पद्यस्य चतुर्थे पादे योऽर्थान्तरन्यासः स समर्थ्यमर्थं पोषयितुं नास्ति प्रकामं शक्तः । आर्द्रान्तरात्मत्वं ह्यत्र करुणावृत्तित्वे तन्त्रम्, तच्च मेघे

जलक्लिन्नतारूपं सत् न कार्यक्षमम्, मेघस्य जडत्वात्, दयालुतारूपस्यान्तःकरणार्द्रत्वस्यासंभवात् । अभिन्नानुपूर्वीकशब्दवाच्यत्वेन चेतनाचेतनार्द्रत्वयोरैक्यसंपादनेऽपि न कुशलम्, तस्य प्रातिभासिकत्वसिद्धौ

'अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवांक ॥'

इत्यत्रेव समर्थ्यसमर्थकत्वानुपपत्तेः । अत एव च व्यक्तिविवेककृत् प्रत्याचष्ट एवंविधामलंकृतियोजनामवाच्यवचनप्रसंगे

'सद्वृत्ते महति स्वभावसरले बद्धोसि यस्मिन् गुणैर्,
युक्ते संयमहेतुतामुपगते यत्रापि विश्राम्यसि ।
तस्याक्षेपपरम्पराभिरभितो दोलायमानस्थिते-
रालानस्य मतंगजैष कतमो निर्मूलने दुर्ग्रहः ॥

पद्यमिदमुदाहृत्य-'यत्राप्रस्तुतार्थस्य श्लेषमुखेन असन्नेवोत्कर्षोऽपकर्षो वा तदितरस्य तथाप्रतिपत्तये अभिधीयते नासौ तात्त्विक इति न तत्र तामाधातुमुत्सहते, तयोर्बिम्बप्रतिबिम्बभावेनोपगमादित्यवाच्य एवासौ, तस्य वचन दोष' इति भूमिकामारचयन्, 'अत्र सद्वृत्तादिभिर्विशेषणैररुन्तुदस्यालानस्याप्रस्तुतस्य श्लेषबलोपकल्पितेन सदाचारत्वादिधर्मसम्बन्धेनोत्कर्षोभिहितः, न चासौ वास्तव इति तदुन्मूलनग्रहो गजस्योचित इति न दुष्ट इति उपालम्भयोग्यत्वं तत्रासिद्धमेवे'—त्युपसंहारं चाबध्नन् [ अस्मदनूदिते पृ० ४४५ ]

१७. 'शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्तात्
कर्णे लोलः कथयितुमभूदाननस्पर्शलोभात् ।
सोऽतिक्रान्तः श्रवणविषयं लोचनाभ्यामदृष्ट-
स्त्वामुत्कण्ठाविरचितपदं मन्मुखेनेदमाहे' ॥—ति

पद्ये 'उत्कण्ठायाः' स्वशब्दवाच्यत्वं जनयत्येव रसदोषं वमनाख्यम् । चरणत्रयार्थात् सात्र स्वयमेव पर्यवस्यति । प्रोषितस्य वैषम्यातिशयोपस्थितौ तस्याः स्वाभाविकत्वात् । अस्ति च वैषम्यमत्र सोऽतिक्रान्तः श्रवणविषयमित्यादिना ससंरम्भमारचितं सुकविना । ततश्च 'त्वन्मात्रप्रणिहितमना' इति अन्यथापि वेत्थमेवात्र पाठः परिवर्त्तनीयः । 'औत्सुक्येन कृतत्वरा' इत्यादिषु पुनः तादृशामौत्सुक्यादीनां स्वशब्दवाच्यत्वम् अन्यथानुपपत्तिबलादभ्यर्हितमेव । एवमेव 'धूमज्योतिःसलिलमरुतां सन्निपात' इत्यत्रापि उत्कण्ठार्थकस्यौत्सुक्यशब्दस्य प्रयोग आवश्यकः, उपायान्तरे तस्य तत्र बोधनाभावात् । अस च तदुपनिबन्धे निर्हेतुत्वदोषप्रसंगात् । न च चतुर्थचरणेनात्र समर्थित ए

चरणत्रयोपस्थापितोऽर्थ इति नास्ति निर्हेतुत्वप्रसक्तिरिति वाच्यम्, अर्थान्तरन्यासस्थले समर्थनीयस्य वाक्यार्थस्य पूर्णताया एव प्रतिष्ठितत्वात्, असति च तादृशौत्सुक्यप्रतिपादके पदे जाग्रयादेव तत्र वाक्यार्थाविरामः। ततश्च स्थितमेतद् यदत्र सचारिभावस्य स्वशब्दवाच्यत्वस्योचितत्वेपि प्रागुद्धृते शब्दाख्येयमिति स्थलेऽनुचितत्वमेव। एवमेव

१८. 'संक्षिप्येत क्षण इव कथं दीर्घयामा त्रियामा
सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात्।
इत्थं चेतश्चटुलनयने दुर्लभप्रार्थनं मे
गाढोष्माभिः कृतमशरणं त्वद्वियोगव्यथाभिः॥'

—इत्यत्रापि वियोगव्यथायाः स्वशब्दोल्लेखोऽनुचितः। वियोगो हि चित्तवृत्तिविशेष एव 'वियुक्तास्मी-' ति रूपः, अत एव मानपरिग्रह एकशयनपरिस्थितावपि जागर्त्येव तदनुभवः। तज्जनिता या व्यथा सापि न नास्ति चेतोधर्मः। स्वशब्दवाच्यतातिरस्कारः तौ द्वावप्यत्र व्यथयते। तदत्र 'शापवेलाभिराभिः' इतीव किंचित् कवनीयम्।

१९. 'शापान्तो मे भुजगशयनादुत्थिते शाङ्गर्पाणौ'—

—इत्यत्र प्रसज्येतावाच्यवचनम् 'आषाढस्य प्रथमदिवस' इत्यत्र यदि प्रथमपदेन प्रतिपदेवादीयेत। यथा चैतत् तत् प्रतिपादितपूर्वमेवास्माभिः।

२०. 'एतस्मान्मां कुशलनमभिज्ञानदानाद् विदित्वा
मा कौलीनादसितनयने मय्यविश्वासिनी भू।
स्नेहानाहुः किमपि विरहे ध्वंसिनस्ते त्वभोगा-
दिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति॥'

—इत्यत्र 'अभोग'-पदस्य स्थाने 'भोगाभावादि'ति पर्युदासस्थाने प्रसज्यप्रतिषेधः करणीयः, तथा सत्येव अभावस्य प्राधान्यात्। यदि च प्रसज्यप्रतिषेधेऽपि समास इष्यते तर्हि 'अलब्धयजन्मता' इत्यत्रापि स इष्यताम्, इष्यतां च 'क्षणमप्यमुक्ता' इत्यत्रापि। न च भावार्थकात् कृदन्तशब्दादेव भोगादना नञ्समासे प्रसज्यप्रतिषेध इष्यते नान्यत्रेति वाच्यम् अनुभवविरोधात्। न हि य एवानुभवः 'भोगाभाव'—पदाद् भवति स एव 'अभोग -' पदात्। एकत्र हि भोगप्रतियोगिकः अभावः, अपरत्र च अभावप्रतियोगिकः भोगः। एकत्र अभावे भोगो विशेषणम, अपरत्र च भोगे अभावः। विशेषणविशेष्यभाववैलक्षण्येऽपि यदि बोधे वैलक्षण्यं नाभ्युपेयेत तर्हि नाभ्युपेयेत तत् कुत्रापि नीलपीतादौ, न्यायसाम्यात्, वैलक्षण्यस्य भेदप्रयोजकत्वानंगीरात्।

किं च मल्लिनाथदृशा यदि अभिज्ञानशब्दः मरणशंकानिवारणार्थकः तर्हि पद्येऽत्र कुशलपदं व्यर्थम्। नास्ति चाभिज्ञानेन मरणाभावेन चात्र सम्बन्धः। अभिज्ञानस्य परस्परसंगराहित्यमात्रप्रतिपादनपरत्वेनात्रोपादानात्। कौलीनात् परस्त्रीसंगो मयि तथाविधस्वप्नगतपरस्त्रीसंगकल्प इति तत्र प्रतिपादनात्। एवं जागर्येत्र मल्लिनाथदृशात्र वाक्यार्थदोषः।

२. 'आश्वास्यैवं प्रथमविरहोदग्रशोकां सखीं ते
शैलादाशु त्रिनयनवृषोत्खातकूटान्निवृत्तः।
साभिज्ञानप्रहितकुशलैस्तद्वचोभिर्ममापि
प्रातःकुन्दप्रसवशिथिलं जीवितं धारयेथाः॥'

–त्यत्र यक्षीप्रतिसंदेशात् स्वजीवितालम्बनप्रार्थनमुपक्रमविरुद्धम्। उपक्रमे हि नभःप्रत्यासन्ने दयिताजीवितालम्बनार्थितयैव मेघं प्रति यक्षकृतस्य स्वकुशलप्रवृत्तिप्रेषणप्रणायस्योपनिबद्धत्वात्। एतस्यावान्तरप्रयोजनतया कथंचिदौचित्यसाधनेऽत्रैव प्रतिवचनेषु साभिज्ञानत्वोक्तिकृतस्यानौचित्यस्य को नु समाधिः। ननु किमत्रानौचित्यमिति चेदभिज्ञानाभावे विश्वासाभावोपस्थितिरेव तत्। प्रार्थनीयस्य चरित्रे दोषदृष्टिरिष्टसिद्धावत्र प्रत्युत विपरीता स्यात्। यत्र मघोनः प्रकृतिपुरुषता, पुष्करावर्त्तकवंशजातता च दृष्टा तत्रैवाभिज्ञानं विना शंकनीयवचनताया दर्शनमत्र प्रकृतिविरुद्धम्, तथा सति विक्रमोर्वशीये वासवसंदेशेन सहाभिज्ञानस्याभावात् तत्प्रापके देवर्षौ नारदेऽपि शंकास्पदवचनता प्रसज्येत। किं च यक्षीं प्रति मेघोऽपरिचितः। ततस्तस्यै प्रेषिते संदेशे अभिज्ञानं संदेशसत्यापनायावश्यकम्, यक्षस्तु परिचित एव मेघेन, तस्य स्वस्या अपि अभिज्ञानानयनप्रार्थनं विश्वास्यतातिरिक्तप्रयोजनकं न सिद्ध्यति। तच्च यथानुचितं तत् प्रतिपादितमेवानुपदमेव। वस्तुतः पद्यमिदं प्रक्षिप्तं प्रतीयते।

२२. 'कच्चित् सौम्य व्यवसितमिदं बन्धुकृत्यं त्वया मे
प्रत्यादेशान्न खलु भवतो धीरतां कल्पयामि।
निश्शब्दोऽपि प्रदिशसि जलं याचितश्चातकेभ्यः
प्रत्युक्तं हि प्रणयिषु क्तं सतामीप्सितार्थक्रियैव॥'

—अत्र प्रत्यादेशपदमवाचकत्वदूषितम्। तद्धि अमरकोशे स्वयं कालिदाससाहित्ये च निराकरणमात्रसंकेतितमुपलभ्यते। नास्ति चात्र तदेतत्परम्। अत्र समर्थकार्थान्तरवाक्यघटकीभूत-प्रत्युक्त--पद--समर्थनीय-प्रतिवचन--मात्रपरतयैव प्रयोगात्। नास्ति च प्रतिवचनरूपिणि अर्थे तस्य व्यवहारादिकं यतस्तस्यात्र शक्तिरुपगम्येत। यद्यपि 'उक्तिराभाषणं वाक्यमादेशो वचनं वच' इति मल्लि-

नाथोद्धृत त् शब्दार्णववचनाद् आदेशशब्दस्य वचनपरत्वे सिद्धे प्रत्यादेशशब्दस्य प्रतिवचनपरत्वं शक्यत एव लब्धुम्, तथापि तत्रापि निहतार्थता तं निगिरत्येव। प्रसिद्धस्य निराकरणरूपस्यार्थस्य प्रथमप्रतीततया प्रतिवचनरूपस्य तस्य प्रतिहतगतिकत्वात्।

न च 'अप्रत्यादेशादधीरतां न कल्पयामीति अकारप्रश्लेषेण मौनलभ्ययोर् निराकरणांगीकरणयोर्मध्यात् प्रथमस्य परिहारः, उत्तरार्धपादाभ्यां च द्वितीयस्य संसाधनमि' ति नास्ति दोष' इति वाच्यम्, मौनगमकस्य पदस्याभावप्रसक्त्या न्यूनपदत्वप्रसक्तेः। किंच प्रणयिषु 'कर्तुमसमर्थोऽस्मी-'ति स्वीकाराभाव एव सभ्यजनप्रथितः, न तु 'न करिष्यामी-'ति निराकरणम्, असभ्यजनोचितम्। ततश्चात्र स्वीकाराभावकल्पनाया एव निराकरणं स्वरसप्राप्तम्, तदेव चोत्त-रार्धगताभ्यां दृष्टान्तार्थान्तरन्यासाभ्यां समर्थ्यते। अतएव प्रत्यादेशादधीरताम् अप्रत्यादेशाद् धीरतामिति पक्षद्वयकल्पनमपि निरर्थकमेव। याचकस्य मान-भङ्गेऽपि याच्यमानानादरेऽनधिकारात् अप्रत्यादेशाद् धीरताकल्पनपक्षेऽपि नितान्तमावश्यकस्य मौनवाचकस्यानुपलब्धिप्रसक्तेः। ततो व्यर्थ एवात्र तथाविधप्रश्लेषाश्लेषक्लेशः।

अत्र व्यवसितपदमपि प्रायेण प्रत्यादेशपदसजातीयमेव। तत्र आद्यकर्मणि क्ते कृते कर्तुमारब्धमिति कथंचिदुचितार्थपरिकल्पनात् संजाघटीति दोषपातात् चमत्कृतिरक्षा। व्यवसायशब्दस्य निश्चयपरत्वं तु मल्लिनाथमतेर्विपर्यासः एव।

२३. एवमेव अतिवाहयेदित्यस्य स्थाने वाहयेदिति ब्रुवाणः कालिदासः विदधातेःस्थाने दधातिमिव प्रयुनक्ति ३८ पद्ये।

२४. 'देवगिरिमि'ति वक्तव्ये 'देवपूर्वं गिरिमि'-ति ब्रुवाणोऽवाच्यं वक्ति ४२ पद्ये।

२५. 'आसीनानां सुरभितशिलं नाभिगन्धैर्मृगाणामि'ति पद्ये उपमेयकोटौ मृग स्थानीयं किञ्चिदपि नास्तीति न्यूनपदत्वमुपमादोषः।

२६. 'तं चेद् वायौ सरती'-ति पद्ये सरतिः गतिमात्रमुपस्थापयति, नतु तीव्रां गतिमिति सामर्थ्यच्युतमेवेदम्।

२७. 'ये संरम्भोत्पतने'-ति पद्येऽपि 'स्व'-पदं मेघपरतया विवक्षितं शरभपरतया प्रतीयते।

इत्येवमन्येऽपि दोषा मेघदूतपद्येष्वनेकशो जाग्रति।

---

# कालिदासस्य काव्ये राष्ट्रियभावना सांस्कृतिकचेतना च

डॉ० कैलाशनाथ द्विवेदी

विश्वकविषु, संस्कृतसाहित्यस्य महाकविषु कालिदासेनैव गौरवमयं स्थानं प्राप्तमस्ति। कविकुलगुरोः कालिदासस्य कान्तासम्मिता सुन्दरभावाभिव्यक्तिपूर्णा भारती राष्ट्रियभावनासांस्कृतिकचेतनाभ्यां समन्विता वर्त्तते; यस्याः मार्मिकानुभूतिः केन सहृदयेन न कृताऽस्ति। महाकवेरमरकृतिषु साहित्यिकविविधपक्षेषु न केवलं भारतवर्षेऽपितु विश्वस्यान्यदेशेष्वधिकं कार्यं सञ्जातम्, किन्तु तासु व्यक्तस्य राजनैतिक-धार्मिक-सांस्कृतिक-भौगोलिकादिशास्त्राणां व्यापकस्य ज्ञानस्य व्याख्या स्वल्पमेव सम्पादिता सुधीभिः। संक्षिप्तेऽस्मिन्निबन्धे समीक्ष्यतेऽत्र मया महाकवेरमरकृतिष्वभिव्यक्ते राष्ट्रियभावना सांस्कृतिक चेतना च।

महाकविना मनोहारिण्याः भारतभूमेरनन्यया शोभया नेत्रनिर्वाणं लब्ध्वाऽस्याः भौतिकाङ्गानां सचेतनरूपे चित्रणं कृत्वा राष्ट्रस्याशेषाः मनीषिपुरुषाः तां प्रत्युद्बुद्धाः। तस्य पृथिव्याः मानदण्डः हिमालयो नाम नगाधिराजः 'देवतात्म'-रूपे मण्डितोऽस्ति—

"अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः।
पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः॥"[1] इति

विरही यक्षः रामगिरिं[2] चेतनरूपे दृष्ट्वा मेघं तस्यानुमतिं प्राप्तुं कथयति। महाकविकालिदासस्य रसिकता यथास्थानं स्वसाहित्यिकतायाः संस्पर्शं कुर्वती एषां राष्ट्रियप्राकृतिकरूपाणां माध्यमेन भारतभूमेः नयनाभिरामां शोभां प्रस्तौति।

---

१—कुमारसम्भवे–१/१

२—पू० मेघदूते। १२ आपृच्छस्व प्रियसखममुं तुंगमालिंग्य शैलम्‌……।

कुत्रचित् पक्वाम्रफलैर्वृतः मेघखण्डमयसानुमानाम्रकूटः[1] कविना पृथिव्या स्तन इवोत्प्रेक्षितः, क्वचिच्च सागरसलिलवसनादनावृतः सह्याद्रिस्तस्याः नितम्ब इव प्रतीयते[2]। नीचगिरेः शिलावेश्मभिः सोद्दामयौवनयुक्तया विलासवार्तया कविः तत्कालीनाः सांस्कृतिकसामाजिकस्थितीः मूकस्वरेण घोषितवान्[3]। गंगासरय्वोरिव सरित्संगमाः कविना श्रेष्ठतीर्थरूपे मोक्षदायकाः परिकल्पिताः[4]।

चित्रकूटे वक्रपर्वतीयमार्गेण प्रवाहिता मन्दाकिनी[5] पृथिव्याः मुक्तावलीव प्रतिभाति। मुतकाफलप्रसविनीताम्रपर्णीसदृशाः[6] नद्योऽपि राष्ट्रस्यार्थिकसमृद्धौ नाल्पाः सहायिका आसन्। अध्योध्यायाः[7] सरयूः मथुरायाः[8] यमुना, दशपुरस्य चर्मण्वती,[9] उज्जयिन्याशिप्रा,[10] पुष्पपुरस्य[11] गंगा, महिष्मत्याः[12] नर्मदादि-नद्योऽस्य देशस्य नगराणामार्थिकव्यापारिकधार्मिकसांस्कृतिकैतिहासिकसमृद्धेर्न केवलं साक्षिण्य आसन्नपितु तस्याः परमपोषिका अपि वस्त्वर्थऽभवन्। सलिलवसनाया वसुधाया एतानि जलीयरूपाणि महाकविना राष्ट्रस्य प्राकृतिकसुषमारूपे तु दृष्टान्येव तेन समं सांस्कृतिकसमृद्धावपि एते सहायकाः स्वीकृताः सन्ति।

---

१. पू० मेघदूते। १८–'छन्नोपान्तःपरिणतफलद्योतिभिः काननाम्रै-
स्त्वय्यारूढे शिखरमचलः स्निग्धवेणीसवर्णे।
नूनं यास्यत्यमरमिथुनप्रेक्षणीयामवस्थां,
मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः॥'

२. रघुवंशे–४/५२, ५८।

३. पू० मेघो–२७ नीचैराख्यं गिरिमधिवसेस्तत्रविश्रामहेतोः······।

४. रघुवंशे ८/९५ तीर्थेतोयेव्यतिकरभवे जह्नुकन्या सरय्वोर्देहत्यागादमर-गणनालेखमासाद्य सद्यः।

५. रघु० १३/४८ एषा प्रसन्नस्तिमितप्रवाहा·····मुक्तावली कण्ठगतेव भूमेः।

६. रघुवंशे–४/५०

७. रघु० ६/३०, १३/६१, ६२।

८. रघु०–६/४८, ४९।

९. पू० मेघे–४६, ५१।

१०. पू० मे०–३१।

११. रघुवंशे–६/४८।

१२. रघु०–६/४३।

कालिदासेन महाकविना नानाजलीयरूपाणामपि मानवीकरणमाध्यमेन चेतनवच्चित्रणं कृतम्—तस्य मनोहारिण्यो नद्योऽपि विलासिन्याः नायिकायाः रूपे क्वचिज्जलावर्ते गंभीरनाभिम्[१], क्षीणधारायां स्निग्धवेणीं[२], सलिलवसनादनावृत्तो उपतटे पीननितम्बं[३], फेनिले जले कलहास्यं[४], तरंगेषु चारुभ्रूभङ्गम्[५], हंसध्वनौ नूपुररवं[६] विहंगमानां कलनादे[७] कांचीरवं व्यक्तवत्यः दृश्यन्ते। नानावन[८]नदनदी[९]पर्वतोपत्य[१०]कासरोवराणां[११] प्राकृतिकसौन्दर्यसमन्वितैर्दृश्यैः कविरस्माकं नेत्रनिर्वाणमकारयत्। अनेन वयं भारतीयसंस्कृतौ निहितां व्यापिकीं चेतनामनुभवामः। यतः काव्यकलया समं एषु प्राकृतिकस्थलेषु राष्ट्रस्य प्राचीनगौरवमप्यस्याभिरनुभूयते।

तत्कालीनं सम्पूर्णं राष्ट्रं विविधेषु लघुगुरुराज्येषु विभक्तमासीत्तथापि महाकविरस्मिन्, विभक्ते रूपेऽपि राष्ट्रव्यापिन्या अखण्डताया एकतायाश्च शोभनोद्भावनां कृतवान् या द्वयोः रूपयोरस्माकं पुरत आयाति—

(१) रघुदिग्विजयप्रसगे महाकविः, रघुणा राष्ट्रस्य बाह्यसीमासु यौद्धिकाभियानं कारयित्वा तस्य दिग्विजयमार्गवर्णनव्याजेन बृहत्तरभारतस्यादर्शसीमाः निर्धारितवान्। ( द्रष्टव्यः रघुवंशस्य चतुर्थसर्गः )।

(२) इन्दुमत्याः स्वयंवरस्य व्याजेन रघुवंशे षष्ठसर्गेऽपि कविना देशस्य दूरस्थकोणानां राज्ञोऽपि विदर्भसदृशे राष्ट्रस्य हृदयवत् केन्द्रवर्तिराज्ये एकत्रितान् चित्रीकृत्य तेषां सांस्कृतिक्येकता विवाहतुल्यरक्तसम्बन्धेन प्रतिपादिता। दृष्ट्यानया स्थान एव राष्ट्रियकविरूपे महाकविः महत्त्वशाली मन्यते मनीषिभिः।

---

१—पू० मेघे-२८ दर्शितावर्तनाभेः······।
२—पू० मे०—२९ वेणीभूतप्रतनुसलिलाः······।
३—पू० मे० ४५।
४—विक्रमोर्वशीये-४/२८ तरंगभ्रूभंगा······।
५—पू० मेघे-२४ सभ्रूभंगमुखमिव पयो···।
६—ऋतुसंहारे-३/१, विक्रमो० ४/१७।
७—पू० मेघे—२८ वीचिक्षोभस्तनित विहगश्रेणिकाँचीगुणायाः।
८—रघुवंशे—५/४२,४२,१६/३१, ३२, ऋतुसंहारे–२/८ पू० मे० १७,१८।
९—कुमारसंभवे—१/१-१२, रघु० २/६८, पू० मे० २७।
१०–अभिज्ञानशाकुन्तले, पंचमेऽङ्के—'हिमगिरेरुपत्यकारण्यवासिनः·· ···'।
११–रघु० १८/३१ 'त्रिपुष्करम्'।

स्व० डॉ० वासुदेवशरणाअग्रवालमहोदयस्यापि[1] इयमेव सुविचारिता दृष्टिः वर्तते।

महाकविरुपर्युक्तेषु सन्दर्भेषु वर्णितानां[2] राज्यानामार्थिकधार्मिकराजनैतिकसांस्कृतिकसमृद्धिं सलक्ष्यापि तैः समं [3]पुलिन्दकिरात[4]वनेचर[5]नागा[6]नामनेकासामादिमजातीनामप्युल्लेखं कृतवान्। संभवतः इमे आदिमजातीयजनास्तस्मिन्युगे शक्तिसम्पन्नां राज्यानां प्रभुतां स्वीकृत्य राष्ट्रियसमाजस्य जनजीवनेन घनिष्ठरूपेण सम्बन्धिता आसन्।

महाकविः स्वकृतिषु स्वदेशस्य यानि नगराण्युल्लिखितवान्, तानि सप्राणायाः समृद्धिशालिन्याश्च भारतीयसंस्कृतेः सर्वेषां पक्षाणां शोभनां व्याख्यां प्रस्तौति। [7]तस्योज्जयिनी[8]विदिशामथुरा[9]पुष्प[10]पुरायोध्या[11]दिनगर्यः धर्मार्थकामपुरुषार्थैः पूर्णाः भौतिकात्मिकसमृद्ध्योरन्तिमां सीमामधिगतवत्य आसन्। ताः धर्मराजनीतिशासनकलावाणिज्यशिक्षादिविषयाणां केन्द्रीभूय देशविदेशेषु गौरवान्विता बभूवुः।

कालिदासेनोल्लिखिता [12]ऋषिमुनीनामाश्रमास्तीर्थ[13]मन्दिरादीनि च प्राचीनभारतस्याध्यात्मिकोत्कर्षपूर्णाया उपलब्धेः कीर्तिमयीं कथां कथयन्ति।

---

१—'भारत की मौलिक एकता' नाम्नि ग्रंथे, पृ० १५४, प्रथमे संस्करणे।
२—द्रष्टव्यौ रघुवंशे चतुर्थषष्ठसर्गौ।
३—रघु० १६/१९, ३२।
४—रघुवंशे—४/७६, कुमार० १/६, १५।
५—कुमार०—१/१०, पू० मे० २०।
६—कुमार—१/२०, रघु० १६/७६, ८०, ६/४९।
७—रघुवंशे—६/३२, पू० मेघे–३२।
८—पू० मेघे—२६, मालविकाग्निमित्रे–५/१०।
९—रघु० ६/४८, १५/३६।
१०—रघु० ६/२४-नेत्रोत्सवं पुष्पपुराङ्गनानाम्।
११—रघु० ११/९३, १ /१०, २९, १५/३८, ६०, १६/२५।
१२—रघु०—१/३५, ४८, २/६७ (वशिष्ठाश्रमः); ५/१, ४, २० (वरतन्तुः) ११/२२-२३ (वामनाश्रम)।
१३—अभिज्ञानशाकु० १/१३ तः परान्ते सोमतीर्थम् ५/३१ शचीतीर्थशक्रावतारौ, रघु० १५/१०१ गोप्रतर।
१४—पू० मेघे—६, ३४, ३७, ४०।

वस्तुतः परम्परारूपेण पावनाश्रमाणामेषां चित्रणं कृत्वा कविः करुणाक्षमा-दयापरोपकारतपोमयभारतीयजीवनस्य समुज्ज्वलान्तःपक्षस्य मनोमोहिनीं छटां दर्शयित्वा भारतीयसंस्कृतेश्चरमादर्शं प्रति विश्वं विशेषेणोन्मुखीकृतवान्। सामान्यतया कविना वर्णिताः सर्वे आश्रमाः यज्ञतपःशिक्षास्थानरूपेष्वपि गृहस्थधर्मेभ्यः पराङ्मुखाः नासन्निति सुव्यक्तमेव तस्य कृतिषु। ते सम्पूर्णराष्ट्रस्य भौतिकाध्यात्मिकाभ्युदये महत्त्वपूर्णं योगमददुः। राज्यसंरक्षणं लब्ध्वाऽपि इमे स्वतंत्रवातावरणे श्वसन्तोऽन्तर्मुख्यां साधनायां निलीयन्ते स्म।

महाकवेः काव्यकृतिषु वर्णितैर्विविधमार्गैरपि तत्कालीनराष्ट्रव्यापिन्याः शोभनायाश्चेतनाया आर्थिकसमृद्धेश्च सम्यक् परिचयः प्राप्यते। रघुदिग्विजयसम्बन्धि-मार्गेण[1] राष्ट्रस्यादर्शसीमा निर्धार्यते। तेन वयं विदेशिसीमावर्त्ति-राज्येभ्यः राष्ट्रीयसीमां रक्षितुं शक्नुमः। वाल्मीकि-रामायणाद् गृहीतः रामस्य पुष्पकविमानस्य यात्रामार्गो[2] दक्षिणे सेतुबन्धादुत्तरेऽयोध्यापर्यन्तं व्यापकरूपे विस्तृतायाः राष्ट्रभुवः बाण इव समवेतरूपेण संमापनं कृत्वा राष्ट्रीयैक्तां प्रत्युन्मुखीं कारयित्रीं चेतनामनुभावयति। मेघमार्गः[3] महाकवेः साहित्यिक-प्रतिभायाः सुन्दरसंस्पर्शेन भारतीयवृष्टिसंस्थानस्योत्कृष्टं स्वरूपं प्रस्तौति। यद् राष्ट्रस्यार्थिकप्राकृतिकसमृद्ध्योः मूलाधाररूपे महत्त्वशालि वर्त्तते।

महाकविः कालिदासः राष्ट्रस्य विराटस्वरूपात् सुपरिचित आसीत्। अतः सोऽस्य वैविध्यपूर्णां, मनोहारिणीं, तथ्यपूर्णां, स्वाभाविकीञ्च शोभां प्रस्तुतवान्। कलिंगानां[4] प्राच्यसमुद्रतटस्य श्यामलं राजतालीवनं वा स्यात्, [5]महेन्द्रगिरेर्नागवल्लीनां नारिकेलानामासवस्य चित्रं वा स्यात्, मारीचवने [6]उद्भ्रान्तहारीतका चन्दनैलालतामयीमलयाद्रेः रम्योपत्यका[7] वा स्यात्, पाश्चात्त्यसीमान्तप्रदेशानां द्राक्षालताभिः कुंकुमकेशरस्य कविः

१—द्रष्टव्यः रघुवंश चतुर्थसर्गः।
२—रघु० १३/१-१४, ६३।
३—द्रष्टव्यम्—पू० मेघदूतम्, १४-६१।
४—रघुवंशे—४/३४-४४, ६/५६, ५७।
५—रघु०—४/४२, ४३।
६—रघु० ४/४५—"ससञ्जुरश्वक्षुण्णानामेलानामुत्पत्तिष्णवः।"
७—रघु०—४/६१, ६७, ६८।

कथां कथयेद्वा, नगराजहिमालयस्य[1] भूर्जपत्राणां मर्मरध्वनेः, कस्तूरी-मृगाणां नाभिगन्धस्य, भागीरथ्याः सशीकरशीतलसमीरस्य च गौरवगीतिकानि वा गायेत्, लौहित्यमुत्तीर्य कामरूपाणां [2]गजानामगरुवृक्षाणाञ्च वैविध्यपूर्णं वर्णनं वा कुर्यात् सर्वस्मिन् राष्ट्रस्यैका समन्विता समृद्धिपूर्णा च रमणीयतैव द्रष्टुं शक्यते । इत्थं प्रतिभाति यन्महाकविः मनः प्राणैरिवास्य देशस्य प्रतिकणं रेमे ।

संक्षेपेऽनेन तथ्येनोपसंहर्तुं शक्यतेऽयं लेखः यत् महाकवेः कालिदासस्य काव्य-कृतिषु समाहिते राष्ट्रियभावना सांस्कृतिकचेतना चात्यन्तं महत्त्वपूर्णो-पादेये स्तः । अस्माभिराभ्यां स्वकीयस्य स्वर्णिमस्यातीतस्य सत्यं मूल्यांकनं कुर्वद्भिः नवजागर्तिः सांस्कृतिकचेतना चेति लब्ध्वा महाकवेः काव्यकृतीनां धार्मिककैतिहासिकराजनीतिकभौगोलिकपुरातात्त्विकादिदृष्ट्या व्यापकमध्ययनं करणीयम् ।

---

१—कुमारसंभवे—१/७, १५, ५५ ।
२—रघु०—४/८१-८४, ७/१७ ।

# भारतीयदर्शनानि, तेषामाविर्भावक्रमश्च[1]

## म० म० गिरिधरशर्मा चतुर्वेदी

यं दर्शयन्ति विविधाभिरहो विधाभि-
रेकं क्रमेण सकलान्यपि दर्शनानि।
मूकीभवन्ति च ततोऽनधिगत्य पारं
तं स्वप्रकाशमखिलाश्रयमाश्रयेऽहम् ॥ १ ॥

इह हि जगति विद्वत्समाजे शिरसा समाद्रियमाणासु कण्ठालंकरणतां नीयमानासु च भारतीयविद्यामुक्तालतासु दर्शनशास्त्रमेव नायकायत इति नैतत्परोक्षं कस्याप्यक्षरजुषः। भारतीयानां दर्शनान्यद्यापि विज्ञानपारंगतैराद्रियन्ते, श्लाघ्यन्ते, बहुमन्यन्ते च। दर्शनानां बलेनैव भगवतीयं सुरभारती समधिगच्छत्यद्यापि गौरवं सर्वदेशेष्विति चेदुच्येत, मन्ये नेयमत्युक्तिः स्यात्। संस्कृतसाहित्यकोशाद्दर्शनानि चेन्निष्काश्येरन् सुवर्णादिरहितस्य केवलं मूषकलीलारंगभूमिभूतस्य कोशस्येव, अपनीतरुचिररत्नस्य जटितग्रैवेयकादेरिव, फलप्रसूनादिदरिद्रस्य शुष्कतरोरिव, किमन्यत्—अपेतसूत्रस्य पटस्येव दशा संस्कृतसाहित्यस्य संपद्येत-इति निश्चला मे मतिः। इत्थंभूतगौरवास्पदं पूर्वादग्विज्ञानज्योतिरिदं किं नाम दर्शनम्, कुतोऽस्य दर्शनत्वम्, कति वा दर्शनानि-इत्यादिविषयोऽयं यथामति विवेच्यते। तत्र दृशिरयं यदि चाक्षुषज्ञानार्थस्तर्हि चाक्षुषप्रत्यक्षे वा तत्करणे चक्षुषीन्द्रिये वा दर्शनशब्दस्य वृत्तिः प्राप्नोति। दृशेः प्रत्यक्षज्ञानार्थकत्वेऽपि च प्रत्यक्षे वा तत्करणेष्विन्द्रियेषु वा शब्दस्यास्य वृत्तिः स्यान्नतु वाङ्मयापरपर्यायेषु शास्त्रेषु। यदि तु ज्ञानसामान्यार्थ एवात्र दृशिः करणप्रत्ययान्तश्चास्थीयेत, तत्तर्हि ज्ञानसाधनभूतेष्विन्द्रियलिंगादिषु सर्वेष्वपि च शास्त्रेषु तुल्यमयं दर्शनशब्दः प्रवर्तेत, न तु प्रतिनियतविषयः स्यात्। अथ प्रकरणापेक्षः प्रवर्तत एव तत्र तत्र, इह तु वाङ्मयप्रकरणादेव शाब्दज्ञानकरणेषु शास्त्रेष्वयमुपसंहृतौ द्रष्टव्य इति तथापि तुल्यमयं सर्वेष्वेव शास्त्रेषु दर्शनशब्दः प्रयुज्येतैव। न त्वेवमेत-

---

१. लेखस्यास्य रचयितारः म० म० गिरिधरशर्माणः १०।६।६५-तिथौ स्वर्गताः। तेषां पुत्रैः प्राशिवदत्तशर्मचतुर्वेदैः लेख एष सागरिकाया हृतः।

दुपलभामहे, वेदेवदांगपुराणायुर्वेदसाहित्यादिषु बहुत्र दर्शन शब्दस्याभियुक्तैः प्रयुक्तत्वात् । अतएव च षोढा भिद्यते दर्शनशास्त्रमित्यपि प्राचां चिरन्तनः प्रवादः संगतार्थो भवति । सर्वत्रापि शास्त्रेषु दर्शनशब्दप्रयोगे तु षट्त्वं त... सर्वथा वस्थापयितुमशक्यमापद्येत । चतुर्दश हि विद्याः परिगण्यन्तेऽभियुक्तैः—

अंगानि वेदाश्चत्वारो मीमांसा न्याय एव च ।
पुराणं धर्मशास्त्रं च विद्यास्त्वेताश्चतुर्दश ॥ इति ।

कथं ताः सर्वा अपि षट्सु दर्शनेष्वन्तर्भाव्येरन् । तस्मात्प्रकृतस्यास्यदर्शनशब्दस्यात्मादितत्वनिरूपकेष्वेव शास्त्रेषु विशिष्य प्रवृत्तिरवश्यमास्थेया सा चेयं योगरूढ्यैवेति केचिदभिप्रयन्ति । ज्ञानसामान्यार्थाद् दृशेर्निष्पन्नो दर्शनशब्दः प्रकरणाच्छाब्दज्ञानकरण उपसंहृतस्तत्रापि सर्वानर्थप्रहाणहेतोः सर्वप्रधानस्यात्मादितत्वज्ञानस्य साधनभूतेषु वेदान्तादिशास्त्रेषु चिरन्तन... व्यवहाररूढ इति तेषामाशयः । अन्येत्वनेकार्थत्वाद् धातूनां मतापरपर्यायो दर्शनशब्द इत्याहुः । 'तेषां दर्शनमिति' 'तेषां मतमिति' चानन्यार्थौ शब्दौ प्रयुक्तावभियुक्तैः[१] । आर्हतदर्शने च ज्ञानात्प्राग्भाविनि श्रद्धाने नि... दर्शनशब्दः । यो हि यथा यमर्थं श्रद्दधाति, नूनं तथैतन्मनुते, तथैव तं ... जानातीति सुप्रसिद्धोऽयमर्थोऽनुभवशीलानाम् । तथा च भिन्नं भिन्नं ... नमनुरुध्य भिन्नभिन्नतयैव तत्तदर्थजातं प्रतिपादयत्स्वेषु सांख्यादि... समुचित एवायं दर्शनशब्दप्रयोग इति द्वितीयः पन्थाः ।

वयन्तु पश्यामः—'आत्मा वा अरे द्रष्टव्यः' इति हि भगवती श्रुतिः साक्षात्कारापरपर्यायं दर्शनमनुविदधाति, 'श्रोतव्यो मन्तव्यो निदिध्यासि... इति च दर्शनस्य हेतूनप्यवगमयति । तामेव च श्रुतिमुपबृंहयन्ती—

'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
मत्वा च सततं ध्येय एते दर्शनहेतवः' ॥

इतीयं स्मृतिरपि श्रुत्युपपत्तिध्यानानां दर्शनहेतुतामन्वाह । तत्र श्रुतिरपि दर्शनहेतुः, प्राधान्यं च दर्शनहेतुष्वेतस्याः, श्रुतिमन्तरा केवल...

---

१. 'अस्त्यात्मेत्येकं दर्शनम्' नास्त्यात्मेत्यपरम् 'वात्स्याय... तस्मादनतिशंकनीयमिदमौपनिषदं दर्शनम्, 'तस्मादप्यसमंजसं ... दर्शनम्' इत्यादि शांकरे चालोच्यम् ।

२. 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः' इत्यादौ ज्ञानात्पू... परिगणनमालोच्यम् ।

पत्तिभिरात्मादितत्त्वज्ञानस्य 'तर्काप्रतिष्ठानादि'त्यादिसूत्रैरशक्यत्वप्रतिपादनात्। अथापि तु प्राथमकल्पिक एव ज्ञाने श्रुतेः प्राधान्यमभ्युपगच्छन्त्याचार्याः। साक्षात्कारापरपर्याये दर्शने तु श्रुतिमवलम्ब्य प्रवर्तमानयोरुपपत्तिनिदिध्यासनयोरेव प्राधान्यमातिष्ठन्ते। तदेतदुक्तं शंकरभगवत्पादैः—'दृष्टसाम्येन चादृष्टमर्थं समर्थयन्ती युक्तिरनुभवस्य संनिकृष्यते, विप्रकृष्यते तु श्रुतिरैतिह्यमात्रेण स्वार्थाभिधानात्। अनुभवावसानं च ब्रह्मविज्ञानमविद्याया निवर्तकं मोक्षसाधनं च दृष्टफलतयेष्यत' 'इति। 'तर्काप्रतिष्ठाना'दित्यादिभिस्तु निरवलम्ब एव नास्तिकानां तर्क आक्षिप्तो न तु श्रुत्यवलम्बेन प्रवर्तमानोऽपि। तच्चाप्येतच्छ्रुतेः प्रामाण्यमभिमन्यमानानामेव शिरोधार्यं स्यान्न तु बौद्धादिदर्शनानामपीत्यन्यदेतत्! सर्वथापि त्वात्मादिसाक्षात्कार उपपत्तेः प्राधान्यमनुमतमेव सर्वेषामपि। तदित्थमुपपत्तेर्दर्शनहेतुत्वसंसिद्धावुपपत्तिप्रधानानामेषां सांख्यादिशास्त्राणामर्थागतमेव दर्शनहेतुत्वमिति दर्शनहेतुत्वाद्दर्शनव्यपदेश एषां न्यायसिद्धः। यस्य तु धर्मादिप्रमेयस्य नैव साक्षात्कार उपदिष्ट, शब्दैकसमधिगम्यत्वं त्वेवावधारितम्, तस्यैतस्य प्रमितिसाधनानि धर्मशास्त्रादीनि पारोक्ष्येणैवार्थख्यापकानि इति दर्शनाहेतुत्वान्नैव दर्शनशब्दव्यपदेश्यानीति सामान्येन विद्याशब्देनैवाभिधीयन्ते। ततश्च विद्या च दर्शनं चेति विभिन्नमिदं प्रस्थानद्वितयमिति संसिद्धम्। अतएव यथा षट्सु दर्शनेषु पुरस्तादुपदर्शिताश्चतुर्दशविद्या नान्तर्भवन्ति, तथैव तासु चतुर्दशसु विद्यास्वपीमानि दर्शनानि नान्तर्भवन्तीति निभृतमेतदालोच्यम्। यत्तु मीमांसायां वेदान्तस्य, न्याये वैशेषिकस्य, धर्मशास्त्रे सांख्ययोगयोश्चान्तर्भावमुपकल्प्य दर्शनानां विद्यात्वमनुजानन्ति तदेतन्नातिमनोरमंमाग्रहग्रहिलतया क्लिष्टं च। यथा त्वेतयोर्विद्यासूदाहृतयोर्न्यायमीमांसयोरपि नास्त्येव दर्शनत्वं तदेतदनुपदमेव दर्शयिष्यामः। ता इमाश्चतुर्दशापि विद्याः प्रायेण परोक्षतयैव तं [1]तमर्थमनुशासति, न तु साक्षात्कारपर्यन्तं तत्तदर्थजातमवगमयितुमुत्सहन्ते। उपपत्तिपुरःसरमात्मादितत्त्वनिरूपणपराणि तु शास्त्राणि साक्षात्कारपर्यन्तावगमायैव यतन्त इति दर्शनहेतुत्वाद्दर्शनानि तानि। तदित्थमुपपत्तिपूर्वकमात्मादितत्त्वनिरूपणप्रवणत्वमेव दर्शनत्वमिति निरूढमिदं लक्षणं द्रष्टव्यम्। यद्यपि च सर्वदर्शनसंग्रहादौ मीमांसायाः पाणिनीयस्य शब्दशास्त्रस्य

---

१. आत्मादितत्त्वमपि श्रुत्यादिभिः पारोक्ष्येणैवावबोध्यते, साक्षात्कारस्तु तस्योपपत्तिनिदिध्यासनाभ्यामेवेति प्रतिपादितं प्राक्। पुराणान्यपि सर्गाद्यर्थं परोक्षतयैव बोधयन्ति। अन्येषां तु शाब्दबोधोपयुक्तानामङ्गानां कैव कथाऽर्थसाक्षात्कार इत्यालोच्यम्।

रसेश्वरादेश्च दृश्यते दर्शनत्वाभिमानेनैव मतोपन्यासः, न च तत्र तत्रात्मादित-त्त्वनिरूपणं प्रकृतम्-शब्दशास्त्रस्य शब्दव्युत्पत्तिप्रदर्शनाय, मीमांसायाः श्रुति-वाक्यार्थव्यवस्थापनाय रसेश्वरस्य च पारदादिगुणख्यापनायैव विशिष्य प्रवृत्ति-दर्शनात्। येऽपि तु केचित्तत्र तत्रावलोक्यन्ते दार्शनिकविषयविचारांशास्तेऽपि प्रायेण प्रसंगागता दर्शनान्तरानुवादादिरूपा एवेति न तत्परत्वं तेषां शास्त्राणा-मवधारयितुं शक्यम्। यत्किञ्चित्प्रमेयैकदेशपरिग्रहणमात्राद्वा दर्शनत्वे सर्वत्रैव तदिदमव्याहतं प्रसज्येत। तस्मात्तेषां दर्शनत्वे विरुध्यते निरूढिरियमिति सत्यम्। अथापि तु दर्शनहेतुत्वरूपदृढतरतर्कानुगृहीतामधिकतमशिष्टसंप्रदायप्रसिद्धिमव-लम्ब्य दर्शनत्वाभाव एव तेषामनुसन्धेय इति न दोषः। शब्दशास्त्रादिषु हि दर्शनशब्दप्रयोगेऽभ्युपगम्यमाने विनिगमनाविरहात् सर्वेष्वेव शास्त्रेषु दर्शन-व्यपदेशो दुर्निवार एव। इतरव्यावृत्तस्यतत्रानुगतस्य च तर्कानुगृहीतस्य लक्ष-स्यासंभवात्। न च शब्दशास्त्रादिष्वेषु शिष्टानां दर्शनव्यपदेशो दृष्टचरः। तस्मात्सर्वदर्शनसंग्रहादौ तत्तन्मतोपन्यासः कुतुकायैवेत्याकलनीयम्। आस्तां ज्ञानसामान्यार्थतया सर्वस्मिन्नपि वाङ्मये दर्शनव्यपदेश एकेषाम्, भ-चेन्द्रियलिंगादिष्वप्ययं परेषाम्, येषान्तु परिच्छिन्नोऽयं दर्शनपदप्रयोगस्ते-मुक्तविधैव शरणमितिकृतंबहुना प्रपंचेन।

तानि च दर्शनानि षडिति चिरन्तनप्रसिद्धिः। कानि च तानीति जि-सायां दृश्यतेऽनेकधा विप्रतिपत्तिः। एकदेशिनान्तु तामुपेक्ष्य यत्प्राधान्-प्रसिद्ध्यति तद्विवेचयिष्यामः। तत्रेत्थमिदानीन्तना विशिष्टप्रज्ञा आतिष्ठ-कापिलं, सांख्यम्, पातंजलो योगः, काणादं वैशेषिकम्, गौतमीयो न्या-जैमिनीया पूर्वमीमांसा, वैयासिक्युत्तरमीमांसा वेदान्तापरपर्यायेति षडिम-दर्शनानीति। श्रुतिविरुद्धानि नास्तिकाना दर्शनानि त्वितः पृथग्भूतान्येव-सन्धेयानि। औपासनिकानां च दर्शनान्युत्तरमीमांसायामेवान्तर्भवन्तीति न्यूनता। तदेतत्प्रेक्षावद्भ्यो न रोचते। योगस्य न्यायस्य पूर्वमीमांसायाः पृथग् दर्शनत्वस्य विचारासहत्वात्। तथा हि-योगशास्त्रप्रवर्तकस्य भग-पतंजलेस्तावच्चित्तवृत्तिनिरोधोपायानुपदर्शयितुं विशिष्य प्रवृत्तिर्नत्वात्मादि-त्वचिख्यापयिषया। 'अथ योगानुशासनम्' 'योगाश्चित्तवृत्तिनिरोधः' इ-सूत्राभ्यां चित्तवृत्तिनिरोधस्यैव तत्र शास्त्रेऽधिकृतत्वबोधनात्। चित्तवृत्तिनि-धश्चायं क्रियाविशेषरूप इति क्रियोपदेशार्थमिदं शास्त्रं स्यात्, न त्वेव-दितत्त्वनिरूपणमुद्देश्यतयोपादत्ते। उपपत्तिपुरःसरमात्मादितत्वनिरूपण-त्वमेव तु दर्शनत्वमित्यवोचाम। यदप्येतद्योगशास्त्रे दृश्यते क्वचन दार्श-कतत्त्वनिरूपणं तदपि प्रसंगागतं प्रधानप्रतिपाद्योपयोगितयैवोपनिबद्धमि-

तन्मात्रेण तत्प्रवणत्वमस्य सम स्थातुं सुशकम्। तदेतदाहुर्दार्शनिकमूर्धन्यास्तत्रभवन्तो वाचस्पतिमिश्रा भामत्यामेतेन योगः प्रत्युक्त इति सूत्रं विवृण्वानाः— "नानेन योगशास्त्रस्य हैरण्यगर्भपातंजलादेः सर्वथा प्रामाण्यं निराक्रियते, किन्तु जगदुपादानस्वतन्त्रप्रधानतद्विकारमहदहंकारपंचतन्मात्रगोचरं प्रामाण्यं नास्तीत्युच्यते। न चैतावतैषामप्रामाण्यं भवितुमर्हति, यत्पराणि हि तानि तत्राप्रामाण्येऽप्रामाण्यमश्नुवीरन्। न चैतानि प्रधानादिसद्भावपराणि किन्तु योगस्वरूपतत्साधनतदवान्तरफलविभूतितत्परमफलकैवल्यव्युत्पादनपराणि। तच्च किंचिन्निमित्तीकृत्य व्युत्पाद्यमिति प्रधानं सविकारं निमित्तीकृतम्, न तु तद्विवक्षितम्' इत्यादिना। अनेन हि स्पष्टमेव योगस्य तत्वनिरूपणप्रवणत्वं निराकृतमेव। तथैव तत्र शंकरभगवत्पादैरपि किमिति सांख्यात्पृथग्योगनिराकरणं प्रस्तुतमित्याशंक्य योगोक्तयमनियमासनादीनां श्रुतावप्युपलम्भाद्योगस्य शिष्टतमैरप्यंगीकृतत्वात्, तत्प्रतिपादितचित्तवृत्तिनिरोधोपायेषु कस्यापि विप्रतिपत्त्यभावाच्च तत्प्रामाण्ये सुदृढे तत्रैव शास्त्रे प्रसंगप्रतिपादितानां प्रधानकारणत्वादीनामपि स्थालीपुलाकन्यायेन प्रामाण्यं मा प्रसाङ्क्षीदिति भूयोऽपि तन्निराकरणोद्योग इत्येवं समाहितम्। तेन च स्फुटं योगस्यात्मादितत्वनिरूपणेऽप्राधान्यं ख्यापितमेव। तस्मात्सर्वदर्शनानामुत्तरागंभूतमिदं निदिध्यासनसाधनसमर्थकं योगशास्त्रं न त्वेव दर्शनेष्वन्तर्भूतमित्यवश्यमनुमन्तव्यम्। यद्यपि चोपपत्तेरिव निदिध्यासनस्याप्यस्ति दर्शनहेतुत्वमिति तत्प्रतिपादकेऽपि शास्त्रे दर्शनव्यपदेशो न्याय्यः, अथापि तु परस्परमुपपत्तिमवलम्ब्य विप्रतिपन्नानां षण्णां दर्शनानां प्रस्तावे न तस्य पृथक् परिगणनमुचितम्, तस्य विभिन्नविप्रतिपत्तिसमर्थकत्वानुपलब्धेः। तद्यदि भवेदपि योगस्य दर्शनत्वमभिप्रेतम्, अथापि सांख्योत्तरांगतैवास्य भवेन्न तु पृथग् दर्शनत्वम्। सोऽयमपि शिष्टसमादृतः पन्थाः। तथा हि सांख्यभाष्यकृद्विज्ञानभिक्षुरपि—

'सांख्ययोगौ प्रथग् बालाः प्रवदन्ति न पण्डिताः'

इत्यादिवचनान्यवलम्ब्योपपत्त्या सांख्यप्रवचनत्वमेव योगस्य समर्थितवान्। नास्ति च पृथग्दर्शनत्वप्रयोजिका सांख्येन सह योगस्य पदार्थनिरूपणे कापि विप्रतिपत्तिः केवलन्तु सांख्येनोपेक्षितः पुरुषविशेष ईश्वरश्चेतःप्रणिधानार्थमुपयुक्तो योगेविशेष्याभ्युपगतः। तामिमां क्षुद्रामपि विप्रतिपत्तिं यदि गणयेम, अथापि शाखाभेद एव सोऽयं स्यान्न तु दर्शनभेद इति विविच्यतां सुधीभिः। तस्मात्सांख्यस्यैव योगस्य नास्ति पृथग् दर्शनतत्वम्, अपि[1] त्वदर्शनत्वम्—

१. उपपत्तिपराणामेव शास्त्राणां दर्शनत्वे प्रथमः पक्षः, निदिध्यासनपरस्यापि तु दर्शनत्वे उत्तर इति विवेच्यम्।

सांख्येन सहैकदर्शनत्वं वेति सिद्धमेतत्। अथ विनिगमना विरहाद्विपरीतमेव किं न स्यात्, अस्तु योगस्य दर्शनत्वम्, अस्तु च सांख्यस्य तदनुवादकत्वेन तच्छास्त्रात्वमिति यदि कश्चिदाक्षिपेत् तदेतदविचारात्। उपक्रमात्प्रभृत्या-समाप्तेः पदार्थनिरूपणपरस्य सांख्यस्य दर्शनताया वज्रलेपायमानत्वात्। योगस्य त्वन्यपरस्य प्रसंगात्तदर्थानुवादकत्वमेव युक्तमिति स्फुटमुपक्रमोपसंहारविदां परिशीलितदर्शनानाम्।

अथैवमेव गौतमोपज्ञस्य तर्कशास्त्रापरपर्यायस्य न्यायस्यापि नास्त्येव दर्शनत्वं विचारसहम्, आन्वीक्षिक्यपरपर्यायायास्तर्कविद्याया एव तत्र प्राधान्येनाधिकृतत्वात्। स्फुटं ह्येतदुररीकृतं प्रथम एव सूत्रे भाष्यकृता भगवता वात्स्यायनेन। अतएव च सूत्रकृतापि भगवता गौतमेनादिमे सूत्रे न किल दर्शनानां मुख्यप्रतिपाद्याः पदार्था निरूपणीयतया प्रतिज्ञाता अपि त्वान्वीक्षिक्यां विद्यायां प्राधान्यनोपयुक्ताः प्रमाणप्रमेय संशयादय एव पदार्थास्तत्राधिकृताः। प्रमाणादयोऽपि हि दर्शनेषु प्रसंगात्प्रतिपाद्यन्त इति सत्यम्, न तु तत्र ते भवन्ति प्राधान्येनाधिकृताः, यस्य कस्यचन प्रमेयस्यैकदेशानामप्येकदेशतामेव तत्र ते भजन्ते। न हि जगत्तत्वनिरूपणप्रस्तावे प्रथममेव प्रमाणसंशयदृष्टान्तवादजल्पवितण्डादीन् कश्चिदनुन्मत्तः पदार्थेषु परिगणयेत्। एवं हि जागतानां पदार्थानामानन्त्यादानन्त्यप्रसंगात्।

प्रमेयाण्येव हि गौतमपरिगणितान्यधिक्रियन्ते दर्शनान्तरेषु। अन्ये तु पदार्थास्तदंगतयैव भवन्ति प्रतिपाद्याः। तस्मात्तर्कविद्यायामेवोपयुज्यमाना इमे गौतमपरिगणिताः षोडश पदार्थाः। यद्यपि च दर्शनान्तरेषु प्रमाणसंशयादय इवेहाप्यान्वीक्षिक्यां सपरिकरं भगवता गौतमेन निरूपितानि प्रमेयाणि समान इवायं दर्शनान्तरैरस्य निरूपणक्रमस्तथापि खलु प्राधान्याप्राधान्यकृतः सुमहान् विशेषोऽनुसन्धेयः। दर्शनेषु तावत्प्रधानं प्रमेयनिरूपणम्—तन्निरूपणांगभूतं तु क्वचित्संशयतर्कादिनिरूपणम्। इह तु किलान्वीक्षिक्यां प्रधानं प्रमाणसंशयतर्कादिनिरूपणमेव, तत्त्विदं प्रमाणतर्कादिनिरूपणं नतरां निरालम्बं सुखेन ज्ञानाय कल्पत इत्यालम्बनतयात्र गृहीतानि प्रमेयाणि। तत्र यद्यपि यत्किंचिदेव प्रमेयमवलम्ब्य शक्यस्तर्कः प्रवर्तयितुम्, अथापि ननु मुनीनामध्यात्ममेवाभिनिवेशादध्यात्मविद्योपयुक्तान्येव प्रमेयाण्यवलम्बितानि भगवता गौतमेन तदेतदाह तत्रभवान् भाष्यकारः– 'तदिदं तत्त्वज्ञानं निःश्रेयसाधिगमार्थं यथाविद्यं वेदितव्यम्-इह त्वध्यात्मविद्यायामात्मादितत्वज्ञानम्, निःश्रेयसाधिगमोऽपवर्गप्राप्तिः' इति। अयमत्राशयः—यदेव खल्वालम्ब्य तर्कः प्रवर्त्येत, तस्य पदार्थस्य तत्त्वज्ञानान्निःश्रेयसस्य तज्जन्यपरमफलस्य प्राप्तिरवश्यं संपद्येत

इह त्वध्यात्मविद्यैव तर्कालम्बनभूतेति तत्तत्वज्ञानान्निःश्रेयसाधिगमो मोक्षप्राप्तिरेव विवक्षितेति । तस्मात्सत्यप्यात्मादितत्वनिरूपणे सपरिकरे तत्परत्वाभावान्नास्य तर्कशास्त्रस्य दर्शनत्वमपि तु तर्कप्रतिपादनपरतया तर्कविद्यात्वमेवेति कृतं प्रपंचेन । सात्वियं तर्कविद्या सर्वेषामपि दर्शनानां पूर्वाङ्गभूतेत्यन्यदेतत् ।

अथ यद्येवमतत्परत्वेप्यात्मादितत्वनिरूपणमात्रेण दर्शनत्वं न्यायस्याभ्युपगम्येतापि, अथापि तु काणादेन वैशेषिकशास्त्रेणैकदर्शनत्वमेवास्य भवेन्नतु पार्थक्यम् । कणादाभ्युपगतानामेव तत्वानां गौतमेन विशिष्य तर्कपुरःसर समर्थितत्वात् । न ह्यात्मादितत्वेष्वालोक्यते कणादेन गौतमस्य मनागपि विप्रतिपत्तिर्यया पृथग्दर्शनत्वमनुमन्येमहि । यास्त्विमाः कणादगौतमयोः पदार्थसंख्याविप्रतिपत्तिः, प्रमाणसंख्याविप्रतिपत्तिः, पीलुपिठरपाकादिविप्रतिपत्तिश्चेति तिस्रो विप्रतिपत्तय आधुनिकैरुद्भाव्यन्ते ता अविचारितरमणीयाः । गौतमेन ह्यान्वीक्षिक्यां विद्यायामुपयुक्ताः षोडश पदार्थाः संगृहीताः, कणादेन तु जागताः सर्वेपि पदार्थाः षट्सु संगृहीता इति विभिन्नविषयकत्वेन पदार्थसंख्याविप्रतिपत्तेः प्रागेव निरस्तत्वात् । समान एव हि विषये विप्रतिपत्तिः प्रसरेत् । न हि मनुष्याः पंच, पशवः सप्तेति विभिन्नसंख्याभिधायिनावपि पुरुषौ विप्रतिपन्नतया केनापि व्यवह्रियेते प्रज्ञाचरणेन । समाहितश्चान्वीक्षिकीमेवाभ्युपगम्य षोडशपदार्थवादो भाष्यकारेणेति तदनालोचनविजृम्भितमेवेदं नव्यानाम् । अन्ततश्चार्वाचीना अपि नैयायिकाः षोडश पदार्थान् षट्सु पदार्थेष्वेव महताडम्बरेणान्तर्भाव्य विप्रतिपत्तिमभ्युपगम्यापि संप्रतिप्रत्तिमेव साधयन्तीति न ततोऽपि सिद्ध्यति दर्शनपार्थक्यम् । वस्तुतस्त्वालोचने त्वन्तर्भावकथापीयमबोधविजृम्भणमितिप्रकरणभेदाभ्युपगम एव न्याय्यः । इदन्तावदन्तर्भावमभ्युपयन्तः प्रष्टव्याः—यथा गौतमोक्ताः षोडश पदार्थाः षट्सु कणादोक्तेषु भवद्भिरन्तर्भाव्यन्ते—तथैव ननु कणादाभ्युपगताः सामान्यसमवायादयो गौतमीयेषु कुत्रान्तर्भाव्यन्ते ? इति । न चैतावता गौतमीये तेषामनभ्युपगमसिद्धौ विप्रतिपत्तिरेव सुष्ठु साधितेति सांप्रतं वक्तुम्—'न घटाभावसामान्यनित्यत्वात्' इत्यादिषु सूत्रेषु स्फुटं तत्तेषां पदार्थानामुल्लेखदर्शनेनानभ्युपगमासिद्धेः । वैशेषिकसाधारण्यां च निरूपणप्रक्रियायां तत्तत्पदार्थाभ्युपगमस्य बलादुगलेपतितत्वात् । तत्त्वतस्त्विदमप्यत्यल्पमुक्तम्, पृथिव्यादिद्रव्याणां संख्यादि गुणानां कर्मणां चेत्यादिबहुतराणामेव पदार्थानां गौतमीयेषु षोडशपदार्थेष्वन्तर्भावासिद्धेः । 'आत्मशरीरेन्द्रि-

'प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः' इति सूत्रे प्रमेयपदेन 'आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्' इति तत्परिगणितेषु द्वादशसु प्रमेयेष्वर्थपदेन सर्वेऽपि पदार्थाः संगृहीता भविष्यन्तीति तु साहसमात्रम् । स्वयमर्थान् परिगणयता सूत्रकृतैव 'गन्धरसरूपस्पर्शशब्दाः-पृथिव्यादिगुणास्तदर्थाः' इति सूत्रेणार्थपदस्येन्द्रियार्थभूतगन्धादिमात्रपरत्वाभ्युपगमात् । यद्यपि त्वभियुक्ततमा अपि बहुशः पदार्थानत्रान्तर्भावयितुं बहुतरं क्लिश्यन्ति व्याचक्षते च सूत्रम् 'गन्धरसरूपस्पर्शशब्दाः, पृथिव्यादयः-पृथिव्यप्तेजांसि, गुणाश्च-संख्यासंयोगस्नेहादयः, आश्रिततत्त्वेनोपचारात् कर्मसामान्यादयश्च तदर्थाः इन्द्रियार्थाः' इति तात्पर्यटीकायाम् तथापि त एते व्याख्याकार एवैतेन स्वीयमप्रतिहतं पाण्डित्यं प्रख्यापयन्तु नाम यथेष्टम् । न तु सूत्राक्षरस्वारस्येन नापि वार्थपरीक्षाप्रकरणैकवाक्यतया सोऽयमर्थः सिध्यतीति स्फुटमेव तद्ग्रन्थपरिशीलिनाम् । एतावतापि चेन्द्रियार्थमात्रस्यैवात्र परिगणनस्याप्रत्याख्येयतयाऽतीन्द्रियाणामाकाशकालादिद्रव्याणां, गुरुत्वादिगुणानां, परमाणुकर्मणां, परमाणूनामेव चात्रान्तर्भावो नैव सर्वथा शक्यः समर्थयितुम्-तेषामिन्द्रियार्थत्वाभावात् । कथं चैतावत्पदार्थानभ्युपगमे दर्शनमिदं गौतमस्य वैकल्यदोषात्परिमोच्येत । तस्माज्जगत्तत्त्वनिरूपणोपयुक्ताः पदार्थाः साकल्येन नैव भगवता गौतमेन परिगणिताः, अपि तु कणादोक्तांस्तानेव यथावस्थितमभ्युपगम्य तदवलम्बनमात्रेण न्यायः प्रवर्तितः, गौतमोक्तास्तु पदार्थास्तर्कविद्योपयुक्ता एवेत्यकामेनाप्यवश्यमभ्युपगन्तव्यम् । सपरिकरात्मतत्त्वविज्ञानस्यैव सर्वानर्थप्रहाणहेतुतया तस्यैव सर्वोत्कर्षविशिष्टं प्रमेयत्वमभिधातुमिव प्रमेयेष्वपि भगवता गौतमेनैकादशभिः परिकरैः सहात्मैवोद्दिष्टोऽन्ये तु पदार्था दर्शनेषु निरूप्यमाणा अप्युपेक्षिता एव । उक्तं चैतत्तत्रभवता वात्स्यायनेन प्रमेयसूत्रं विवृण्वता-'अस्त्यन्यदपि द्रव्यगुणकर्मसामान्यविशेषसमवायाः प्रमेयम्, तद्भेदाच्चापरिसंख्येयम्-अस्य तु तत्त्वज्ञानान्निःश्रेयसाधिगम इतीदमेवादृतं सूत्रकृता' इति । अनेन च स्फुटमेव द्रव्यादीनां सर्वेषामत्रानन्तर्भावः सूचितः, निःश्रेयससाधनज्ञानस्य प्रधानविषयतयैव चामीषामात्मादीनामत्रप्राधान्येनोल्लेखो न त्वितरानभ्युपगमादिति विप्रतिपत्त्यभावोऽपि चाख्यात एवेति कृतमतिशयितया प्रसक्तानुप्रसक्त्या । तदित्थं पदार्थसंख्याविप्रतिपत्तिर्नास्त्येव गौतमकणाददर्शनयोरित्युपदर्शितमेतत् । पीलुपिठरपाकादिविप्रतिपत्तिस्तु सूत्राक्षरासंस्पृष्टेति उपेक्ष्यैव । यापि चेयं प्रमाणसंख्यायां दर्शनयोरनयोर्विप्रतिपत्तिरुद्भाव्यते-गौतमीये प्रमाणचतुष्टयस्य काणादे तु प्रमाणद्वयस्यैवाभ्युपगमदर्शनात्, सोऽयमपि नाममात्रे विवादो न तु वस्तुनि । न खलु भगवान् कणाद उपमानस्य शब्दस्य वा प्रामाण्यं नाभ्यनुजानाति, नापि तत्र प्रामाण्यस्वरूपे काचिदवान्तरीभूतापि विप्र-

तिपत्तिः केवलन्तु तयोरनुमानविशेषतैव कणादेनाभ्युपगम्यते-गौतमेन तु स्वातन्त्र्येण प्रमाणसंख्यायां ते प्रवेश्येते इति सैषा विप्रतिपत्तिरापाततः प्रतीतापि न पारमार्थिकी। विद्यमानापि चैषा एकदेशविप्रतिपत्तिः शाखाभेदमेव प्रयोजयेन्न तु दर्शनभेदम्। तस्मात्पृथग्दर्शनत्वप्रयोजिका न्यायवैशेषिकयोर्विप्रतिपत्तिर्न सिध्यतीति सिद्धमेतत्। तदित्थं गौतमीयस्य न्यायस्यापि नास्त्येव दर्शनत्वम्-सति वा वैशेषिकेणैकदर्शनत्वमेवेत्यतिरोहितमेतत्। अत एव वेदान्तदर्शने सकलदर्शननिराकरणप्रस्तावेऽपि नैव गौतमदर्शनं पृथङ् निराकृतं शंकरभगवत्पादैः। प्रमाणतयैव तु तत्र तत्र गौतमवचनमुपन्यस्तम्, तर्कविद्याप्रतिपादकगौतमशास्त्रनिराकरणस्याप्राप्तकालत्वात्। विद्यास्वपि च तर्कापरपर्यायस्यास्य न्यायस्य परिगणनं दर्शनत्वाभावादेव संगच्छत इति पूर्वोक्तं नैव विस्मर्तव्यम्।

अथ सपरिकरात्मतत्त्वनिरूपण प्रवणत्वे दर्शनलक्षणेऽभ्युपेते पूर्वमीमांसायास्तु नास्ति दर्शनत्वकथापि। कर्मकाण्डनिरूपणपराणि हि ब्राह्मणवाक्यानि सा व्यवस्थापयति, न त्वात्मादितत्त्वनिरूपणं स्पृशत्यपि। वाक्यार्थविवेचनमात्रपरस्य च मीमांसाशास्त्रस्यापि दर्शनत्वे पदविवेचनपराणां व्याकरणादीनामपि तद्दुर्निवारमेव प्रसज्जेतेति सर्वथा दर्शनव्यवहारसांकर्यप्रसंगः। प्रसंगागतयकिंचित्तत्त्वनिरूपणमात्रेण तु नास्ति दर्शनत्वमित्यसकृदवोचाम। अथैवमुपनिषद्वाक्यार्थव्यवस्थापनार्थं प्रवृत्ताया उत्तरमीमांसाया अपि न स्यादेव दर्शनत्वम्, वाक्यार्थनिरूपकत्वाविशेषादिति चेन्नैवम्। उत्तरमीमांसा ह्युपनिषद्वाक्यार्थं व्यवस्थापयन्त्येवोपपत्त्याप्यात्मादितत्त्वनिरूपणं विषयीकरोति। आत्मादितत्त्वनिरूपणायैव तस्या उपनिषद्वाक्यार्थव्यवस्थापने प्रवृत्तिः, उपनिषन्मात्रसमधिगम्यमात्मादितत्त्वमिति तयाभिमननात्। उपनिषद्भिश्च यथा किलात्मसाक्षात्कार उपदिश्यते, नैवं कर्मनिरूपणपरेण ब्राह्मणेन धर्मस्य साक्षात्कारः, धर्मस्योत्पाद्यत्वेनासाक्षात्करणीयत्वादित्युक्तमधस्तात्। ततश्चोपनिषद्वाक्यार्थमीमांसायाः साक्षात्काराख्यदर्शनहेतुत्वाद्दर्शनत्वं संभवेदेव, पूर्वमीमांसायास्तु दर्शनाहेतुत्वादेव नैव संभवेदिति सुकरमेतत्प्रतिपत्तुम्। आस्तां वा उत्तरमीमांसाया दर्शनत्वं च मीमांसात्वं चेत्युभयमपि, उपनिषद्वाक्यार्थनिरूपणांशे मीमांसात्वम्, उपपत्त्यात्मादितत्त्वनिरूपणांशे च दर्शनत्वमित्यंशभेदेनोभयोरप्यविरोधात्। मीमांसांश एवं चानया पूर्वमीमांसा निराक्रियते न तु दर्शनांशे, पूर्वमीमांसायां दर्शनांशाप्रतिपादनादिति सर्वं समंजसम्। तस्मात्पूर्वमीमांसेयं विद्यैव भवितुमर्हति न तु दर्शनम्। उत्तरमीमांसा तु विद्या च दर्शनं चेत्युभयमपीत्याकलयन्तु सुधियः।

तदित्थं योगन्यायमीमांसानां त्रयाणां निराकृते दर्शनत्वे सांख्यवैशेषिक-वेदान्ताख्यानि त्रीण्येव वैदिकदर्शनानीति संसिद्धम्। दर्शनानां षट्संख्या पूरणन्तु लौकायतिक, वैनाशिक—स्याद्वादाख्यैस्त्रिभिः श्रुतिविप्रतिपन्नैर्दर्शनैरैव। न च श्रुतिविप्रतिपन्नानामात्मादितत्त्वनिरूपणमप्रामाणिकमिति नोचितं तेषां दर्शनत्वमिति साम्प्रतं वक्तुम्। यतः श्रुत्यनुकूलेष्वपि दर्शनेषु कस्यचिदेकस्यैव मुख्यं प्रामाण्यं भवेन्न तु परस्परं विप्रतिपन्नानां सर्वेषामपि संभवितुमर्हति प्रामाण्यम्, वस्तुनि विकल्पासंभवादित्यन्येषामदर्शनत्वमेवापद्येत। तस्मादात्मादितत्त्वनिरूपणमात्रादेव दर्शनत्वं सर्वत्रैवाप्रतिहतमनुसन्धेयम्। सम्यग्दर्शनत्वं तु कस्येति दुर्निर्धारमिदम्। सर्वेषामेव स्वस्वदर्शने सम्यग् दर्शनत्वाभिमानात्। तदित्थमात्मादितत्त्वनिरूपकाणि षडिमानि दर्शनानि संसिद्धानि क्रमेण लौकायतकम्, वैनाशिकम्, स्याद्वादः, वैशेषिकम्, सांख्यम्, वेदान्तश्चेति। लौकायतिकं चार्वाकमित्यनर्थान्तरम्, वैनाशिकं सौगतं बौद्धमिति च, स्याद्वादो जैनमार्हतं च नातिरिच्येत, वैशेषिकं काणादमौलूक्यमिति समानोऽर्थः, प्राधानिकं प्राकृतिकं सांख्यं चैकमेव, शारीरकमुत्तरमीमांसा वेदान्ता ब्रह्मदर्शनमिति पर्यायशब्दाः। तेष्वेषु षट्सु दर्शनेष्वाद्यानि त्रीणि श्रुतेः प्रामाण्यं नाभ्युपगच्छन्तीति स्वस्वतीर्थंकरवचनानि युक्तिविशेषांश्चावलम्ब्य स्वं स्वमर्थमातिष्ठन्ते। उत्तराणि तु त्रीणि श्रुतेः प्रामाण्यमभ्युपयन्त्यपि युक्तिविशेषपुरःसरं श्रुतेरर्थमन्यथान्यथैव व्याचक्षाणा विवदन्ते। अन्यानि तु भवेयुर्यदि कानिचन दर्शनानि, तत्रैव तानि यथायथमन्तर्भाव्यानीति सर्वं सुस्थम्।

अथेदं तावद्विचार्यम्—सकलविज्ञानमौलिललामभूतं भारतस्य चिराय मुखमुज्वलयद्दर्शनविज्ञानमिदं कदा केन वा क्रमेण जगत्याविर्भूतम्? तत्रापि भारतोपक्रममेव जगत्यस्याविर्भाव इति सर्वेषां शेमुषीजुषां सिद्धान्त इति भारत एव वर्ष प्रादुर्भावोऽस्य पुरतः पर्यालोचनमर्हति। द्विविधाश्चात्र पर्यालोचकाः, जगदीश्वरानुग्रहनिगृहीतनिःशेषनास्तिक्यभावाः श्रद्धालुस्वभावाः केचन महान्तः 'अपौरुषेयं वाक्यं वेदः' इति चिरन्तनवचसि चिरं विश्वसन्तोऽपि वेदप्रामाण्यादेव नैतासु कालनिर्णयजल्पनासु पदमप्यादधति। अनादिर्हि भगवान् वेदः—'ब्रह्माद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः', स एव चायं निधिः सर्वविद्यानाम्-नास्ति भारते किमु भारते जगत्येव वा, किमपि तद् यन्न भवेच्छ्रुतिषु श्रुतम्। तदित्थमनाद्याः सर्वा अपि विद्या इति नैषां मते विचारणीयोऽयमर्थः। अन्ये त्वैतिहासिकेषु भावेषु परीक्षणीयेषु श्रद्धां सुदूरमुत्सृजन्तो भजन्तः केवलामुपपत्तिं, प्रत्यक्षमात्रपरायणाः सद्योजातबालनिदर्शनेन क्रम-

विकासमेव जगति विद्यानां सर्वासामुररीकुर्वते । न चैतिहासिकपद्धतिमवलम्बमाना मन्त्रब्राह्मणात्मकस्य वेदस्यान्यस्य वा कस्यापि शास्त्रस्यानादितामपौरुषेयतां वा स्वीकर्त्तुं सन्नह्यन्ति । तेषामेषां दृष्टौ सर्वमपि विचार्यम्, सर्वमपि दृढाभिरुपपत्तिभिः परीक्ष्यम्, सर्वत्रैव जनश्रुतिमात्रे दर्शनीयः सर्वथाऽनाश्वासः । तेनैव मार्गेण च तेऽवबोधनीयाः कस्याप्यनादितां सादितां वा न तु श्रद्धया केवलया । त इमे श्रद्धाधनैः किमु 'नास्तिका' इति समर्प्य विशिष्टमुपाधिमुपेक्ष्या एव । एषामपि दृष्टौ गौरवं प्राक्तनानां शास्त्राणामारोपयितुं किमु नाश्रयणीय एव यत्नः ? विशृंखलैषां विचारधारा दृढैरुपपत्तिखनित्रैः किमु न प्रवाहणीयास्मदभिमते मार्गे ? अहन्तु पश्यामि—अवश्यं कालेऽस्मिन् यथापि संभवेत्तथा यतनीयमेव स्वसिद्धान्तानां गौरवमभिरक्षितुम् । अस्तु स्वकीया चिरमक्षतैव श्रद्धा—लोकसंग्राहार्थं तु स्वयमपि तटस्थेनैव भाव्यम् विचारकेण ।

तद्वयमपीदानीं विचारपद्धतौ पतन्त एषामेव पन्थानमनुसरन्तो न वाच्या भवेम धर्ममर्मस्पृशां श्रद्धाजुषामिति क्षमामभ्यर्थयामहे ।

एष तावाद्विचारकाणावैदेशिकानांविदुषां केषांचित्तदनुयायिनां भारतीयानांच विषयेऽस्मिन् विवेचनासारः—यदत्यन्तप्राचीनेष्वार्येषु नासीदिदं दर्शनविज्ञानम् । ते हि केवलं जलवायुसूर्याग्न्यादिभिः प्राकृतिकैः पदार्थैरनुक्षणं चमत्क्रियमाणचेतसस्तानेवोपासते स्म, तानेव मन्त्रैः पुनः पुनर्वर्णयन्ति स्म । तैरेव कर्माणि विदधति स्म । क्रमेण तु सर्वस्योत्पादके परमात्मनि नाम कस्मिंश्चन वस्तुनि समाकृष्टा दृष्टिः, क्रमेणैव तु प्रादुरभूवन् पारलौकिका विचाराः । उपनिषदां काले च जजागार विज्ञानमिदं दार्शनिकम्, तदात्व एवाभवदान्दोलनमात्मेश्वरादिविषयाणां प्राधान्येन । सोऽयं विज्ञानमध्याह्नः ।

वैदिकेषु सूक्तेषु अग्निवाय्वादित्यवरुणपृथिव्यादीनां प्राधान्येन स्तवोपलम्भः, विज्ञानस्य तत्र क्वचिदेव समुन्मेषः, उपनिषदां भाषावैचित्र्यम्, उपनिषत्सु विज्ञाननिरूपणप्राधान्यम्, क्वचिदुपनिषत्सु ऋग्वेदादीनामपरविद्यात्वेनोल्लेखश्च मतस्यास्य भवति मूलम् ।

इदमपरममीषामुक्तिवैचित्र्यं यत्क्षत्रियैरेवाविष्कृतमिदमौपनिषदं दार्शनिकं वा विज्ञानं न तु ब्राह्मणैः । ब्राह्मणग्रन्थेषु ब्राह्मणानामनुदिनं वर्द्धमानं कर्मकाण्डाडम्बरं सकलजगति कर्मपरायणतया विजृम्भमाणं च ब्राह्मणानामाधिपत्यमसहमाना एव क्षत्रिया विज्ञानमेतत् प्रकटयांचक्रुः । विव्यधुश्च क्रमेण कर्ममर्म । आसीच्च क्रमेण क्षत्रियोपज्ञस्य विज्ञानस्यैवास्य साम्राज्यम्—अस्त-

मुपगतश्च ब्राह्मणानां कर्माडम्बरः। ब्राह्मणा अपि तदा विज्ञानपथमेवानुसस्रु रिति।

अस्यापिमतस्य मूलमुपनिषत्सु श्रूयमाणा केवलकर्मिणां क्वचन निन्दा। आख्यायिकाश्च काश्चन समुपलभ्यमाना उपनिषत्सु मतस्यास्य मूलत्वमुपयान्ति।

तथा हि—ताण्डिश्रुतौ छान्दोग्योपनिषदि पंचमप्रपाठके तृतीये खंडे दृश्यते—गौतमः श्वेतकेतुरारुणेयो ब्राह्मणः पांचालानां परिषदि गतः प्रावाहणिना जैबलिना क्षत्रियेण पंच प्रश्नान् पृष्टः,

'वेत्थ यदितोऽधिप्रजाः प्रयन्तीति' ॥ १ ॥
'वेत्थ यथा पुनरावर्त्तन्ता इति' ॥ २ ॥
'वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्त्तन्ता इति' ॥ ३ ॥
'वेत्थ यथाऽसौ लोको न संपूर्यत इति' ॥ ४ ॥
'वेत्थ यथा पंचम्यामाहुतावापः पुरुषवचसो भवन्तीति ॥ ५ ॥

विज्ञायेत विवेकशीलैर्यन्मृतस्य परलोकगतिसम्बन्धिनः पंचापि प्रश्नाः। तानेतान् नोत्तरयितुं शशाक श्वेतकेतुः। स च स्वगुरोः पितुर्गौतमस्य समीपमेत्य तानेव पप्रच्छ प्रश्नान्। सोऽप्यविदन् प्रावाहणिमेवोपेयाय। चिरं प्रार्थितः प्रावाहणिरेतं शिक्षयन्नुवाच।

'यथेयं न प्राक् त्वतः पुरा विद्या ब्राह्मणान् गच्छति, तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदिति'। अभिव्याहृताग्रे तेन पंचाग्निविद्या यत्र मृतस्य मनःप्राणेन्द्रियभूतसूक्ष्मादिसमष्टेः सूक्ष्मशरीरस्य पूर्वं चन्द्रमसि, तत्र भुक्तभोगस्य ततः पर्जन्ये, ततः पृथिव्यामन्नरूपेण, अनुमातरि गर्भरूपेणेति पंचभिराहुतिभिः पुनः पुरुषरूपता प्रतिपाद्यते। ये त्वर्चिर्मार्गमनुसृतास्तेषामर्चिषोहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान्, मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसा विद्युतं तत्पुरुषो मानवः स एतान् ब्रह्म गमयत्येष देवयानः पन्थाः' इति देवयानमार्गेणापुनरावृत्तिरुच्यते। समाधीयन्ते चान्येऽपि मध्ये मध्ये प्रश्नाः।

शतपथान्तर्भूतस्य बृहदारण्यकस्य षष्ठेऽध्याये द्वितीये ब्राह्मणेऽप्यीयमेवमेवोपलभ्यत आख्यायिका। उक्तं च तत्रापि।

'तथा नस्त्वं गौतममापराधास्तव च पितामहा यथेयं विद्येतः पूर्वं न कस्मिंश्चन ब्राह्मण उवास तां त्वयं तुभ्यं वक्ष्यामि' इति।

कौषीतक्युपनिषदि चायमेव वारुणेः पुत्रः श्वेतकेतुश्चित्रस्य गार्ग्यायणेर्याजनार्थं पित्रा प्रेषितस्तेन गौतमस्य पुत्र! अस्ति संवृतं लोके यस्मिन् मा

धास्यसि, अन्यतमो वाध्वा तस्य मा लोके धास्यसि' इति किंचिद्वैचित्र्येण परलोकगतविषय एव पृच्छ्यते। तथैव च पितुः सकाशमुपगतः, पिता चोपेत्य चित्रं गार्ग्यायणिं ब्रूते—'उपायानीति' स च ब्रवीति 'ब्रह्मार्थोऽसि गौतम! यो न मानमुपागाः, एहि व्येव त्वा ज्ञपयिष्यामीति' अनन्तरं च मृतानां चन्द्रलोकगमनम्, ततः केषांचिद् वृष्टयादिक्रमेण पुनरावृत्तिः, अपरेषां च विज्ञानवतां वाय्वादित्यवरुणेन्द्रप्रजापतिलोकानुक्रमेण ब्रह्मलोकावाप्तिः, तत्र विरजानदीसंक्रमणादिकं च विस्तरेण प्रतिपाद्यते। 'ब्रह्मार्थोऽसि गौतम' इत्युक्तिभंग्या च आरुणेर्याज्यत्वप्रसक्तया उपनिषदन्तरैकवाक्यतया चास्य गार्ग्यायणेश्चित्रस्यापि क्षत्रियत्वमेव बुद्धिमुपारोहतीति विदुषां विवेच्योऽयमर्थः। तदित्थं पारलौकिकं विज्ञानं क्षत्रियोपज्ञं स्पष्टं सिद्ध्यति।

अन्यास्वपि विद्यासु क्वचिदालोक्यते प्रवक्तृत्वं क्षत्रियाणाम्। तथा हि छान्दोग्ये (१ अ० ८ ख०) शिलकः दाल्भ्यश्चेति द्वौ ब्राह्मणौ प्रवाहणो जैबलिः क्षत्रियश्चेति साम्नः प्रतिष्ठाविषये विवदन्ते। शिष्यन्ते चान्ते प्रवाहणिनैव तत्वम्। ५ प्रपाठके एकादशादिखण्डेषु च कैकेयोऽश्वपतिर्ब्राह्मणान् वैश्वानरमात्मानमुपदिशति। पृथक् पृथक् लोकोपासनां च तदीयां निन्दति। सिद्धान्तयति च प्रादेशप्राणोपासनं श्रेयः। बृहदारण्यकेऽपि द्वितीयेऽध्याये दृप्तबालाकिर्गार्ग्यो ब्राह्मणः काश्यपस्याजातशत्रोः सकाशं ब्रह्म प्रस्तोतुमुपगतस्तस्मात्पराजयते। पृच्छंश्च तमेव तत्वं प्रतिलोमं वै तद् यद् ब्राह्मणः क्षत्रियमुपेयात्, ब्रह्म वक्ष्यतीति, व्येव त्वा ज्ञपयिष्यामीति, इति स्वकीय विनयमुपदर्शयता अजातशत्रुणा सुप्तं पुरुषमभिगम्यात्मनः शरीराद्यतिरेकं प्रबोध्यते। श्रूयन्ते च बहवो जनकाद्या राजर्षय औपनिषदविज्ञानपारंगताः। तेन क्षत्रियाणामेव दार्शनिकविज्ञानाविष्कर्तृता स्फुटं सिद्ध्यति। उपनिषद्भिश्च तमादितत्वं प्रतिपादयन्तीभिः—

'न कर्मणा न प्रजया धनेन
त्यागेनैकेनामृतत्वमानशुः।'
'प्लवा ह्येते अदृढा यज्ञरूपाः'

इत्यादिना कर्मकाण्डं प्रतिक्षिप्यते।

'द्वे विद्ये वेदितव्ये परा चैवापरा च,
तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वांगिरसः'

इत्यादिना मन्त्रभागश्च समाक्षिप्यत इव। तेन ब्राह्मणानां कर्माडम्बरखिन्नैरेव क्षत्रियैर्विज्ञानान्येतानि प्रचारयितुमुपक्रान्तानीति न दुर्बोधोऽयमर्थ इति।

तदेतद् विज्ञानपारंगतानामितिहासतत्त्वविदामप्याधुनिकानां विदुषां मतं नानुमोदयितुं पार्यते ।

आस्तां मनुष्यसमाजे ज्ञानस्य क्रमविकासः, आस्तां वा ईश्वरानुग्रहाधिगतवेदद्वारा सहसैव विज्ञानपारंगमत्वम्, नात्रेदानीं विवदितुमिच्छामि । मन्त्रसंहिताविर्भावकाले नासीदृषीणां विज्ञानतत्वावबोधः—क्रमेण तूपनिषत्काले स पल्लवित इति तु सर्वथा दुरुपपादं मतमिदम् । संहितास्वेव सर्वविधविज्ञानस्य सूत्ररूपेण समुपलभ्यमानत्वात् । सर्वविज्ञाननिधिरेवायं भगवान् वेदराशिरीश्वरेण महर्षीणां बुद्धावाविर्भावितः । विज्ञानस्य क्रमविकासवादेऽपि यदा पूर्णतया विकासमलमत सर्वविधं महर्षिषु विज्ञानं तदैवायमाविर्भूतो वेदराशिः । तत एवात्र सर्वविधस्यैव विज्ञानस्य न दुर्लभं सूत्रम् । वेदसमुद्रावगाहने कृतयत्नाः विपश्चित एवैतत्परिचिनुयुः दिङ्मात्रं तु महानुभावानां मनोऽनुरंजयितुमुदाहरिष्यामः ।

उक्तं प्राक्—आत्मादितत्त्वज्ञानमेव दर्शनानां मुख्यतमो विषयः । कथमस्य जगतः सृष्टिः, किमस्य मूलकारणम्, को जीवः, क ईश्वरः, कोऽनयोः सम्बन्धः कः परलोकः, कथं गतिः, कथमागतिः, कान्यात्मन उपकरणभूतानि मनआदीनि, कानि जगदीश्वरस्याज्ञाविधेयानि जगच्चक्रनिर्वाहकाणीत्यादीनांदुरूहाणां मनुष्यचेतसि स्वभावतः आविर्भवतां प्रश्नानां सम्यगुत्तरणमेव प्रधानतमं विज्ञानम् । तदेव पल्लवितमुपनिषत्सु, पुष्पितं फलितंच दर्शनेषु—इति विस्तारदृष्ट्या शक्यत एतद्वक्तुम् । परं बीजरूपेणतु सर्वमपीदं निहितं संहितास्वेव ।

तथा हि ऋग्वेदस्य दशमे मण्डले एकोनत्रिंशदुत्तरशततमे परमेष्ठिनः प्रजापतेरार्षे सूक्ते—

नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमापरो यत् ।
किमावरीवः कुहकस्य शर्म्मन्नम्भः किमासीद्गहनं गभीरम् ।
न मृत्युरासीदमृतं न तर्हि न राज्या अह्न आसीत्प्रकेतः ।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किंचनास ।

इत्युपक्रम्य सर्वापि सर्गविद्या सूत्ररूपेणाम्नाता । आनीदवातं स्वधयातदेकमिति प्राणनम्—अन्तर्निहितानां जगतां बहिर्निस्सारणंकुर्वत् स्वधया—शक्त्या सहैकमेवतत्त्वमासीदितिस्पष्टं निर्दिष्टम् । न चैतत् वायुरूपमिति अवातमिति पदेनाम्नातम् ।

अन्ते चास्य सूत्रस्य

को ऋग्वेद क इह प्रवोचत् कुत आ जाता कुत इयं विसृष्टिः
अर्वाग्देवा अस्य विसर्जने नाथा को वेद यत आबभूव।
इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न।
यो अस्याध्यक्षः परमेव्योमन् सो अंग वेद यदि वा न वेद।

इति सृष्टिविज्ञानस्यात्यन्तं गभीरता, अनिर्वचनीयता, देवैः सर्वथा कर्त्तुमशक्या सृष्टिरीश्वरकर्त्तृकैवेति च श्रूयत एव एकं मूलं जगतः।

सर्वश्चायं वेदः प्रायेण पारलौकिकान्येव फलानि प्राधान्येनोद्दिश्य कर्माणि विधातुं प्रवृत्तः, यो हि शरीराद्यतिरिक्तमात्मानं जीवापरपर्यायं न जानाति, स परलोकाय यत्नमुपदिशतीत्यप्रमत्तानां दूरापैतैव कथेयम्। स्पष्टमपि तु जीवस्य विज्ञानं श्रुतौ शृणुमः—

अनच्छेय[1] तुरगातु[2] जीव[3]मेनद् ध्रु[4]वं मध्य आ प्रस्त्या[5]नाम्।
जीवो मृतस्य चरति स्वधा[6]भिरमर्त्योमर्त्येना स योनि।

(ऋ० १ म० १६४ सू० ३० मन्त्रः, दीर्घतमा ऋषि)

पूर्वार्द्धे—शरीरमेतज्जीवनवत् स्वापाराय तूर्णगमनं तिष्ठति, प्राणापगमे तु अविचालिगृहमध्ये शेते—इति शरीरसम्बन्धेनोक्तम्। उत्तरार्द्धे च स्वयममर्त्योऽपि मर्त्यशरीरसहचरो जीवः मृतस्य मरणानन्तरं स्वधाभिश्चरतीति जीवस्य पुनरवस्थितिद्वारा नित्यत्वमुपदिष्टम्।

अपाङ् प्राङयत स्वधया[7]गृभीतो मर्त्यो मर्त्येना स योनिः।
ता शश्वन्ता विषूचीनां वियन्तान्यन्यं चिक्युर्न निचिक्युरन्यम्।

(तत्रैव सूक्ते ३८ म०)

अत्र च शारीरः पुरुषो भूतात्मा शरीरातिरिक्तः कर्तात्मा चेति परस्परमनुबद्धौ सहचरावाख्यातौ। तत्र शरीरं सर्वेऽप्यवबुध्यन्ते, आत्मानं तु न प्राकृता अवबुध्यन्ते—इति चात्मविज्ञानस्य दुरूहतोपदिष्टा।

यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाभिस्वरन्ति।
इना विश्वस्य भुवनस्य गोपाः समाधीरः पाकमत्राविवेश॥

( तत्रैव सूत्रे २१ म० )

---

१. प्राणनं कुर्वत्, २. शेते, ३. स्वव्यापाराय तूर्णगमनं सदेजद्, ४. जीवनवद्, ५. मरणान्तरमितिशेषः, ६. गृहाणाम्, ७. श्राद्धदत्तै ८. अन्तोपलक्षितद्भोगेन।

इह सुपर्णाः शोभनपतनानीन्द्रियाणि, अमृतं च विज्ञानं, विदथा वेदनेन-वृत्यात्मकेन ज्ञानेनेति इन्द्रियजन्यवृत्तिद्वारा आत्मन उपभोग आख्यात इति व्याचष्टे निरुक्तकृद् भगवान् यास्कः ।

अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्षत् ।
तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ।
तदेजति तन्नैजति तद्दूरे तद्वन्तिके ।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥

( यजु : ४० अ० )

इति च यजुःसंहितायामेव स्पष्टं सर्वमात्मविज्ञानम् ।

अथ–विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात् ।
संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन् देव एकः ।
किंस्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा पृच्छतेदु तदध्यतिष्ठद् भुवनानि धारयन् ।

( ऋ० १०।८१।३-४
विश्वकर्मा ऋषिः )

ब्रह्म तद्वनं ब्रह्म स वृक्ष आस यतो द्यावा पृथिवी निष्टतक्षुः ।
मनीषिणो मनसा विब्रवीमि तद् ब्रह्माधितिष्ठद्भुवनानि धारयन् ॥

( तैत्तरीयारण्यके )

मतं विदाथ य इमा जजानान् यच्चस्माकमन्तरं बभूव ।
नीहारेण प्रावृता[1] जल्प्या[2] चासु तृप उक्थ शासश्चरन्ति ।

( ऋ० १०।८२।७ यजुः १७।३१
विश्वकर्मा ऋषिः )

इत्यादिभिर्भूरिभूरिमन्त्रैर्भगवान् जगदीश्वरस्तत्र तत्र स्तुतः
द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पल स्वाद्वत्यनश्नन्नन्यो अभिचाकशीति[3] ।

इति चोपाधिपरिच्छिन्नेन जीवेनेश्वरस्य तारतम्यमप्याम्नातम् । अन्यद्विज्ञानं यत्र परिसमाप्यते—'यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते' तदिदमीश्वराद्वैतविज्ञानमपि तत्र तत्र संहितास्वेव समाम्नातम्—

---

१. अज्ञानेनावृताः । २. अनृतजल्पनेन प्रवृत्ताः ।
३. अथ० ९ का० ५ अनु० २०: :ऋ० म० १।१६४ सू० २० दीर्घतमा

रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय ।
इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शतादश ।

(ऋ० म० ६।४७।१८: भरद्वाजो गर्ग ऋषि)

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।
तदेव शुक्रं तद्ब्रह्म ता आपः स प्रजापतिः ।

( यजु० ३२ अ० )

पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ।

( पुरुष सूक्त )

अथ अम्भृणस्य महर्षेर्दुहिता वाङ्नाम्नी ब्रह्मविदुषी आविर्भूतब्रह्मभावा तदभेदेनात्मानं स्तौति—

अहं रुद्रेभिर्वसुभिश्चरामीत्यादि—

( ऋ० म० १० । १२५ सू० )

अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा ।
परो दिवा पर एना पृथिव्यै तावती महिना संबभूव ।

: अन्यान्यपि सन्त्याध्यात्मिकानि सूक्तानि—

तेन चात्मब्रह्माद्वैतं स्फुटत्येव विदुषाम् ।
यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ।
यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ।

( यजुः ४० अ० )

इति चैकात्म्यविज्ञानं स्पष्टमेवोपदिष्टमाध्वर्यवश्रुतौ ।
ऋचो अक्षरे परमेव्योमन् यस्मिन् देवा अधिविश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ।

( ऋ० १। १६४। ३९
दीर्घतमा ऋषिः )

[-सर्वासामृचां प्रतिपाद्ये अनश्वरे व्यापके परे ब्रह्मणि-यत्र सर्वे देवाः प्रतिष्ठिताः—तं यो न वेद स ऋचा मन्त्रेण किं करिष्यति, तद्विद्वांसस्तु सम्य-

गासते-अविचालिनस्तिष्ठन्तीति ईश्वरविज्ञानस्तुतिपरोऽर्थः । आत्मविज्ञानस्तुतिपरोऽपि यास्केनोक्तः—'शरीरमत्र ऋगुच्यते' यदेतेनार्चन्ति । प्रत्यृचः सर्वाणीन्द्रियाणि, तस्य यदविनाशि धर्म तदक्षरं भवति । इन्द्रियाण्यत्र देवा उच्यन्ते यान्यस्मिन्नधिनिषण्णानीत्यात्मप्रवादाः । इत्यादिना ]

इति च ऋग्वेद एव ब्राह्मणेन दीर्घतमसा दृष्टे सूक्ते ईश्वरमात्मानं चाविद्वांसः केवले कर्मादौ निरताः कटाक्षयन्त इव ।

तद्वां नरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम् ।
दध्यङ् मन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्रपदीमुवाच ।
(ऋ० १। ११६। १२)

इति च या मधुविद्या संक्षेपेण सूचिता, सैव च्छान्दोग्ये बृहदारण्यके च विस्तृता सम्यगालोक्यते । आथर्वणेन दधीचा हि प्रकटितेयमिहाख्याता । इत्थं सर्वाण्यपि विज्ञानानि सर्वा अपि विद्या औपनिषदविद्यानां सूत्रभूताः संहितासु समाम्नायन्त एवेति दिङ्मात्रमेतत् । किमन्यत्-यदिदं पारलौकिकं विज्ञानं क्षत्रियोपज्ञमुपनिषत्काल एवाविर्भूतमिति दृढेन प्रमाणेनाऽभिनिविश्यते-तदपि आलोक्यतां विजृम्भमाणं संहितासु—तथाहि मृतं पुरुषमुद्दिश्य दाहकाले वदति संस्कर्ता—

'पूषा त्वेतश्च्यावयतु प्रविद्वाननष्टपशुर्भुवनस्य गोपाः ।
सत्वेतेभ्यः परिददत् पितृभ्यो अग्निर्देवेभ्यः सुविदत्रियेभ्यः ।
( ऋ० १०।१७।३
देवश्रवा ऋषिः )

यत्रासते सुकृतो यत्र ते ययुस्तत्र त्वा देवः सविता दधातु
( ऋ० १०।१७।४

प्रेहि प्रेहि पथिभिः पूर्व्येभिर्यत्रा नः पूर्वे पितरः परेयुः ।
उभा राजाना एवधया मदन्ता यमं पश्याति वरुणं च देवम्
( अथ० १८ का० १ अ०

इत्यादिषु पितृलोकगतिस्तत्र प्रापकत्वं च तत्तद्देवानां श्रूयते—
संगच्छस्व पितृभिः संयमनेष्टापूर्तेन परमेव्योमन् ।
हित्वा यावद्यं पुनरस्तमेहि संगच्छस्व तन्वा सुवर्चाः ।
( अथ० १८।

अवसृजत्पुनरग्ने पितृभ्यो यस्त आहुतश्चरति स्वधाभिः ।
आयुर्वसान उपवेतु शेषः संगच्छतां तन्वा जातवेदः ।

( ऋ० १०।१६।५ )

इत्यादिषु मृतस्य पुनःशरीरग्रहणं स्फुटीभवति । अत्र कर्मानुसारं नानाविधा गतयः श्रूयन्ते ।

द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् ।
ताभ्यामिदं विश्वमेजत् समेति यदन्तरा पितरं मातरं च ।

( ऋ० १०।८८।१५ आपंगरसो
वामदेव्यो वा मूर्धन्वानृषि )

इह तु स्फुटमेव देवयानपितृयाणौ पन्थानौ प्रतिपाद्येते ।

वन्दस्व मरुतां गणं त्वेषं पनस्युमर्किणम् ।
अस्मे वृद्धा असन्निह । : ऋ० म० १।३८।१५ :

इत्यादौ चान्तरिक्षे मृतानामवस्थितिर्व्यज्यते ।

द्यौर्नः पिता जनिता नाभिरत्र बन्धुर्नो माता पृथिवी महीयम्
उत्तानयोश्चम्वोर्योनिरन्तरत्रा पिता दुहितुर्गर्भमाधात् ।

( ऋ० १।१६४।३३ :अथ० का० ९ अनु० ५ सू० १०।१२ )

इत्यादिषु अन्तरिक्षक्रमेण पुनरागतिरभिव्यज्यत एव

पुंसि वै रेतो भवति तत् स्त्रियामनुषिच्यते ।
तद्वै पुत्रस्य वेदनं तत्प्रजापतिरब्रवीत् । ( अथ० ६।११।१२ )

इत्यादिषु चतुर्थी पंचमी चाहुतिराम्नायत इति विवेच्यतां सुधीभिः सर्वापि पंचाग्निविद्या ।

'यज्जाग्रतो दूरमुदैति दैवम्'

इत्यादौ शिवसंकल्पसूक्ते च स्फुटमात्मापकरणस्य मनसो विज्ञानम् । ईश्वराज्ञाविधेयानामग्निवाय्वादित्यवरुणयमादीनान्तु विज्ञानं प्रतिपदं जागर्त्येवेति किमु तदुदाहरणेन । कियदुदाहरामः, सर्वाप्येवं विद्या सूत्ररूपेण स्फुटमुपलभ्येत संहितासु समीक्षादक्षैः । सर्वेऽपि चादोहृता मन्त्रा इमे प्रायेण ब्राह्मणैरेव दृष्टा इति ब्राह्मणेषु नासीत्पूर्वमिदं दार्शनिकं विज्ञानमित्युक्तिरभित्तिचित्रायितेव । यत्तूपनिषत्सु क्षत्रियेभ्यस्तत्तद्विद्याग्रहणं श्रूयते ब्राह्मणानाम्-तत्कस्मिंश्चित्कालविशेषे देशविशेषे वा बहुज्ञतां कस्याश्चित् क्षत्रियव्यक्तेराख्यास्यति, गृहीता हि बह्वयो

विद्यास्तेषु तेषु कालेषु तैस्तैर्ब्राह्मणैस्तत्तत्क्षत्रियेभ्य इति तद्ब्राह्मणापेक्षया तत्क्षत्रियस्य बहुज्ञता सिद्धत्येवम्। न तु ब्राह्मणजातिरेवैतद्विज्ञानशून्यासीत् क्षत्रियजात्यैव वा आविष्कृतं दार्शनिकं विज्ञानमिति शक्यते केनापि वक्तुम्। सामप्रतिष्ठाप्रकरणं पूर्वोक्तं व्याचक्षाणो ह्याह भगवान् शंकराचार्य :—

त्रयो होद्गीथे कुशला बभूवुः,-कस्मिंश्चद्देशे काले च निमित्ते वा समेतानामित्यभिप्रायः। न हि सर्वस्मिन् जगति त्रयाणामेव कौशलमुद्गीथादिविज्ञाने। श्रूयन्ते ह्युषस्तिजानश्रुतिकैकेयप्रभृतयः सर्वज्ञकल्पाः। छा० १।८ इति।

सामप्रतिष्ठाविज्ञानं चेदं परमात्मन एव सर्वमूलतामवगत्य तदुपासनमेव, तच्च यथा सर्वासु संहितास्वेव जागर्ति तथोपादर्शयमधस्तात्।

'तान् होवाचाश्वपतिर्वै भगवन्तोऽयं कैकेयः संप्रतीममात्मानं
वैश्वानरमध्येति, तं हन्ताभ्याच्छामेति'

( छा० ५ अ० ११ ख० )

इति च वैश्वानरात्मविज्ञानोपदेशस्योपक्रमे संप्रतीतिश्रवणात्तत्काल एव प्राधान्यं तस्य क्षत्रियस्य सिद्धयति। वैश्वानरात्मोपदेशश्च तस्मिन्प्रकरणे सर्वलोकसमष्टयात्मकस्य विराड्रूपस्य परमात्मन एवोपदेशः। स च 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' इत्यादिषु पुरुषसूक्तमन्त्रेषु संहितायामेव केन न श्रुतः। प्राक्तनश्च संहिताविर्भावो ब्राह्मणाविर्भावादिति नात्र कस्यचिदपि सचेतसो विमतिरुदियात्। यद्यपि संहितास्वपि अस्ति वैदेशिकानां विदुषां विप्रतिपत्तिः। ऋक्संहितैव प्राक्तनी, अर्वाचीनास्त्वितराः संहिताः, ऋक्संहितायामपि मण्डलविशेषा अर्वाक्तना इति तथापि सर्वासां सर्वत्र नामोपलम्भादिभिर्दृढैः प्रमाणैः सेयं प्रतिक्षिप्ता बहुभिर्विद्वद्भिरिति न तत्प्रपंचयितुमुत्सहे। ब्राह्मणाविर्भावात्तु सर्वासां संहितानामाविर्भावः प्राचीन एवेत्यकामैरपि सर्वैरेवोपगन्तव्यं स्यात्। कर्मविधिरूपत्वाद्ब्राह्मणानाम्, यजुरादिसंहिताभिर्विना च कर्मणः सर्वथानुपपाद्यमानत्वात्। संहितामूलाश्च विद्या ब्राह्मणेषूपनिषत्सु च। बृहदारण्यके हि [ ६ अ० २ ब्रा० ] पंचाग्निविद्यायाः स्फुटं मूलत्वेनोपन्यस्तो मन्त्रः—'अपि हि न ऋषेर्वचः श्रुतम् द्वे सृती अशृणवं पितॄणामित्यादि।

ततश्च संहिताकाले यासां विद्यानां पारदृश्वानो ब्राह्मणा अभूवंस्ता ब्राह्मणजात्यैव क्षत्रियजातेः सकाशाच्छिक्षिता इति क एतच्छ्रद्दध्यात्। यत्तु 'यथेयं न प्राक्त्वतः पुरा विद्या ब्राह्मणान् गच्छति' इत्याद्याख्यातं पंचाग्निविद्यासम्बन्धं 'विज्ञानं पूर्वम् तत्रेत्थमुक्तिसंभवः। अतिप्राचीने काले ब्राह्मणेषु क्षत्रियेषु च 'विज्ञान

मागमपि तत्तद्विज्ञानं कालक्रमयोगेन ब्राह्मणैः परित्यक्तं भवेत्, क्षत्रियैश्च सुरक्षितं भवेत्—ततो महता कालेन पुनरारुणिना गौतमेन जैबिलेस्तच्छिक्षितमिति क्षत्रियेभ्यो ब्राह्मणेषूपागाद्विद्येयम् विनश्यन्ति पुन प्रादुर्भवन्ति च कालक्रमेण विज्ञानानीति स्फुटं स्मर्यतेऽयमर्थस्तत्र तत्र—

'स कालेनेह महता योगो नष्टः परन्तप'। ( भगवद्गीता
भगवान् वासुदेव ),

'एतन्मे जन्म लोकेऽस्मिन् मुमुक्षूणां दुराशयात्।
प्रसंख्यानाय तत्त्वानां संमतायात्मदर्शने।
एष आत्मपथोऽव्यक्तो नष्टः कालेन भूयसा।
तं प्रवर्त्तयितुं देहमिमं विद्धि मया भृतम्।'

( श्रीभा० ३ स्क० २४ अ० ३७
भगवान् कपिलः )

अस्तु वा विकासवादरीतिमवलम्ब्य कश्चित्तद्विशेषः पारलौकिके विज्ञाने क्षत्रियैराविष्कृत इत्यभ्युपगमः। परं पारलौकिकस्य विज्ञानस्य सर्वस्यैवाध्यात्मविज्ञानस्य मूलमेव क्षत्रिया इति तु सर्वथोपपत्तिशून्यं वचः।

उपनिषत्कालेऽपि न खलु नाभूद् ब्राह्मणानां सर्वविज्ञानेषु प्राधान्यम्। श्रूयते हि संवर्गविद्याग्रहणाय जानश्रुतेः पौत्रायणस्य क्षत्रियस्य रैक्वाख्यब्राह्मणसमीपे गमनम्। ( छा० ४ अ० १ ख० ) श्वेतकेतुं चारुणेयं पितैव ब्राह्मणः प्राधान्येन ब्रह्म ग्राहयति ( छा० ६, १ पा० ) सनत्कुमारश्च भगवान् नारदं ब्रह्मोपदिशति। याज्ञवल्क्यस्य च भगवतोऽध्यात्मविद्यायां सर्वोत्कर्षः जनकाय राजर्षये ब्रह्मविद्योपदेशश्च श्रूयते बृहदारण्यक एव। जैबलिश्चैव स्वयं ब्रवीति शिलकं शालावत्यं चैकितायनं दाल्भ्यं च—भगवन्तावग्रे वदताम् ब्राह्मणयोर्वदतोर्वाचं श्रोष्यामीति' [छान्दो० १।८] अजातशत्रुश्च काश्यो दृप्तबालाकिं गार्ग्यं ब्रह्मोपदिशन्नपि ब्रवीति 'प्रतिलोम वै तद्यद् ब्राह्मणः क्षत्रियमुपेयाद् ब्रह्म मे वक्ष्यतीति व्येव त्वा ज्ञपयिष्यामीति' [बृह० २ अ० १ ब्रा०] तेन तेन ब्राह्मणेष्वेवाचार्यत्वं प्रतिष्ठितमासीदिति स्फुटमवगम्यते। 'आचार्याद्धैव विद्याविदिता साधिष्ठं प्रापयतीति' च स्पष्टं सत्यकामाख्यायिकायां कामलाख्यायिकायां च [ छान्दो० ४ अ० ] तेन ब्राह्मणानां कर्माडम्बरात् खिन्नैः क्षत्रियैराविष्कृतमध्यात्मं विज्ञानमिति सर्वथा निःसारतरमिदं केषांचिद्वचः—

'इदं मे ब्रह्म च क्षत्र चोभे श्रियमश्नुताम्'

इति भगवतो वेदपुरुषस्यानुशासनात्तु सर्वथानुकूल्येन परस्परानुग्रहरूपा ब्राह्मणक्षत्रिययोरासीद्वृत्तिरित्येव साधीयः प्रतिपद्यामहे शास्त्रेभ्यः। राजर्षयो ब्रह्मर्षयश्च परस्परमुपदिशन्ति स्म, परस्परं साहायकमाचरन्ति स्मेत्येवं दृश्यते सर्वत्र पर्यालोचनया।

आस्ताम्—प्रकृतमनुसरामः। तदित्थं संहितासु सूत्ररूपेण दृश्यते दार्शनिकमिदं विज्ञानम्। उपनिषत्स्विव विस्तरेण यन्नाम्नायते विज्ञानमिदं संहितासु—तत्र हेतुस्तु प्रकरणभेद एव विस्तरेण समर्थितो वेदधर्मव्याख्याने श्रीगुरुपादैः। त्रिविधं भवति विज्ञानमाध्यात्मिकमाधिभौतिकमाधिदैविकं च। तत्र शिक्षमाणेन तावदाधिदैविकमाधिभौतिकं च तत्त्वमधिगन्तव्यमिति संहितासु तदेव प्राधान्येनाम्नायते। संक्षेपतस्तु क्वचिदाध्यात्मिकं प्रसंगात्। तयोर्विज्ञानयोः परिपक्वमतीनामनुग्रहायोपनिषत्सु चाध्यात्मतत्त्वं विस्तार्यते। किं च कर्मोपासनाज्ञानाख्यं काण्डत्रयमपि सूत्ररूपेणैव संहितासूपलभामहे—कर्मविधयोऽपि संक्षेपेणैव तत्र सूत्रिता ब्राह्मणेन प्रपंच्यन्ते, आरण्यकेनोपासनाः, उपनिषद्भिश्च तत्वज्ञानम्। अन्या अपि विद्याः संचिता एव सूत्ररूपेण समुपलभ्येरन् संहितासु। तत्रापि नास्माकं सर्वथा प्राधान्येन विकासवाद एव पक्षपातः क्रमेणाविर्भूतः क्रमेणैव विस्तृतं प्रकटीभूतं विज्ञानमिति। अपि तु कदाचिद्विकासः कदाचित्संकोचस्तस्य तस्य विज्ञानस्य कालक्रमेणोपजायते। तथा च क्रमिकोपजायमानबुद्धिमान्द्यहेतुकोऽयं प्रागुक्तो विस्तारः समर्थित आचार्यः यास्कादिभिर्निरुक्तादिषु। पूर्वं हि प्रखरतरबुद्धयः संक्षेपतः सकेतमात्रेण तानि तानि विज्ञानानि प्रतिपाद्यन्ते स्मेति मन्त्रा एवाभूवंस्तेषामुपदेशाय पर्याप्ताः। परतः क्रमेण बुद्धिमान्द्येऽधिकमधिक विस्तारोऽक्रियापेक्षितेति ब्राह्मणानि वेदांगानि सूत्राणि भाष्याणि निबन्धाश्चोत्तरोत्तरं विस्तृता प्रादुरभूवंश्च भवन्ति च। यावन्निर्दिष्टं तावदेवासीद्विज्ञानं संहिताकाले-इति नैव समीक्षकैर्निष्पक्षपातिभिः शक्यमप्युपगन्तुम्। विज्ञानगाम्भीर्यमन्तरेण तावदर्थनिर्देशस्य सर्वथाऽसंभाव्यमानत्वात्। दृश्यते हि यो यदर्थस्यावारपारीणो भवति स एव तमर्थं संक्षेपतः शक्नोति निर्देष्टुम्। अल्पज्ञानां तु निर्देशो विपर्यस्तः सन्दिग्धो मर्मास्पृग्वा भवेत्। न चैवंवेदे विद्यानां निर्देशः। तस्माधिकारिभेदाद्विनेयबुद्धिमनुरुध्यैव वा मन्त्रेषु संक्षिप्तोक्तस्य ब्राह्मणादिनिबन्धान्तरेषु विस्तरः क्रियत इति युक्तं वचः। तत्र ब्राह्मणानि मन्त्रवदेवापौरुषेयाणीत्यास्तिकानां श्रद्धावतां दृष्टिः। यथैव जगदीश्वरेण निर्व्याजकरुणावता लोकानुग्रहाय मन्त्रा महर्षीणां ब्राह्मणरूपेणापि तेनैवाविर्भाविवितास्ते तेऽर्थाः क्रमेण। अपरे तूभयात्मकस्यापि वेदस्यापौरुषेयतामेवावलम्बन्त इति नैवां दृष्टौ

नास्त्येव काचन क्षतिः । ब्राह्मणैकदेशभूतासु चोपनिषत्सु विजृम्भत एव विस्तरेण दार्शनिकं विज्ञानम् ।

यानि किलाद्यत्वे प्रचरन्ति दर्शनानि, तेषां सर्वेषामपि मूलसूत्रमुपनिषत्सूपलभामहे । अन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयाः पंचकोशास्तैत्तरीयोपनिषदादिषु व्याख्याता एव पंचभिश्चार्वाकबौद्धार्हत वैशेषिकसांख्यैरात्मत्वेनाभ्युपगम्य क्रमेण विनेयानां बुद्धावुपरोहाय प्रपंच्यन्ते-इति स्वीकृतं तत्र तत्राचार्यैः । तत्तद्दर्शनजीवातुभूतानि चोपनिषदां वाक्यानि वेदान्तनिबन्धेषु प्रायेणोद्धृतान्येव निबन्धृभिरिति विस्तरभीतैरस्माभिस्तत उपरम्यत एव । अत एव तु प्राचीनतमेष्वपि रामायणादिग्रन्थेषु बौद्धादिमतोपन्यासो नानुपपत्त्या ग्रस्यते, तत्तन्मूलभूतानां मतानामनादिप्रायत्वात् । तदित्थं संहिताप्रकाशकाल एव दार्शनिकविज्ञानस्याविर्भावकालः, उपनिषत्कालश्चास्मदृशां स एवास्तु-अन्येषां ततोऽर्वाचीनोऽस्तु वा-स एष दार्शनिकविज्ञानस्य विस्तारकालः । द्वयस्याप्यस्य कालस्येदमित्थंभावेन निर्णयो न केवलमिदानीन्तनानां दुष्करः, अपि त्वसम्भूतप्राय एव । न हि तात्कालिकं क्वचिदपि भाषास्वन्यत्साहित्यमुपलभ्यते, नापि वान्यानि साधनान्येवंविधानि येन निर्णीयेत स कालः । पाश्चात्यैर्विद्वद्भिरत्र निर्णये प्रवृत्तैः कथं पदे पदे स्खलितम्, कथ च क्रमेण भूयोभूय उररीकृता भ्रान्तिरात्मीयेति नापरोक्षं तद्विदुषाम् । तस्यास्य निर्णयो यदि शक्येत कर्त्तुम्-तर्हि पुराणश्रद्धालुभिरेव युग-मन्वन्तर-कल्पादिप्रसंख्यानेन शक्यः, नान्यः पन्था विद्यते इति उपपत्तिरसिकानां कृते मौनावलम्बनमेव तत्र श्रेयः ।

अथ क्रमेण बुद्धिमान्द्याद् दुरवगाहतामापन्ने वैदिके विज्ञाने परमकृपालुभिर्मुनिभिः सूत्रग्रन्थप्रणयने व्याक्रियत संनाहः तान्येतानीदानीं सूत्रामति संक्षिप्तार्थान्यपि तदात्वेऽर्थविस्तारायैवासन्-इति विचारयद्भिः सर्वैरेवाभ्युपगम्येत । इदन्त्वनुमीयते-यान्येतानि समयेऽस्मिन्नधिगम्यन्ते सूत्राणि दर्शनानाम्, तेभ्यः पूर्वमपि आसन्नन्यानि सूत्राणि । स्मरन्ति हि हिरण्यगर्भादीनां योगाचार्यत्वं योगनिष्णाताः । यानि च हस्तगतानि नः सांख्यसूत्राणि नैतान्यादिविदुषा कपिलेन संप्रोक्तानि शक्नुवन्ति भवितुम् । कपिलो हि भगवानादिविद्वान्, नारायणावतारस्य यस्योद्भवः स्वायम्भुव एवान्तर आख्यातः श्रीभागवते । तदेतत्सांख्यं दर्शनमादिमं सर्वदर्शनानाम् । प्रचलिते तु सांख्यदर्शने 'न वयं षट्पदार्थवादिनो वैशेषिकादिवत्' इत्यादिना दर्शनान्तरीयमतं स्पष्टमनूद्य खण्डितम् । अवोचाम यद्यपि अनाद्येव सर्वदर्शनानां मूलमिति । अथापि मूलमात्रमर्हति भवितुमनादि । षट्पदार्थवादो वैशेषिकाख्येत्यादयस्तु

कणादोपज्ञान्येव मन्तव्याः। यथा हि विज्ञानात्मवादोयमनादिः, विज्ञानात्मवादं क्षणिकवादं च यदि खण्डयन्ति दर्शनानि नैतावता तानि भगवतो बुद्धादर्वाक्तनानि शक्यानि प्रतिपत्तुम्। बौद्धानां पारिभाषिकाणि अपोहालयप्रवृत्त्यादिपदानि तल्लक्षणानि सौत्रान्तिकवैभाषिकादितदाख्याश्च येऽनुवदन्ति भाष्यकाराद्यास्ते कथं न भवेयुरर्वाक्तना बौद्धमतप्रचारात्। एवं ह्यनादिताभ्युपगमेऽपि इतिहासनिर्णयो भवेत्। इह तु सांख्यसूत्रेषु 'विजातीयस्वीकारे असम्भव एवेतिहासनिर्णयो भवेत्। इह तु सांख्यसूत्रेषु 'विजातीयद्वैतापत्तिरन्यधर्मत्वे' इत्यादिना भगवतः शंकराचार्यादर्वाक्प्राप्तप्रचाराणि सजातीयविजातीयद्वैतादीन्यप्यनूद्यन्ते। विस्तरेण च निराक्रियते मायावादः। न केवलं दार्शनिकानां मतान्येव, आख्यायिकाप्रकरणे अजादीनां राज्ञां नामादि तत्रोल्लिख्यत एव। तेऽपि प्रवाहरूपेणानादय इति तु श्रद्धामात्रमनैवं सतीतिहासनिर्णयः कथमपि घटेत। न चाज्ञातमितिहासं दृष्टान्तत्वेनोपाददते परीक्षकाः 'लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यम्' स एष हि दृष्टान्तः। तस्मादर्वाक्तनान्येव सांख्यसूत्राण्येतानि। अत एव तु चूर्णपेषं पिषन्नपि कापिलं मतं भगवान् शंकराचार्यो न क्वचिदपि सूत्राण्युदाहरति। कारिका एव तु तत्र तत्रोल्लिखति। सूत्रभाष्यकृद्विज्ञानभिक्षुर्वैपरीत्येन कारिकास्तत्र तत्र प्रमाणयतीति कारिकाणामेव मुख्यं प्रामाण्यं प्राचामिष्टमनुमीयते। तेन सिद्धे प्रचलितानां सूत्राणामाधुनिकत्वे कपिलेनादिविदुषा प्रोक्तानि सूत्राणि लुप्तान्येवेति किमन्यदेतदभ्युपगमाच्छरणम। तत्वसमासाख्यानि संक्षिप्तानि सूत्राण्येव कपिलस्येत्यभ्युपगमेऽपि विस्तृतं भाष्यं पंचशिखाचार्यस्य सर्वथा दृश्यमानं लुप्तमेव यत्किल वाचस्पतिनाप्युदाहृतं क्वचित्प्रसंगे। इत्थमेव—

पंचम कपिलो नाम सिद्धेशः कालविप्लुतम्।
प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम्॥
षष्ठमत्रेरपत्यत्वं वृतः प्राप्तोऽनसूयया।
आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान्॥

इति श्रीमद्भागवते अत्रेरपत्यस्य नारायणावतारस्य दत्तात्रेयस्य आन्वीक्षिकीप्रवर्त्तकत्वमाख्यातम्। न हि सान्वीक्षिकी क्वाप्युपलभ्यत इदानीम्—गौतमोपज्ञमेव तु सेदानीं प्राप्यतेऽस्माभिः। न हि केवलं दर्शनेष्वेव—वेदांगेष्वपीयमेव दशा—न ह्यष्टौ व्याकरणानि, विविधानि ज्यौतिषाणि वा कस्यापि भाग्यशीलस्य दर्शनविषयतामद्यत्व उपयान्ति। यानि तु कानिचिच्छाकटायनादीन्युपलभ्यन्त इदानीं व्याकरणानि, न तानि पाणिनेः प्राक्तनानि कथमपि

भवितुमर्हन्ति, पाणिनिकात्यायनयोरुक्तिं संक्षिप्य तत्र सूत्रनिर्माणदर्शनात्। सूत्रनिर्माण शैल्याऽन्यथान्यथापि च सम्यक् साधयितुं शक्योऽयमर्थ इति नेह तदप्रकान्तं विस्तारयिष्यामि। तदित्थं मध्येप्यभूद्विद्यानामासां विस्तारः न तु तन्निर्णयः कथमपि शक्यसाधनोऽस्माभिः, ग्रन्थानामेवानुपलब्धेस्तत्कालनिर्णयस्य दूरापेतत्वात्।

अथेदानीं प्रचलितानां सूत्राणामपि कालनिर्णय इदमित्थंभावेन सर्वथा दुःशक एव। तथापि यदत्र पराक्रान्तं बहुभिः कृतविद्यस्तदवलम्ब्य किंचिद्वक्ष्यामि। एष प्रायेणोपपत्तिदृढः सूत्रविषयभाषादिपर्यालोचनामूलो बहूनां विदुषां सिद्धान्तः यत्प्राक्तनानि वैशेषिकाणि सूत्राणि, ततोऽर्वाक् तु तत्सिद्धान्तव्याख्यानाय प्रवृत्तानि गौतमीयानि न्यायसूत्राणि। योगसूत्राणि तु ततोऽसम्बद्धानि तद्विषयानुवादादिविरहात्सम्यङ् निश्चेतुमशक्यान्यपि प्रायेण ततो द्वयादपि प्राचीनान्येव स्युः। तथैव सांख्यकारिका अपि कदा आविर्भूता इति दुःशकमत्र किमपि वक्तुम्, किन्तु सूत्रकालादर्वागेवासां कालोऽनुमातुं शक्योऽनुमानकुशलैः। वर्त्तते यद्यपि सांख्यदर्शनस्यैव सर्वतः प्राथम्यम्-परमिदानीमुपलब्धिपथप्राप्तानि सर्वतोऽर्वाक्तनानि सांख्यसूत्राणीति पुर एव प्रत्यपीपदम्।

योगवैशेषिकन्यायसूत्रेभ्यश्चार्वाक्तनो वेदान्तसूत्राणां कालः। तत्र सर्वेषामनुवादपूर्वकं निराकरणदर्शनात्। तत्समकालिकी च पूर्वमीमांसापि, परस्परं पूर्वोत्तरमीमांसयोर्जैमिनिव्यासनामोल्लेखदर्शनात्।

अयं चैषां पूर्वापरभावो न बहुकालव्याप्तः, अपित्वारब्धे दर्शनान्दोलने प्रायेण युगपदेव सर्वाणि प्रादुरभवन् सूत्राणि। लौकिकोपपत्तिपुरःसरो विचार एवैषां नवीनः कल्पः। दर्शनशब्दश्च सूत्रेष्वेव गतो निरूढिम्। तथा चैतानि प्रायेण भगवता व्यासेन समानकालिकान्येवेति पंचसाहस्री व्यतीयाय वर्षाणामेतत्प्रादुर्भावस्य। पुराणादिषु च मतनिरूपणेन नाम ग्रहणेन परस्परविरोधपरिहारादिना च दृश्यत एषां दर्शनानामान्दोलनम्—महाभारते तावद्विद्यानिरूपणप्रस्तावे—[ महा० शा० प० २१२ अ० ]

युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ॥ ३१ ॥
नियोगाद् ब्रह्मणो विप्रा लोकतन्त्रप्रवर्त्तकाः।
वेदविद्भगवान् ब्रह्मा वेदांगानि बृहस्पतिः ॥

भार्गवो नीतिशास्त्रन्तु जगाद जगतो हितम् ।
गान्धर्वं नारदो वेद भरद्वाजो धनुर्ग्रहम् ॥
देवर्षिचरितं गर्गो कृष्णात्रेयश्चिकित्सितम् ।
न्यायतन्त्रं हि कात्स्न्र्येन गौतमो वेद तत्त्वतः ।
वेदान्तकर्मयोगं च वेदविद् ब्रह्मविद्विभुः ।
द्वैपायनो निजग्राह शिल्पशास्त्रं भृगुः पुनः ॥
न्यायतन्त्राण्यनेकानि तैस्तैरुक्तानि वादिभिः ।
हेत्वागमसदाचारैर्यदुक्तं तदुपास्यते ॥

इति कतिचिद्दर्शनानामर्थपुरःसरं कृतो नामाल्लेखः, अन्यानि च न्यायतन्त्राण्यनेकानीति' सामान्येनोक्तानि ।

श्रीभागवते चोद्धवकृष्णसंवादे—[ ११ स्क० २२ अ० ]

कति तत्त्वानि विश्वेश संख्यातान्यृषिभिः प्रभो ।
नवैकादश पंच त्रीण्यात्थं त्वमिह शुश्रुम ॥
केचित् षड्विंशतिं प्राहुरपरे पंचविंशतिम् ।
सप्तैके नव षट् केचिच्चत्वार्येकादशापरे ॥
केचित्सप्तदश प्राहुः षोडशैके त्रयोदश ।
एतावत्त्व हि संख्यानामृषयो यद्विवक्षया ॥
गायन्ति पृथगायुष्मानिदं नो वक्तुमर्हसि ।

इह तत्त्वसंख्यानां विविधा भेदाः प्रदर्शिताः । यद्यपि तत्प्रतिपादने प्रतीयते नात्र सप्तपदार्थादिवादौ वैशेषिकादीनाम्—सांख्यस्यैव त्ववान्तराः प्रभेदा इमे । समाहितश्च तत्रैषां मतभेदः । अथापि विविधदर्शनप्रसक्त्या सप्तत्वादिसंख्यया च वैशेषिकादयोऽपि स्मार्यन्त एव ।

सात्विकं तत्र वेदान्तं मीमांसा राजसं स्मृतम् ।
तामसं न्यायशास्त्रं च हेतुवादाभियन्त्रितम् ॥
[ देवी भा० १।१।१४ ]

इत्यादावपि दृश्यते दर्शननामोल्लेखः । सर्वदर्शनेभ्योऽर्वाक्तनं च वेदान्तदर्शनमपि पुराणेषु तत्र २ वर्णितम् ।

'ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः'
( गीता )

जीवेश्वरब्रह्मभेदो निरस्तः सूत्रनिर्णये ।
( वायु० उत्त० ख० ४२ अ० )

इत्यादौ, तर्हि कान्येषां दर्शनानां कथा। तानि तु सुतरां पुरातनानि पुराणेभ्यः।

अथ वायवीये महापुराणे (पू० ख० ३२ अ०) विलोक्यते स्फुटं व्याससाहचर्यं गौतमकणादयोः ( शिवस्येदं वाक्यम् )

सप्तविंशतिमे प्राप्ते परिवर्त्ते क्रमागते
जातूकर्ण्यो यदा व्यासो भविष्यति तपोधनः
तदाप्यहं भविष्यामि सोमशर्मा द्विजोत्तमः
प्रभासतीर्थमासाद्य योगात्मा लोकविश्रुतः
तत्रापि मम ते पुत्रा भविष्यन्ति तपोधनाः
अक्षपादः कणादश्च उलूको वत्स एव च।
[ मत्स्यपुराणेऽप्यस्ति ( ४८ अ० ) गौतमकथा ]

सर्वैरेतैः प्रमाणैर्भगवता व्यासेन समानकालिकत्वमेव दर्शनसूत्रकृतां सिद्ध्यति। तेन पंचसाहस्त्र्याः पूर्वमब्दानां दर्शनप्रादुर्भावोऽवगन्तव्यः।

अथ भाष्याणि तु भगवतो बुद्धादर्वाक्तनानीति मे बुद्धिः। महाभारतादर्वाक् पुनरपि अवनतिं प्राप दर्शनविज्ञानम्। बुद्धस्य भगवतः काले तु पुनरस्याभवत्प्रवृत्तिः—तस्मिन्नेव काले जैनदर्शनस्य समुन्मेषः। तदैव बौद्धं मतं निराकर्तुं प्रवृत्तास्तत्तद्दर्शनभाष्यकाराः। तत्र लेखपरिपाट्या प्रायेणेदं निश्चीयते—भाष्येषु वात्स्यायनीयं न्यायदर्शनभाष्यम् पुरातनं प्रतीयते। एतद्धि चन्द्रगुप्तमन्त्रिणा प्रसिद्धेन चाणाक्येनैव प्रणीतमिति केषांचिद्बुद्धिः। पक्षिलश्चाणक्यो विष्णुगुप्तो वात्स्यायन इत्येकस्यैव नामानि उक्तानि त्रिकाण्डमण्डनादौ। मन्मतावेतत्स्वीकारे न कापि क्षतिः। उद्योतकरस्तु तद्वार्त्तिककारो विक्रमार्कसमकालिकः। तदर्वागेव भवेच्छबरस्वामिकृतं मीमांसाभाष्यम्। योगभाष्यविषये न सम्यगवधारयितुं पार्यते, व्यासनाम्ना तत्प्रसिद्ध्यति, किन्तु सूत्रकाले भाष्यनिर्माणं प्रायेण नैव बुद्धावुपारोहति, इदन्तु स्पष्टं यदुपलभ्यमानेषु दर्शनभाष्येषु सर्वतः पुरातनं योगभाष्यमेव। पुरातनतया संभाव्यमानेन वात्स्यायनभाष्येण विरुद्धहेत्वाभासोदाहरणे योगभाष्यमतम्—'सोऽयं विकारोऽव्यक्तेरपैति' इत्यादिना अनूद्याभाषितम्। तेन स्फुटं योगभाष्यस्य ततोऽपि प्राचीनता सिद्ध्यति। सांख्यभाष्यं तु विज्ञानभिक्षोर्भगवतः शंकरादर्वाक्तनमिति न तत्र कोऽपि संशयः। स हि महाभागः पूर्वमद्वैतवादपरायणः पण्डित एव आसीत्। केनचिद् द्वैतवादिना विदुषा सपणबन्धे शास्त्रार्थे निर्जितस्तत्प्रभृत्येव द्वैतवादं जग्राहेति प्रसिद्धिः। यद्भवतु, सांख्यशास्त्रस्य

ज्ञानन्त्वस्याल्पतरमिति तद्भाष्यादेव स्फुटं प्रतीयते । तेन हि सत्वादिगुणानां
द्रव्यरूपता स्वीये भाष्ये स्पष्टमुक्ता । यदि द्रव्यरूपाण्येव सत्वादीनि लघूनि
तेषांच समवायेनैव सर्वे पदार्था उत्पद्यन्ते, तर्हिवैशेषिकापेक्षयाऽस्माकं को
विशेष इति शंकित्वा वैशेषिकाः परमाणुषु रूपरसादीन् गुणान् मन्यन्ते,
वयं तु सत्वादिषु रूपरसादीन् नाभ्युपगच्छामः इत्येव विशेषं व्याख्यात-
वान् । अहो सांख्यदर्शनभाष्यमपि कुर्वन् स आरम्भपरिणामवादयोर्भेदमपि
न सुस्फुटं जानीतिस्मेति महदिदमाश्चर्यस्थानम् । लघुनोद्रव्यान्महदुत्पत्ति-
रित्यारम्भवादः, एकस्या अवस्थाया अवस्थान्तर प्राप्तिः परिणामवादः ।
तदिदमवस्थान्तरं क्वचित्स्थूलं क्वचित्सूक्ष्ममपि वा भवतीति सूक्ष्मादेवस्थूलो-
त्पत्तिरिति नायं नियमः परिणमवादे । सत्वादिगुणाश्चेमे न द्रव्यरूपा
अपितु क्रियारूपाः, तस्या अपि पूर्वावस्था मूलशक्तिरूपा । बलं शक्तिः
क्रियेत्येक एवार्थः । प्रसुतावस्थायां यद्बलमुच्यते तदेव कुर्वद्रूपतां
गृह्णच्छक्तिर्भवति तदेवच क्रियारूपतामासाद्य विलयं यातीति क्रम एष
ब्रह्मसिद्धान्ते स्फुटं प्रतिपादितः । वस्तुतस्तु द्रव्यं गुणः कर्मेति पृथग्-
भूताः पदार्था वैशेषिकप्रक्रियायामेवाभ्युपगम्यन्ते । सांख्यादौ तु क्रियैव
धारावाहिकतां गता गुणपदेन, गुणसमष्टिरेव च द्रव्यपदेन व्यवह्रियते इति
नास्त्येषामत्यन्तो भेदः । स्फुटत्वसंयोगविभागपृथक्त्वादिषु क्रियाया एव
धारावाहिकत्वमनुभूयते । सूक्ष्मविचारेण रूपरसादिषु तथैव प्रतीयते इति
नात्र विस्तरभयाद्विवरीतुमिच्छामः ।

सांख्यदर्शने सत्वरजस्तमसां प्रकृतिरूपाणां गुणानां यद्विवरणं दृश्यते
तदपि तेषां क्रियारूपतामेवाभिव्यनक्ति । गुणशब्दोऽत्र न वैशेषिकाभिमत-
परिभाषितगुणबोधकः अपि तु लोके गुणशब्दस्य।प्रधान इति रज्जुरिति
चार्थद्वयं प्रसिध्यति, तदभिप्रायक एव । सत्वाद्या हि पुरुषस्यैव भोगापवर्ग-
साधकाः नतु स्वार्थे प्रवृत्ता इति पुरुषं प्रति गुणीभूतत्वाद् गुणा आख्याताः ।
यद्वा पुरुषस्य बन्धनार्थं रज्जुरूपाबुद्धिः, सेयमेभिर्गुणैरेव सृज्यत इति रज्जु-
रूपतयापि रूपकेण व्याख्यातुं शक्यत इति सर्वमेतत्तत्वकौमुद्यां श्रीवाचस्पति
मिश्रैः स्पष्टीकृतम् । तत्र—

'प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।
अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥
'सत्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।
गुरुवरणकमेव तमः प्रदीपवच्चार्थतोवृत्तिः ॥

इति हि गुणानां विवरणं सांख्यकारिकायामुपलभ्यते। प्रकाश रूपं सत्वम्, प्रवृत्तिरूपं रजः, आवरकं च तम इति। गुणस्वरूप निर्देशोऽत्र कृतः। प्रकाशप्रवृत्तिनियमा अर्थः प्रयोजनं येषामिति व्युत्पत्तेः। प्रयोजनतां चैषां पुरुषस्य भोगापवर्गार्थतया वदन्तीति साख्यानां परिभाषा। तत्र प्रवृत्तिरूपस्य रजसः क्रियारूपतानुक्तापि सिद्धैव, प्रवृत्तिक्रियाशब्दयोरैकार्थ्यात्। प्रवर्त्यतेऽनेनेति व्युत्पत्या क्रियासाधनत्वमस्येति यदि कश्चिद् विवृणुयात्, तद्वारणाय 'चलं चरजः' इति चलनरूपता द्वितीयकारिकायां तस्य स्फुटीकृता। उपष्टम्भकपदमपि श्रीवाचस्पति मिश्रैस्तत्व कौमुद्यामेवं व्याख्यातम्—सत्वतमसी स्वयमक्रियतया स्वकार्यप्रवृत्तिं प्रत्यवसीदन्ती रजसावष्टभ्येते अवसादात् प्रच्याव्य स्वकार्य उत्साहप्रयत्नं कार्येते इति। तस्यायमाशयः—क्रिया हि नाम परत्रैव संक्रान्तावभासते। तत् स्वयं चलन रूपं रजः सत्वतमसोरप्युपसंक्रम्य ते अपि चालयति—परिणत्या स्वकार्ये प्रवर्तयतीति तदुपष्टम्भकमुच्यते। एवमेव सत्वस्य प्रकाशरूपता प्रकाशकताचेत्युभयम्, तमस आवरणरूपता, आवरकताचेत्युभयं च व्याख्येयम्। स्वयं प्रकाशः अन्यत्रोपसंक्रान्तस्तु अन्यस्य प्रकाशक इति, स्वयमावरण परस्यत्वावरकमित्युपपत्तिसभवात्। अतएव दीपःप्रकाशते, दीपः प्रकाशयति, सविता प्रकाशते, सविता प्रकाशयतीति द्वयमप्युपपद्यते। क्रियायाः पूर्वावस्था च शक्तिरूपैव, ततः प्रकाशत इति शक्तिरेव प्रतीयत इत्यालोच्यम्। ये तु प्रकाशते इति तिङर्थतया तत्रापि व्यापारः प्रतीयत एवेत्याग्रहणीयुः तैरेवमालोच्यम्, परप्रकाशनं तु प्रकाशयतीति णिचाभिधीयते तर्हि दीपे सूर्ये वा स्वावस्थित्यतिरिक्तः को नामास्ति स्वप्रकाशानुकूलो व्यापारो यः सविता प्रकाशत इत्यादावभिधेयः स्यात्। अवस्थितिस्तु सत्तारूपा स्वरूपानतिरिक्ता शक्तिरेव। चक्षुर्विषयीभवनमितिचेच्चक्षुर्व्यापार एषः, न तु सूर्यस्य दीपस्य वा कोऽपि व्यापारः विषयीकरणंचक्षुषः विषयीभवनं तु दीपादेरित्यपिवाङ्मात्रम्। विषयीकरणातिरिक्तस्य विषयीभवनरूपस्य कस्यापि व्यापारस्य दर्शयितुमशक्यत्वात्। अवस्थितिरेवोपचारेण व्यापाररूपतया तिङर्थनिर्वाहाय कल्प्यत इति चेत् कामं कल्प्यताम्। वस्तुतस्तु शक्तिरेव तत्राभिधेयेति प्रकाशशक्तिरूपतैव सत्वस्य फलति। इदं च ईक्षत्यधिकरणे भाष्यकृद्भिराचार्यपादैरपि सूचितम् 'असत्यपि कर्मणि सविता प्रकाशते' इतिव्यपदेशदर्शनात्, सवितृ प्रकाशवत् ब्रह्मणोज्ञानस्वरूपनित्यत्वे ज्ञानसाधनापेक्षानुपपत्तेः' इत्यादिना। अत्रहि दृष्टान्तविधया सवितुः प्रकाशस्वरूपतोक्तेति स्वरूपभूतशक्तिरूपः प्रकाश इत्येवोक्तं

भवतीति । प्रकाशक्रियावरणरूपतयैव गुणानां शुक्लरक्तकृष्णरूपताप्येषाम् 'अजामेकां लोहितशुक्लकृष्णाम्' इति श्रुतौ बहुत्र पुराणादिषु चोपचरिता-प्युपपद्यते । सत्वरूपस्य प्रकाशस्य शुक्लतया, तमस आवरकस्य कृष्णतया मध्ये स्थितस्य संघर्ष रूपस्यच रजसो रक्ततया तदाकारस्यांजस्येनोपपत्तेः । 'प्रकाश क्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्' ( योगसू० २।१८ ) इति योगसूत्रे तु क्रिया शब्द एव रजः स्वरूप बोधनाय स्पष्टमुपात्तः । क्रिया-स्थितिशीलमिति तु चैतन्यस्वभावः पुरुष इत्यादिर्वाद्विकल्पज्ञानाश्रयो निर्देशः, क्रियादिकं शीलं स्वभावो यस्येत्युक्त्या क्रियास्वभावस्य क्रियात्वमुक्तं भवतीति। अस्तु वा क्रियास्वभावपदेन क्रियायाः पूर्वावस्थारूपा शक्तिः, तत्रापि नास्माकं विरोधः । बलशक्तिक्रियाणामेकरूपताया उपपादितत्वात् । सत्वमपि प्रकाश-रूपतयाऽव्याख्याताक्रियैव । अभिव्यंजनरूपा क्रियैव हि प्रकाशशब्देनाख्या-यते । तच्चाभिव्यंजनं स्वस्य परस्य वेत्युभयमप्यत्रान्तर्भवति । प्रकृतिस्वरूपा-न्तर्गतस्य प्रकाशस्य हीदं तत्वम् । ज्ञानापरपर्यायप्रकाशरूपः पुरुष एव प्रवृत्तौ स्वप्रतिबिम्बात् ज्ञानरूपो भवतीति । यावच्च क्रियानुल्वणा भवति तदीया-धारा नाधिकवेगवती भवति—तावत्सा ज्ञानरूपं मूलं तत्वं नावृणोतीति तत्र ज्ञानस्वरूपं प्रकाशते—मन्दमन्दक्रियावति सरसीव सूर्यादिप्रतिबिम्बम् । किंचिच्चाल्यमान आदर्श इव च मुखादिप्रतिबिम्बम् । उल्वणायान्तु क्रियायां वेगवत्यां तन्न प्रकाशत इति सत्त्वस्य लघुत्वं प्रकाशरूपता चोच्यते, पुरुष प्रतिबिम्बेन सत्त्वमपि प्रकाशरूपतां गतमिति । सत्वस्यैव परिणतिवृत्तिरूपं ज्ञानमिति स्पष्टं वेदान्त ग्रन्थेषु । वेगाभावरूपमेव लघुत्वम् । गुरुत्वं हि नामाकर्षणक्रियाग्रहणयोग्यता । आकर्षणपरिणतिरेव पतनमिति स्पष्टमुक्तं ज्योतिर्विदामग्रेसरैः श्रीभास्कराचार्यैः सिद्धान्तशिरोमणौ—

आकृष्टिशक्तिश्च मही तया यत्
खस्थं गुरु स्वाभिमुखं स्वशक्त्या
आकृष्यते तत्पततीव भाति
समे समन्तात् क्व पतत्वियं खे । इति

निराधारा पृथिवीयमनुक्षणं नीचैः पततीति बौद्धानां खण्डनमत्र श्रीभास्क-राचार्यैः कृतम् । तत्रेयमुक्तिः प्रदर्शिता—यत्पतनं नाम न कस्यापि वस्तुनः स्वाभाविकी क्रिया अपितु आकर्षणजन्या । उपरि प्रक्षिप्तं लोष्टादि चेतुर्हस्ते-नोत्पादितायाः क्रियायाः समाप्तौ पृथिवीगतया आकर्षणशक्त्या आकृष्यमाणं पतद् दृश्यते नतुस्वभावतः । इदं च पृथिव्या आकर्षणं स्वसजातीये गुरुणि

द्रव्ये लोष्टादावेव कार्यं करोति, नतु लघुनि तृणादौ सूर्यचन्द्रकिरणादिषु वा। तस्याकर्षणग्रहणयोग्यता नास्तीति। चन्द्रतारादयश्च न पृथिव्याः सजातीयाः अपि तु तेजोरूपा इति न तत्रापि पृथिव्या आकर्षणं प्रसरति। पृथिव्यास्त्वाकर्षकं न किमपि सजातीयमिमां परितो विलोक्यते। इयं हि समन्तात् समे आकाशे स्थिता, आकाशे च नाकृष्टिशक्तिरिति क एनामाकर्षेत्, कुतश्च पतनमस्याः संभवेदिति तदभिप्रायः। शेषकूर्मादिकं तु पृथिव्या विधारकं नैतऽभ्युपगच्छन्ति तद्धि कूर्मवराहादिकं वैज्ञानिकं तत्त्वमिति नात्र लघुनिबन्धे तद्विवरणस्थानमस्ति। अत्र त्वेतावदेव वक्तव्यम्–यदाकर्षणग्रहणयोग्यतैवोक्तरीत्या गुरुत्वम्। तद्विरोधी च शक्तिविशेष एव लघुत्वमिति तदपि क्रियाया एव पूर्वावस्थारूपम्।

श्रीवाचस्पतिमिश्रैरपि कार्योद्गमने हेतुर्धर्मो लाघवम् गौरवप्रतिद्वन्द्वि, यतोऽग्नेरूर्ध्वगतिर्भवतीत्येव व्याख्यातम्। तमसो गुरुत्वमावरकत्वं च यदुक्तम्-तत्र गुरूत्वस्य क्रियारूपता व्याख्यातैव। आवरणमपि वैज्ञानिक दृष्ट्या क्रियारूपमेव। एकाहि प्रबला क्रिया यदा स्वसमानबलेन क्रियान्तरेण संघृष्यते, तदा द्वयोः क्रिययोर्विलोप इव दृश्यते। समबलेन पुरुषद्वयेन युगपद् विरुद्धयोर्दिशोः समाकृष्टा रज्जुर्नाणुमात्रमपि चलतीति प्रत्यक्षं दृश्यते। तत्र नेयं रज्जुरक्रियेति शक्यं वक्तुम् पुरुषद्वयेनासादिता हि क्रिया कथमेनां न चालयेत्। श्रमश्चाधिकाधिकः क्रमेण पुरुषद्वयेनाप्यनुभूयते–यदि न ताभ्यां क्रियोत्पादिता स्यात्, तर्हि कथं शक्तिक्षयरूपः श्रमस्ताभ्यामनुभूयेत। तस्मात् प्रतिक्षणं सा रज्जुः पूर्वदिगवस्थितेन पुरुषेणाकृष्टा पूर्वस्यामपि दिशि प्रसरति, तस्मिन्नेव क्षणे पश्चिमदिगवस्थितेन पुरुषान्तरेणाकृष्टा तावदेव पश्चिमस्यामपि दिशि प्रसरतीति युगपद् विरुद्धदिग्द्वयप्रसरणादेकत्रैव स्थिता दृश्यते, एवंविधस्थल एव प्रतिबध्यप्रतिबन्धकभावो लौकिकैर्नैयायिकैश्च व्यवह्रियते। वस्तुतो न तस्यां रज्जौ क्रियाया अभावः, अपितु विरुद्धदिग्गमनरूपा अत्युल्बणक्रिया। एवंविधमेव रजसोत्पादितायाः क्रियायाः क्रियान्तरेण तदुत्पादितेनैव नियमनं तम इत्युच्यते, अन्यथा 'सत्त्वतमसी अक्रिये' इत्यक्रियत्वेनोक्तस्य तमसः कथमावरकत्वं संभवेदिति सुसूक्ष्ममालोच्यतो सुधीभिः। तदित्थमत्युत्कटक्रियारूपं तमः, तच्चोक्तरीत्यैकदिग्गमनरूपं चलनमपि रजोरूपमावृणोति, अत्युत्कटक्रियायां प्रकाशोऽप्युक्तरीत्या न भासते तरंगमालाकुलिते समुद्रे चन्द्रतारादिप्रतिबिम्बमिवेति सत्त्वस्यावरकमिदमुभयोर्विरोधितया गण्यते। एवं चारम्भदशावच्छिन्ना क्रिया कुर्वद्रूपता-

न्नालम्बमानैव प्रथमक्षणावच्छिन्ना शक्तिर्वा सत्वम् । मध्यां दशामनुप्राप्ता अनुभवविषयतां गता सा रजः, अत्युत्कटतया परस्परोपघातेन विलीनेवानुभवपथादतिक्रान्ता आवृतेति व्यवह्रियमाणा तु तम इति एतस्या एव क्रियायास्तन्मूलभूतायाः शक्तेर्वा अवस्था विशेषा इमे सत्वादिगुणाः नत्वेकान्ततः पृथग्भूता इति सुनिपुणं भाव्यताम् ।

प्रकृतिपुरुषसंयोगे पुरुषप्रतिबिम्बभृतस्य प्रकाशस्य क्रमिकं ह्रासमभ्युपगत्येदं व्याख्यातम् । क्रमिकविकासरूपतां त्वभिलक्ष्येत्थमपि व्याख्यातुं शक्यते–यत् प्रलयकाले तमसा आवृते सत्वरजसी, सृष्ट्यारम्भे तयोः प्रकृतिक्षोभेण आवरणभंगो भवति । सोऽयं क्षोभः कुतो जायत इत्यत्र बहूनि मतानि, स्वभाव एवायं प्रकृतेर्गुणत्रयरूपायाः स्वरूपपरिणामाख्यः स्वापः, विरूपपरिणामाख्यं जागरणं च तदेतदुभयं गुणस्वाभाव्यादेव प्रवर्तते न तत्र कारणापेक्षेति सांख्यानामभ्युपगमः ।

परमपुरुषस्य भगवतः स्वातन्त्र्येणोद्भूता सिसृक्षा परिणतिं जनयतीति आगमिका मन्यन्ते संप्रदायाचार्याश्च । इयं सिसृक्षा न प्रकृतिपरिणतिरूपाया बुद्धेर्वृत्तिः, बुद्धेः प्रकृतिक्षोभात्परमुत्पत्स्यमानत्वात् । अपितु भगवत्यस्ति स्वातन्त्र्यरूपा शक्तिः, तस्यैव सा वृत्तिरिति । अतएव सिसृक्षारूपा भगवत इच्छा मूलशक्तेश्छायारूपतयैव निरूपिता आगमेषु न तु सा महामायाया मायायाः प्रकृतेर्वा परिणतिः यासां सर्वासामग्र उत्पत्स्यमानत्वात् । अपितु भगवति परमशिवे यत्स्वातन्त्र्यम्, सैव मुख्या शक्तिः, तस्या विकास इति तच्छायारूपैव इच्छाशक्तिः, तस्यां यः परमशिवस्य प्रतिबिम्बरूपेण प्रवेशः सैव ज्ञानशक्तिः । नित्यं ज्ञानं साक्षाद् भगवद्रूपम्–तस्यैवेच्छायां प्रतिबिम्बनम्, अर्थात् स्रष्टव्यपदार्थपर्यालोचनमिह प्रतिबिम्बरूपं ज्ञानम् । तज्ज्ञानशक्तिरूपेणेह व्याख्यायते–ज्ञाने इदमेतत् किमित्यादिविशेषणरूपेण प्रवेशः । अर्थात् तस्य ज्ञानस्य तत्तद्रूपेण स्फुरणन्तु क्रियाशक्तिरिति तिस्रोऽप्येता इच्छाज्ञानक्रियाशक्तयो मूलशक्तेरेव परिणतय आगमशास्त्रे व्याख्यायन्ते, महामायामायाद्यास्तुपरत उत्पद्यन्ते जगत्तत्वान्तर्गताः । इयमेव प्रक्रिया श्रीवल्लभाचार्यपादैः स्वीयशुद्धाद्वैतदर्शनेऽनुसृता । प्रकृतिक्षोभकारणेष्वियमेव बुद्धौ सम्यगुपारोहति, अन्ये तु वदन्ति–प्रकृतिपुरुषाविव कालोऽपि नित्यः, तत्प्रेरणया प्रकृतौ क्षोभ इति प्रपंचसारे इदमेवोक्तम् । विष्णुपुराणादावपि किंचित्प्रक्रियाभेदेनेत्थमेव विवृतम् । प्रलये सर्वेषां प्राणिनां पूर्वकर्मजनिताः संस्काराः, पूर्वज्ञानवासनाश्चापि प्रसुप्ता बीजरूपा अलब्धवृत्तिकास्तिष्ठन्ति, तेषामेव

परिपाकोन्मुखतायां–ईश्वरात्मभूताया मायाया वृत्तिः परमात्मनि सिसृक्षा भवति। स एव क्षोभ इति वेदान्तिनो विवृण्वते। कालमपिच केचन मन्वते इति। भवतु नाम यथाकथंचिद् विचारभेदमात्रमिदम्। सृष्ट्यारम्भे प्रकृतौ क्षोभ इति तु सर्वेषामप्यभिमतम्। जागरणरूपप्रकृतिक्षोभे तमसोऽपसारणे आवरणभंगे क्रिया प्रसरति इति तमसोऽनन्तरं रजः सा च क्रियास्वभावादेव उत्कटतां शान्ततां चालम्बते सर्वास्वपिप्रक्रियासु तथा दर्शनात्। यदा हि सा उपशान्तेव भवति तदा पूर्वोक्तरीत्या पुरुषबिम्बेन प्रकाशीभवतीति रजसोऽनन्तरं सत्वमिति उभयथापि संभवति। नैषां पूर्वापरीभावो नियतः। विकासह्रासावपि दृष्टिभेदमात्रम् सुसूक्ष्मं भावनीयम्।

तदित्थं वैज्ञानिकप्रक्रियया क्रियाशक्तिरूपता गुणानां व्याख्याता। अनयैव च प्रक्रियया कारिकोक्तेन साधर्म्यवैधर्म्ये अपि व्यक्ताव्यक्तयोरुपपद्येते इति विस्तरोऽस्मत्कृते पुराणपारिजाते द्रष्टव्यः। आस्ताम्–आरम्भ परिणामवादयोर्भेदस्य दिगियं प्रदर्शिता। इमामुपेक्ष्यैव सत्त्वादिगुणानां द्रव्यरूपता विज्ञानभिक्षुभिर्व्याख्याता तस्मात्तेषां सांख्यप्रक्रियायां नास्ति तादृशं पाटवमिति च स्पष्टीकृतम्।

अथ भगवतः शंकराचार्यस्य समयविषये महान् विचारः–तमुपेक्ष्य यदेवाधिकसम्मतं तदेव प्रतिपादयामः।

निधिनागेभवह्न्यब्दे ( ३८८९ ) विभवे मासि माधवे।
शुक्ले तिथौ दशम्यान्तु शंकरार्योदयः स्मृतः॥

एतानि कलेरेव हायनानि। तेनेतःपूर्वं द्वादश्यां शताब्द्यां श्रीशंकरोदयः सिद्ध्यति। विस्तारः खलु दर्शनानां निबन्धादिभिस्तत उत्तरमेव समपद्यत। महादार्शनिको वाचस्पतिरेवादिभूतो विस्तृतनिबन्धनिबन्धॄणामिति मे मतिः।

श्रीशंकराचार्यादुत्तरमभवत् पटपरिवर्त्तनमिव दार्शनिके विज्ञाने। तस्य प्रबलतरयुक्तिविच्छिन्नानि विहाय वस्तुविज्ञानं शब्दाडम्बरमात्रपराणि बभूवुर्दर्शनानि। इतः पूर्वं त्वासीत्पदार्थविषयकविज्ञानसमुन्मेषः। अनन्तरं तु अवच्छेदकताभिराच्छादयन् कलेवरं तार्किकाः, भावनाविस्तारपरा अभवन् मीमांसकाः, विलीनं सांख्यम्, परिभाषादुर्गं आश्रीयत आर्हतैः, गताः पारेसमुद्रं बौद्धाः। श्रीशंकरार्यानुयायिनो वेदान्तिनोऽपि शब्दाडम्बरैरेवारंजयन् ग्रन्थान् स्वकीयान्। स एष विलुप्तः पदार्थविचारो दर्शनानाम्, यदि पुनर्यथावल्लभ्येत विदुषामुद्योगात्प्रचारं तर्हि अनुगतार्थ्यं भवेद् भगवती गीर्वाणभारतीति शम्।

———

# भवभूतिनाटकेषु वर्णितस्य भगवतः कालप्रियनाथस्य स्वरूपस्थानयो र्नूतनः प्रकाशः

म० म० डॉ० वासुदेवविष्णुमिराशी

महाकविभवभूतेर्जीवनचरिते भगवतः कालप्रियनाथस्य स्वरूपस्थानयोर्निरतिशयं महत्वं वर्तत इति विदितमेव सर्वेषां गीर्वाणवाङ्मयाध्येतृणाम्। तस्य महाकवेस्त्रीण्यपि महावीरचरित–मालतीमाधवोत्तररामचरिताख्यानि नाटकानि कालप्रियनाथस्य यात्रायामेव प्रथमं रङ्गभूमौ प्रख्यापितानि। किन्तु तत्कालप्रियनाथस्य स्वरूपस्थानयोर्विषये विदुषां मतवैविध्यं वर्तते। स कालप्रियनाथो नामोज्जयिन्या महाकाल इति बहुभिस्तन्नाटकटीकाकृद्भिः, तथा चाधुनिकैष्टिप्पनीकृद्भिरुक्तपूर्वम्। तथाहि मालतीमाधवस्य टीकाकारस्त्रिपुरारिर्वदति–'कालप्रियनाथस्य महाकालास्पदस्य शम्भोः'। यद्यपि वीरराघवादिभिरन्यैः प्राचीनटीकाकारैरेवंविधं सुस्पष्टं नोक्तं तथापि कालप्रियनाथस्य शिवस्वरूपे तेषां सर्वेषामैकमत्यम्। तथाहि वीरराघवो मालतीमाधवटीकायां प्रथमं 'कालप्रियानाथस्य' इति पाठं गृहीत्वा वदति 'कालप्रियानाथस्य कालप्रियानामिकाम्बिकापतेः'। तदनन्तरं 'कालप्रियनाथस्य' इति पाठेऽपि स एवार्थो निष्पन्नो भवतीति प्रदर्शितं तेन। डॉ० बेलवलकर–डॉ० काणे–प्राध्यापकटोडरमल्लप्राध्यापककरमरकरादिभिराधुनिकैर्भवभूतिनाटकानां सम्पादकैरपि तदेव स्वीकृतम्। बेलवलकरकाणेमहोदयाभ्यां कालप्रियनाथो नामोज्जयिन्या महाकाल इति मतं प्रतिपादितम्। करमकरमहोदयेन तु स कालप्रियनाथो मालतीमाधवे निर्दिष्टः सुवर्णबिन्दुः स्यादित्युक्तम्। यद्यपि माधवव्यंकटेशलेलेमहोदयः कालप्रियनाथस्य देवालयः कालीनगर आसीद् इति मन्यते स्म तथापि स देवो भगवान् शिव एवेत्यस्मिन् विषये नासीत्तस्य कोऽपि संशयः।

कालप्रियनाथस्य निर्देशाः केषुचित् पुराणेषु तथोत्कीर्णलेखेषु वर्त्तन्ते। तेषां परामर्शे कृते स भगवान् आदित्यस्वरूप आसीत्, तस्य चातिविस्तीर्णो देवालय उत्तरभारते यमुनातीरेऽधुना कालीनाम्ना विख्याते नगरेऽवर्त्ततेति सुस्पष्टं भवतीति पूर्वमेवान्यत्र प्रदर्शितमस्माभिः. अद्यापि कालीनगरे 'कालादेव का टीला' इति तत्रस्थानां विदितो वप्रो विद्यते, तदेव पुरातनं

कालप्रियनाथस्य स्थानं भवितुमर्हतीत्यनुमितमस्माभिः । उत्खननेनैवास्य निर्णयो भविष्यति । अतस्तदर्थं भारतीयपुरातत्त्वविभागसंचालका अप्यभ्यर्थिता अस्माभिः । अचिरादेव तस्य उत्खननं भविष्यतीत्याशास्यते ।

एतद्विषयनिर्णायकं किञ्चित्प्रमाणमधुनैवावगतमस्माभिस्तदत्रोपन्यस्यते ।

वर्षद्वयात् प्राक् पुण्यपत्तनस्थ भाण्डारकरप्राच्यविद्यासंशोधनमण्डलस्य कृते मालतीमाधवस्य रामकृष्णगोपालभाण्डारकरकृतावृत्तेर्नूतनसंस्करणमङ्गीकृतमस्माभिः । तदा भाण्डारकरमहोदयेन तदावृत्तेः पादटिप्पन्यां तन्नाटकस्य कस्माच्चिद्धस्तलिखितात् पुस्तकाद् उद्धृत एकः सन्दर्भो दृग्गोचरोऽभवत्[1] । तत्र प्रस्तावनायां भवभूतेः पितृपितामहादिविषयकं तद्विद्वत्तादिविषयकं च निवेदनं कृत्वा सूत्रधारो वदति—

'अतो यदस्माकमर्पितं प्रियसुहृदा तत्रभवता काश्यपेन भवभूतिनाम्ना ब्राह्मणेन प्रकरणं स्वकृतं मालतीमाधवं नाम, तदेव भगवतः कालप्रियनाथस्य सकलजगदेकचक्षुषो, विश्वात्मनः सूर्यस्य पुरतो यथाप्रयोगेण प्रख्यापयितुमहमुद्यतः' ।

भवभूतेस्त्रिष्वपि नाटकेषु कालप्रियस्य निर्देशो विद्यते, किन्तु, तत्स्वरूपं न कुत्रापि वर्णितम् । अतः सर्वैष्टीकाकृद्भिष्टिप्पनीकृद्भिश्च कालप्रियो नाम भगवान् शङ्कर इत्यभ्युपगतम् । किन्तु अत्रोद्धृते प्राचीनहस्तलिखितपुस्तकसन्दर्भे स सूर्य इति सुस्पष्टं निर्दिष्टः, तस्य च वर्णनं 'सकलजगदेकचक्षुः' विश्वात्मा इति कृतम् । तस्मात्तद्धस्तलिखितपुस्तककाले तावत्कालप्रियनाथनाम्ना भगवान् सूर्य एव निर्दिष्टोऽभवदित्यत्र नास्ति सन्देहलवोऽपि ।

एतद्धस्तलिखितपुस्तकं मुम्बईपुर्यां सुप्रथितगवेषक डॉ० भाऊदाजीमहोदयस्य संग्रह आसीत् । तदधुना मुम्बई–एशियाटिक सोसायटी'–संस्थायाः संग्रहालये सुरक्षितं वर्तते । तस्य लेखनकालस्तत्र सम्वत् १७६५ नभस्यामावास्यायां पूरितः' इति निर्दिष्टः । अतस्तत्पुस्तकं सार्धशतद्वयवर्षेभ्योऽपि प्राक्तनमिति स्पष्टीभवति । तस्मादुपरितनः सन्दर्भः केनाप्याधुनिकेन तत्र

---

१. मालतीमाधवम् ( संपा० रा० गो० भाण्डारकरः ) तृतीयावृत्तिः ( १९७० ) पृ० १६ पादटिप्पण्या ५०–५२.

प्रक्षिप्त इति न शक्यं वक्तुम्। न च स सन्दर्भः सम्बत् १७६५ इति वर्षेऽपि केनचित्तत्र प्रक्षिप्त इत्यपि शक्यमभिधातुम्, यतोऽतीतवर्षसहस्रे काले 'कालप्रिय' इति भगवतः सूर्यस्य नामेति विस्मृतं सर्वैरपि भारतीयैः।

न केवलमुपरितन एव हस्तलिखितपुस्तके वर्त्ततेऽयं सन्दर्भः, भाण्डारकर-प्राच्यविद्यासंशोधनमण्डलस्य ग्रन्थसंग्रहे विद्यमानेऽन्यहस्तलिखितपुस्तकेऽपि स वर्तते इत्यस्मभ्यं निवेदितं तद्ग्रन्थसंग्रहरक्षकेण श्रीपुसालकरमहोदयेन। एतद्द्वितीयं हस्तलिखितपुस्तकं राजस्थानीयोदयपुरात् प्राप्तमासीत्। तस्य च कालस्तत्र '( विक्रम ) संवत् १७०३ आषाढ़-कृष्ण-द्वादशी रविवारः' इति निर्दिष्टः। तत्समानखिस्तकालदिनाङ्कः २७ जून १६४६ वर्तते। तस्मिन् दिने रविवासर आसीदित्ययं कालोल्लेखः प्रामाणिक इति सुस्पष्टं भवति। एतद्धस्तलिखितपुस्तकं पूर्वोक्तात् डॉ० भाऊदाजीमहोदयग्रन्थसंग्रह-स्थपुस्तकादपि प्राचीनतरम्।

वराहपुराणभविष्यपुराणादिग्रन्थेभ्यः कालप्रिय—( आधुनिककाल्पी ) नगरे भगवतः सूर्यस्य सुप्रसिद्धो देवालयोऽभवत्, तत्र च तद्देवस्य मध्याह्ने सान्निध्यं वर्तते इति भारतीयानां श्रद्धासीदिति प्रदर्शितमस्माभिरन्यत्र[1]। पूर्वोक्तपुराणानां कालः सहस्रवर्षेभ्योऽपि प्राक्तनः। भवभूतिः खैस्ताष्टम-शताब्द्याः प्रथमपादेऽभवदिति सुनिश्चितमधुना। तत्काले कालप्रियनाथस्य स्थानं सुप्रसिद्धमासीदिति तन्नाटकेभ्यो दरीदृश्यते। तत्पश्चात् कालप्रियनाथ-देवालयस्य विस्तीर्णप्राङ्गणस्योल्लेखो राष्ट्रकूटवंशीयतृतीयेन्द्रनृपतेः कान्य-कुब्जनगराक्रमणस्य वर्णने वर्त्तते। तदाक्रमणमार्गे वर्त्तमानस्य कालप्रिय-देवालयस्य विशाले प्राङ्गणे इन्द्रनृपतेश्चतुरङ्गसेना निविष्टासीत्, तत्सैन्य-स्थमत्तगजेन्द्राणां दन्ताघातैस्तत् प्राङ्गणं विषममभवदिति वर्णनं तत्कालो-त्कीर्णलेखेषु वर्त्तते[2]। तस्याक्रमणस्य कालः सम्भवतः खैस्तसम्बत्सरः ६१८

१. V. V. Mirashi Series In indology. Vol. 1 ( Second ed, 1968 ) pp 37

२. यन्माद्यद्–द्विपदन्तघातविषमं कालप्रियप्राङ्गणं
तीर्णा यत्तुरगैरगाधयमुना सिन्धुप्रतिस्पर्धिनी।
येनेदं च महोदयारिनगरं निर्मूलमुन्मूलितं
नाम्नाद्यापि जनैः कुशस्थलमिति ख्यातिं परां नीयते॥

Epi. Indica Vol. Vii p. 38

इत्यनुमातुं शक्यते । तत्पश्चात् कालप्रियनगरस्योल्लेखाः खैस्तदशमशताब्द्याः प्रथमार्धे भूतस्य राजशेखरकवेः काव्यमीमांसायामुपलभ्यन्ते[1] । कालप्रियनगरं कान्यकुब्जनगराद् दक्षिणदिशि वर्त्तते इति निर्दिष्टं राजशेखरेण । खैस्त-दशमशताब्द्याः पश्चात् कालप्रियनगरस्योल्लेखो न कुत्राप्यवलोकितोऽस्माभिः ।

किं बहुना, पूर्वोक्तहस्तलिखितपुस्तकद्वयस्थं भगवतः कालप्रियनाथस्य सूर्यरूपेण वर्णनं भवभूतिना स्वयमेव कृतमित्यपि वक्तुं शक्यते । रामकृष्ण-गोपालभाण्डारकरेण मालतीमाधवनाटकस्य स्वीयसंस्करणे सप्रमाणं प्रदर्शितं यद् भवभूतिः स्वयमेव स्वीयनाटकानां पाठान् कालान्तरे परिवर्तयति स्मेति तन्नाटकस्थविविधपाठानां विमर्शे सुस्पष्टं भवति । महावीरचरितस्य सम्पादकेन तोडरमल्लमहोदयेनैतदेव स्वीयं मतं प्रतिपादितम् । अतो यद्यपि पूर्वोक्तं कालप्रियनाथस्य सूर्यरूपेण वर्णनं मालतीमाधवस्य सर्वेषु हस्तलिखितपुस्तकेषु न दृश्यते, तथापि तद् भवभूतिना स्वयमेवासीद् विरचितमित्यत्र संशयो भवितुं नार्हति ।

प्रस्तुतविवेचनाद् भवभूतिनाटकेषु वर्णितः कालप्रियनाथो नोज्जयिनी-स्थमहाकालनामा भगवान् शङ्करः, किन्तु कालप्रिय—( विद्यमान-काल्पी ) नगरस्थो भगवान् सूर्यदेव इति सुस्पष्टं भवेदित्याशास्यते ।

—: ० :—

१. अनिश्चितत्वाद् दिशामनिश्चितो दिग्विभाग इत्येके । तथाहि यो गाधिपुरस्य दक्षिणः स कालप्रियस्योत्तरः । काव्यमीमांसा (सं० दलाल.) पृ० ९४

# मध्यप्रदेशीयसंस्कृतसाहित्यसंवर्धनम्

## डा० श्रीमती वनमाला भवालकरः

यशःशरीरेणाजरामरा जाताः पुरातनसरस्वतीपुत्रा देशकालसीमातिगा वर्तन्ते। परिवर्तिषु ज्ञानोपासकेषु विद्वत्सु विदग्धेषु रसिकेषु च स्वग्रन्थरूपेण चिरं विचरन्त एते निजजन्मस्थानस्य कालस्य जीवनवृत्तान्तस्य च विषये मौनं भजन्ते। विशेषतः संस्कृतग्रन्थकाराः स्वरचनास्वात्मपरिचयप्रदाने स्वल्पवादिन एव। अतोऽसंभाव्यकिंवदन्तीभिर्विनिर्मितेन प्रभामण्डलेन निगीर्णं तेषां जीवनचरित्रं प्राचीनग्रन्थानामालोडनेन यथा कथंचित् परिकल्प्य मतमतान्तराणां खण्डनमण्डनं आधुनिका संशोधका व्यस्ता सन्ति। प्रायो विद्वल्ललामभूतानां पुरातनविभूतीनां स्वस्वप्रान्ते संस्थापनेन तत्तत् प्रदेशस्य गौरवाभिवृद्धिकामना स्वाभाविकी एव।

प्राचीनभारते राजाश्रितैर्विद्वद्भी राजसभाः समलंकृता आसन्। अतः प्रायः समृद्धिशालिन्यो राजधान्यो विदुषां कर्मभूमिर्बभूवुः। अनेके भूपालाः स्वयमेवाधीतशास्त्रा ज्ञानोपासनायां ग्रन्थरचनां कृतवन्तः। एते ऽन्ये च रसिका राजानः स्वराजसभासु विद्वद्गोष्ठीः समायुयुजुः।

मध्यप्रदेशे ऽप्यनेकाः सरस्वतीक्रीडास्थलीभूता राजधान्यः ख्यातिं गताः। यथा—उज्जयिनी, धारा, माहिष्मती, विदिशा, त्रिपुरी, दशपुरं, तथैव खजुराहो-एरण-रीवा-पन्ना-ग्वालियारादिनगराणि सकलविद्यानां संवर्धनभूमिरेव जातानि। सर्वेषामेतेषां मूर्ध्नि तिष्ठत्युज्जयिनी यस्या नाम विश्वविख्यातकविकुलगुरुकालिदासेन सहातिप्राचीनकालादद्यावधि दृढमेकीभूतम्। भोजप्रबन्धादिपरवर्तिग्रन्थानुसारं शकारिविक्रमादित्यस्य राजसभायां सम्मानितेषु नवरत्नेषु कालिदासो ऽग्रगण्य आसीत्। वैदर्भीरीतिशोधकः प्रसादमधुरान् वाक्सुधातुषारान् विकिरन्नेषोऽनुपमकविसम्राड् गेटेमहोदयसदृशैः पाश्च्यात्यरसिकैरपि भूरि प्रशंसितः। तस्य वाग्विस्तारे शाकुन्तलमालविकाग्निमित्र-विक्रमोर्वशीय नाटकानि, रघुवंशकुमारसंभवमहाकाव्ये, मेघदूतर्तुसंहारखण्डकाव्ये विश्वसाहित्ये मौलीभूतानि। अन्या अपि काश्चिद् कृतयः कालिदासस्यैव सन्तीति कतिचिद् विद्वद्भिः प्रस्तूयते किन्तु नैतदसन्दिग्धम्। नवरत्नेष्वन्य आसन् वररुचि-धन्वन्तरिः क्षपणकोऽमरसिंहः शङ्कुर्वेतालभट्टो घटकर्परो वराहमिहिरश्चेति परम्परितो लोकवादः। एतेषु केचित्तु नाममात्रेणैव ज्ञातास्तेषां कृतयो विलुप्ताश्च।

अन्येषां कालविषयकान्वेषणेन ते न मिथः समकालिका इत्येव प्रमाणितम्। तेनैषा किंवदन्त्येवाविश्वासभूः संजायते। तथापि नवरत्नविषये सत्स्वपि वितर्केषु खिस्ताब्दपूर्वं ५८ तमे संवत्सरे विक्रमसंवतरसंस्थापकस्य राजसभा कालिदासेनोज्जयिन्यां विभूषितेति प्रायो विदुषामैकमत्यमस्ति। अद्यापि कालिदासोत्सवस्य कालिदासमधिकृत्य संशोधनस्य चाखिलभारतीयकेन्द्रमुज्जयिनी वर्तते। मध्यप्रदेशं मण्डयमाना राजान उज्जयिनीत्यलं पल्लवितेन।

## मध्यप्रदेशे विचरितं काव्यसाहित्यम्

महाकवि-सार्वभौमकालिदासेन रघुवंश-कुमारसंभव-मेघदूत-ऋतुसंहारादि-काव्यानि विरचय्य काव्यसाहित्यं गौरवशिखरे दृढं संस्थापितमुज्जयिन्याम्। सम्यगुक्तं—

अस्पृष्टदोषा नलिनीव दृष्टा हारावलीव प्राथिना गुणोघैः।
प्रियाङ्कपालीव विमर्दहृद्या न कालिदासाद-परस्य वाणी॥

विक्रमादित्यस्य तथाकथितनवरत्नेष्वन्यतमो वररुचिरासीद् राक्षसकाव्यं, वररुचिकाव्यं नीतिरत्नं चेति काव्यत्रयस्य रचयिता। अपरः कविर्घटकर्परो घटकर्पराख्यं दूतकाव्यं निर्मितवान्। लोकविलक्षणमेतन्नाम काव्यस्यान्तिमे श्लोके सूच्यते यत्र कविर्यमकाद्यलङ्कारेषु स्वनैपुण्यस्य गर्वमुद्वहन् ब्रूते—

भावानुरक्तकवितासुरतैः शपेय-
मालभ्य चाम्बु तृषितः करकोशपेयम्।
जीयेय येन कविता यमकैः परेण
तस्मै वहेयमुदकं घटकर्परेण॥

मेघदूतसदृशेऽस्मिन् दूतकाव्ये विरहपीडिता नायिका मेघदूतं परिकल्प्य नायकं प्रति संदेशं प्रेषयति। द्वाविंशतिश्लोकात्मकस्यास्य लघुकाव्यस्य विषयेऽभिनवगुप्तेन लिखितं 'अत्र कर्ता कालिदास इति श्रुतमस्माभि' रिति। एष तु विकल्पस्य विषयः।

शतकत्रयकर्ता भर्तृहरिः, हयग्रीववधकाव्यकारो भर्तृमेण्ठः, मयूरशतकप्रणेता मयूरकविः, जातकमालाया रचयिताऽऽर्यशूरः, महाकविर्भारविः, अमरुकः, रूपः, भट्टारकहरिश्चन्द्रः, शूद्रकः, बाणः, दण्डी, इत्यादय उज्जयिनीनिवासिन एवेति किंवदन्ती राजशेखरस्य ग्रन्थेषु, मेरुतुङ्गाचार्यस्य प्रबन्धचिन्तामणौ, ज्योतिर्विदाभरणे तथैवान्येषु परवर्ति-ग्रन्थेषु सूच्यते। प्रमाणैः खण्डित ईदृशोऽसदाग्रहस्तु हास्यास्पदमेव। तथापि कवीन्द्राणां कार्यक्षेत्रमित्युज्जयिन्या गौरवं परवर्तिकवीनां हृदि कियदासीत् सुदृढमित्येतद् दन्तकथाभिः प्रतीयते।

मध्यप्रदेशीय-संस्कृतसाहित्य-संवर्धनस्य प्रगतिः प्रायशः षष्ठशतकात् प्रभृति

नवमशतकं यावत् मुख्यतस्तात्कालिकोत्कीर्णलेखमालाभिरेव सुप्रमाणिता वर्तते, यतो हि नामैतस्य युगस्य संस्कृतसाहित्यमद्यावध्यपर्याप्तमेवोपलब्धम् ।

खिस्तदशमशतकादारभ्य परमारवंशीयनृपाणामाश्रये विद्वद्जनैर्धारानगर्या यशः प्रकाशितम् । धाराधीशयोर्मुञ्जसिन्धुराजयोः सभामलंकुर्वन् परिमल-कालिदास इत्यपरनामा कविः पद्मगुप्तो नवसाहसाङ्कचरताख्य ऐतिहासिक अष्टादशसर्गात्मके महाकाव्ये स्वस्याश्रयदातू राज्ञश्चरित्रं वर्णितवान् । इतिहासा-दप्यधिकतरः कवेः कल्पनाविलासोऽत्र वर्तते तथापि काव्यदृष्ट्या सरसा रोचका चास्य शैली ।

कवि शोभनो धारायां मुञ्जस्य सभापण्डित आसीत् । जैनधर्मानुयायिनानेन कविना चतुर्दशजैनतीर्थंकरस्तुतिपरमेकं चतुर्विंशतिकान म चित्रकाव्यं विरचितं यस्मिन् प्रत्येकश्लोके यमकबद्धयोर्द्वितीयचतुर्थपादयोः समानाक्षराणि भिन्नर्थानि सन्ति । शोभनस्यानुजेन धनपालेनास्य काव्यस्य टीका लिखिता ।

अपरो धारानिवासी राजाश्रितो जैनमुनिर-रमितगतिः सुभाषितरत्नसन्दोह-काव्यं रचितवान् ।

सिंधुराजानन्तरं खिस्तैकादशशतकस्योत्तरार्धे भोजो धारायां राजपदे प्रतिष्ठितः । स स्वयमेवानेकशास्त्रेषु पारङ्गतो ग्रन्थकारः कविश्चासीत् ।

तेन प्रणीतेषु त्रयोविंशतिग्रन्थेषु 'विद्याविनोदिनी', 'स्तोत्रशिवदत्तं', 'सुभाषितं', चेति त्रीणि काव्यानि सन्ति । गुणज्ञस्यास्य सभा माघमयूरादि-चतुःशताधिकसहस्रपण्डितैर्मण्डितेति भोजप्रबन्धे प्रस्तुतम् । अप्रामाणिक्यप्येषा किंवदन्ती विक्रमस्येव भोजस्यापि गौरवं विद्वद्भिः परां कोटिं नीतमित्येतावत्तु प्रमाणयति ।

परवर्ति परमारभूपतीनां समाश्रयेऽपि धारायां जैनमुनयः सम्मानं प्रापुः । जैनमुनि-दामोदरेण देवपालस्य शासनकाले १२०८ खिस्ताब्दे 'जिनचरितं' काव्यं ग्रथितम् ।

चालुक्यनृपतेश्चतुर्थविक्रमादित्यस्य चरित्रमधिकृत्य विरचितस्य 'विक्रमाङ्क-देवचरित' काव्यस्य कर्ता ख्यातनामा काश्मीरजः कविर्बिल्हण एकादशशतकान्ते यशसे चार्थकृते च परिभ्रमन् त्रिपुरीं प्राप्य तत्र डाहलमण्डलाधीशेन कल-चुरिवंशजेन कर्णदेवेन सम्मानितस्तत् सभायां निवसन् रामकथाविषयकं काव्यमेकं तत्र निर्मितवान् ।

त्रिपुर्यामेव राज्ञो युवराजस्याश्रमे राजशेखरेण 'हरविलासं', 'उज्वलदत्तं' चेति काव्यद्वयं विरचितम् । अनयोः काव्ययोरुद्धरणानि परवर्तिग्रन्थेषू-पलभ्यन्ते ।

द्वादशशतकानन्तरं रीवाराज्ये बान्धवकुलनरेशानामाश्रये भक्तिकाव्यस्य प्रशस्तीनां च प्रणयनं प्रचुरं समभवत्। पञ्चदशशतके वीर-देवसिंहस्य राजधान्यां गहोरायां रामचन्द्रभट्टेन 'राधाचरित'-मन्ये च द्वे काव्ये रचितानि। एतानि नाममात्रेणैवोपलभ्यन्ते। वीरभानुनृपाश्रितस्योरव्यमाधवस्य ( ४३२-५२ ई० ) वीरभानूदयकाव्ये वीरभानुपर्यन्तं बान्धवनरेशानां वंशविस्ताररश्चरित्राणि च निरूपितानि। प्रसादहृद्यशैल्यां रचिते द्वादशसर्गात्मकेऽस्मिन् काव्ये प्रस्तुतं राजधानीगहोराया वर्णनमत्रोदाह्रियते—

"स राजयामास युवा गहोरां चतुर्दिशा राजितराजमार्गाम्।
प्रासादजातैर्जनितप्रसादैर्जेतुं पुरीं भोगवतीमिवेच्छुम्॥
गायन्ति यस्यां सुदृशः समन्तान्मञ्जु द्युलोकादिव देवनार्यः।
समागताः श्रीवदना गहोरासुखानि भोक्तुं दिवि दुर्लभानि॥"

अस्मिन्नेव राजाश्रये कविर्भानुकरो 'गीतगौरीपति'-मिति काव्यमन्याश्च प्रशस्तीः प्रणीतवान्। उद्धरणेषूपलब्धेभ्यः श्लोकेभ्यो ज्ञायते यत् कविनाऽनेन यवनशासकनिजामशाहोऽपि प्रशंसितः। समीपस्थयवननृपैः सह बान्धवनरेशानां मैत्रीभाव आसीत्।

वीरभानुपुत्रो रामचन्द्रोऽपि (१५५२-९७ ई०) विदुषां सम्भावयितासीत्। तस्य प्रशस्तौ 'रामचन्द्रयशः प्रबन्धस्य कर्त्ता गोविन्दभट्टो यवनाधीश्वरदिल्लीपतिनाकवरेणापि सम्भावितोऽकबरीकालिदासेति विरुदप्रदानेन।

नाट्य-काव्य-धर्म-दर्शन-टीकात्मकायामष्टादशग्रन्थानां प्रणेता रीवानरेशो विश्वनाथसिंहः ( १७८९-१८५४ ई० ) संस्कृतपण्डितः प्रख्यातः कविविदुषामाश्रयश्चासीत्। जयदेवकृतगीतगोविन्दस्य सरणीमनुकृत्याऽनन्यरामभक्तेनानेन भक्तिपरं गेयं च 'गीतरघुनन्दनं' नाम श्रृङ्गार रसमयं मधुरं गीतिकाव्यं विरचितम्। अस्या मृदुपदशय्याया वैशिष्ट्यं शोभते तद्यथा—

'ललितालीगणमण्डित - रसपण्डित हे।
चपलचटुलमणिभाल, जय जय राम हरे॥
क्षितिनृपमण्डलमण्डन, खलखण्डन हे।
समुद्दण्डकोदण्ड, जय जय राम हरे॥
विहरति रघुपतिरिह ऋतु-राजे।
किसलय-कुसुम समाकुल तरुकुल-कोकिलकीर समाजे॥

विश्वनाथसिंहस्य तनयो रघुराजसिंहोऽपि ( १८५३-८० ई० ) 'सुधर्माविलास'-'शम्भुशतक'-'जगदीशशतक'-'नर्मदाष्टक'-'रघुराजमङ्गल चन्द्रावली'

त्यादीनि भक्तिकाव्यानि संस्कृतभाषया रचितवान् । 'सुधर्माविलासे' श्रीकृष्ण-सभा, मोक्षोपायाः, वैकुण्ठलोकः, गोलोकः, दशावतारादयो वर्णिताः । अस्य स्तुतयो जयदेवस्येव क्वचित्, क्वचित् श्रीशङ्कराचार्यस्य स्तोत्रशैलीं स्मारयन्ति । यथा चरणरोगान्मुक्तये प्रणीतेऽस्य शम्भुशतके—

वक्रेण नक्रेण यथा हरिर्गजं ग्रस्तं हि चक्रेण तमुज्जहार ।
तथैव मां पादरुजा गृहीतं त्वमुद्धरस्वाशु शशाङ्कशेखर ॥

( शम्भुशतकम् ४३ )

यथा वा—महात्मनां सदात्मनां सुधर्मकर्मवर्तिनां
तपस्विनां यशस्विनां मनस्विनां मनःप्रिये ।
मनोहरे सरिद्वरे सुसंकरे भियां हरे
धराधरे जवोद्भटे नमामि देवि नर्मदे ॥

( नर्मदाष्टकम् ८ )

अस्मिन्नेव शतकत्रये मध्यप्रदेशस्यान्यान्यभागेष्वपि संस्कृतकाव्यस्याभिवृद्धिर्दृष्टिगोचरी भवति । १७५८ तमे खिस्ताब्दे मण्डलानिवासिना लक्ष्मीनारायणदीक्षितेन 'गजेन्द्रमोक्षं' नाम काव्यं विरचय्य मण्डलाधीशनिजामशाहाय समर्पितम् । अस्य नवसर्गेषु प्रथम-द्वितीय-नवमसर्गा एवोपलब्धाः । प्रारम्भिकसर्गद्वये त्रिकूट-विन्ध्य-मण्डलाविहारि पशुपक्षिवनस्पतीनां चित्रणं विद्यते । नवमे च प्रेमशाहादारभ्य निजामशाहपर्यन्तं मण्डलानरेशानां प्रशस्तिरस्ति ।

मण्डलास्थोऽन्यो मैथिलकवी रूपनाथझा रामविजय नामैतिहासिकं काव्यं प्रायः १७६९ संवत्सरे रचितवान् । अस्यैव 'गटेशनृपवर्णन'मिति लघुकाव्ये गढामण्डलाया गोंडनृपाणामन्तिमशासकसुमेदशाहपर्यन्तं वर्णनं विद्यते ।

ऊनविंश-विंशशतकयोरप्यखण्डितेयं काव्यस्य परम्परा । आधुनिककवयस्तु संस्कृतानुरागेणैव न पुना राजाश्रयादिना प्रेरिताः काव्यकलायै प्रावर्तन्त । विंशशतकस्य प्रारम्भेऽपि संस्कृतभाषासीत् परम्परानुसारिणी नाति दुर्बोधा न वा सरला । कालान्तरेण तु भाषायाः सरलतां प्रतिलेखकानां प्रवृत्तिः परिलक्ष्यते । प्रायशो लेखका लघुरचनोन्मुखा प्रतिभान्ति । भक्तिपराश्चरित्मकाः कृतयः प्रशस्तयश्च बहुशः प्रणीताः । अन्यभाषासु प्रसिद्धानां काव्यानां संस्कृतानुवादाः, संगीतमय गीतिकाव्यानि, राष्ट्रियभावनया प्रेरितानि काव्यानि चास्य युगे प्रवर्तन्ते ।

लघुकाव्यस्य युगेऽस्मिन् महाकाव्यनिर्मितिरपि क्वचिज्जायते। मध्यप्रदेशे निर्मितमुल्लेखनीयमभिनवतमं महाकाव्यं १९६८ संवत्सरे सनातनेन डा० रेवाप्रसाद द्विवेदिना प्रणीतं सागरिकायां च प्रकाशितं "सीताचरितं" कवेरसामान्यप्रतिभां काव्यरचनानैपुण्यं च व्यनक्ति। काव्यस्यास्य संकेतनाम्नी विद्वत्ताप्रचुरा व्याख्यापि कविना स्वयमेव रचिता। मध्यप्रदेशे नर्मदातटे नानदेरनाम्नि ग्रामे जातः, काशीहिन्दूविश्वविद्यालयात् साहित्याचार्य-एम०ए०परीक्षे सर्वप्राथम्येनोत्तीर्य मध्यप्रदेशे शासकीयमहाविद्यालयव्याख्यातृत्वेन नियुक्तः, पीएच०डी० पदवीभूषित इदानीं। काशीहिन्दूविश्वविद्यालये साहित्यविभागाध्यक्षपदमलङ्करोति। साहित्यशास्त्रे पारङ्गतः कालिदासवाङ्मये कृतपरिश्रमः "शिष्यः कश्चित् कविकुलगुरोरेष सनातनः कालिदासस्येव काव्यकलामनुहरन् तं गुरुमेवातिशेते। कालिदासीयां सरसकान्त-प्रसाद-गुणसंपन्नां वैदर्भीशैलीमङ्गीकुर्वन् कालिदासस्येवोदात्तविचारवैभवं प्रकटयंश्चैष कालिदासस्य नूत्नावतारः परम्पराया अन्धानुकरणं न करोति। भारतस्य राष्ट्रियप्रज्ञा समुद्भावयतः कवेरस्य सीताचरिते सीता न करुणैकपात्रं, किन्तु तपःपावनौजोज्योतिरुदात्तचेता जगन्माता राष्ट्रदेवी। डा० सी० डी०देशमुखमहोदयेन युक्तमेवोक्तं "सीताचरितस्य सीता कालिदासस्य सीताया अधिकं प्राणवती" ति। भाषायाः सौष्ठवं, विचाराणां गाम्भीर्यम्, छन्दसां वैविध्यं, अलंकाराणामभिनवप्रयोगः, रुचिरता सुभगं वस्तुपरिबृंहणमित्येवमादिभिर्विश्वबन्धुत्वविधृतां राष्ट्रियतां संस्कृतवाण्या साफल्येन समुल्लासयन् कविरेषोऽभिनवभारतस्य राष्ट्रियकविष्वग्रगण्यः। वाल्मीकेराश्रमस्थायाः सीताया हृद्यं प्रभावि चित्रणमस्य काव्यसौरभस्य निदर्शनं—

निजपरिसर—तीर्थजातमेषा
मुनिसहिता पदयात्रया ददर्श।
अयि बत कथमन्यथा ममत्वं
निजभुवि कोऽपि भजेन्न तां स्पृशेच् चेत्॥

किसलयशिशुसोदरेण सीता
कलमभुवः स्वकरेण मृद्नती सा।
कठिनकरकृतां स्वभूमिसेवां
कृषकजनस्य सुदूरमत्यशेत॥

(सीताचरिते ६ सर्गे-३४-३५)

यथा वा—

कविमतिरिव साध्वी दर्शने सत्पदस्य
नियतिरिव च धीरा कर्मयोगेषु साऽपि ।
अलभत सति चित्ते स्वेऽक्षरं ज्योतिरेकं
प्रियविरहपतङ्गो यत्र शान्तिं जगाम ॥

( सर्गे १०-६० )

सीताया योगबलेन समाधिमाङ्गल्यस्य हृदयस्पर्शि वर्णनं यथा—

सा सर्वेभ्यो विनयमधुरामञ्जलिं मूर्ध्नि धृत्वा
न्यस्ताशीर्भिः करकिसलयं चन्द्रकेतोश्च शीर्षे ।
स्मेरं धृत्वा मुखसरसिजं शान्तभावा पुनश्च
भेजेऽभ्यासात् स्थिरसुखसमां पद्ममुद्रां सुभद्राम् ॥

( सर्गे १०-६६ )

प्राणायामः स्वयमथ तदा प्राणरोधस्वरूपः
प्रादुर्भूतः सहजसुभगो ध्यानदार्ढ्यं दधानः ॥
इत्थं सैषा जनकतनया स्वात्मदेवस्वरूपं
ज्योतिष्कामं कमपि मुदिता राममासाद्य जाता ।
का भीरस्मिन् विरहजनिता का च लोकप्रसूता
सत्त्वासत्त्वप्रतिथिरबला का च कालव्यपेक्षा ॥

( सर्गे १०-६८,७० )

मध्यप्रदेशेऽन्ये द्वे महाकाव्ये-'एडवर्डमहाकाव्यं' ( १६०५ ई० ), सुलतानजहां विनोदमहाकाव्यं' ( अप्रकाशितं ) च भोपालवासिनोर्वीदत्तशास्त्रिणा प्रणीते ।

ग्वालियरनृपस्य पौराणिको भट्टश्रीनिवासशास्त्री चक्रवर्ती ( १८८३-१६४८ ई० ) श्रीनिवाससहस्रनामाख्यं तिरुपतिवेंकटेशस्य स्तोत्रं सहस्रश्लोकेषु निबद्धवान् ( १६२८ ई० )। भगवद्विंशतिः, श्रीषोडषी, गङ्गाष्टकं, यमुनाष्टकं, श्रीरङ्गराजनक्षत्रमाला चेति भक्तिस्तोत्राणि, राजविवाहवर्णनं, श्रीमन्माधवरावप्रसस्तिः, होलोत्सवविनोदश्चेति कवेरस्यान्या लघुरचनाः ।

रत्नत्रयीति सहस्रद्वयश्लोकात्मकं जैनधर्मदर्शनप्रतिपादकं काव्यमन्यानि च स्तोत्राणि सागरे पन्नालालजैनेन निर्मितानि । त्रिपाठिरुद्रदेवविरचिता

१०८ श्लोकेषु गायत्रीलहरी, राजारामशास्त्रिगाडगीलस्य जगद्गुरुशङ्कराचार्य-प्रशस्तौ श्लोकशतं कच्छीप्रीतमलालस्य शान्तिशतकं आराधनाशतकम्—उन्नति-शतकं—ब्रह्मचर्यशतकं च लोकनाथशास्त्रिणश्चत्वारिंशत्—श्लोकमयी नर्मदातर-ङ्गिणी, राम—सीता—शिव—गणेश—कृष्णादीन् अधिकृत्याष्टकानि, बिहारिलाल-शास्त्रिणो लाङ्गलीविलासकाव्यं द्वे चान्ये लघुनी भक्तिपद्ये, सदाशिव-सीता-राम-मुसलगांवकरकृतानि श्रीनारायणस्तवः, शिंदे वंशवर्णनम् इत्यादीनि, करमल-करशास्त्रिणो यदुपतिकरुणाष्टकं, रघुपतिकरुणाष्टकं श्रीशान्तादुर्गाष्टकमम्बाष्टकमि-त्यादिरुचिराण्यष्टककाव्यानि रुद्रदेवत्रिपाठिनश्चित्रबन्धे गुरुस्तुतिः, श्रीकृष्णा-नन्दाष्टकम् शतकेऽस्मिन् विरचितानां मध्यप्रदेशीयभक्तिकाव्यानां प्रशस्तीनां च प्रतिनिधित्वं कुर्वन्ति । एतेष्वाराध्यं प्रति भावमाधुर्यं करमलकरशास्त्रिकृत् श्रीरघुपतिकरुणाष्टकादुदाह्रियते यथा—

त्वदंघ्रिकमले सदा निहितसन्मनोभृंगया
सदीनकुलदीनया ललनया शवर्या तया ।
न दत्तफलभक्षणे हृदि कृता तदुच्छिष्टता
ममैव करुणा कथं रघुपते न ते जायते ॥

राष्ट्रियभावनया प्रेरितानि कतिचित् खण्डकाव्यान्यप्यस्मिन् युगे प्रकाशि-तानि । वडवानीतो गणपतिशङ्करशुक्ल इन्दोरमहाविद्यालये व्याख्याता भूदान-यज्ञगाथानाम्नि स्वकाव्ये भूदानस्यादर्शकार्यारम्भ-विकासाः पदयात्रा, विघ्नोपशमनार्थमहिंसामार्गावलम्बनम्—इत्यादीनां सरलसंस्कृतभाषया श्लोक-बद्धं निरूपणं प्रस्तौति । इन्दोरनगर एवाध्यापकपदस्थस्य कच्छीप्रीतमलालस्य मातृभूमिकथायां सुगमसंस्कृतश्लोकेषु बालच्छात्रोपयुक्तो भारतभूमेरितिहासो निबद्धः । सत्याग्रहनीतिपाठः त्रिपाठिरुद्रदेवस्य कृतिः करमलकरशास्त्री 'चीना-क्रमणं' इति वीररसप्रधाने काव्ये एकपञ्चाशत् पद्यैः चीनजनाधिक्षेपपूर्वकं स्वदेशीयानां देशभक्तिभावनामोजस्विशब्दैर्जागरयति । यथा—

पादप्रहारैः खलु यस्य तुष्टिः
स आर्जवैस्तुष्यति नैव मूर्खः ।
'शुनः कपाले लगुडप्रहारः'
कार्येति नीतिः कुटिले स्वशत्रौ ॥

गतं न शोच्यं ह्यधुना युवानो वैमानिकानां च सुनाविकानां ।
सैन्यस्य मध्ये पदचारिणां च प्रावेश्य युद्धे कुशला विधेयाः ॥
सर्वस्य नाशस्य प्रधानमूलं भेदं विहायाद्य रिपुर्यथा नः ।
पुनः स्वराष्ट्रस्य पवित्रसीमां नोल्लंघयेदाशु तथा विधेयम् ॥

'मन्त्रिषु दृष्टिक्षेपः' इति पञ्चविंशतिपद्यात्मके काव्ये कविः मन्त्रिणः कर्तव्यशून्यतां विहाय जनहिताय प्रेरयति। जनजागरणाय शतप्रायाणि बहुविध-विषयानवलम्ब्य स्फुट-लघु-नीतिकाव्यान्यप्यनेन ग्रथितानि। समस्यापूर्तिषु चित्रकाव्यबन्धेष्वपि कवेरस्याभिनिवेशो दृश्यते।

१९६३ खिस्ताब्दे प्रकाशितं डा० शिवशरणशास्त्रिणा प्रणीतं 'जागरणं' नवीन-गेय-शैल्या चरितगीतिकाव्यानां संग्रहोऽस्ति। दतिया पुरे शासकीय-महाविद्यालये प्राध्यापकोऽयं कविर्देशवासिनां जागरणार्थं राष्ट्रियकविता अन्याश्च वैराग्यभावपूर्णाः कविता आधुनिकच्छन्दःसु विरचय्य २९ गीतानां संकलनं कृतवान्। पद्यं गेयं यथा—

जयतु जयतु भरतमही पुण्यशालिनी।
शौर्यतपस्त्यागमयी, शान्तिरता कान्तिमयी
जननीयं क्षेममयी स्नेहमयी स्नेहरूपिणी॥

पाश्चात्त्यदेशेष्वप्यादृतः पद्मभूषणपदवीविभूषितो विक्रमविश्वविद्यालयेन डि० लिट् उपाधिना सम्मानित उज्जयिनीयः सप्ततिवर्षदेशीयः प्रकाण्डसंस्कृत-पण्डितो ज्योतिषज्ञः सूर्यनारायणव्यासो 'भव्यविभूतयः' इति षट्पञ्चाशत् श्लोकात्मकसुगमपद्यैः सामाजिक-धार्मिक-वैज्ञानिक-राजकीय-क्षेत्रेषु प्रथितय-शसां भारतीयविभूतीनामल्पपरिचयं विवृणोति। यथा—

वीतरागभयं देवं दयया समलङ्कृतम्।
महावीरं महावीरं वन्दे जिनवर वरम्॥

संस्कृतभाषाया दुर्बोधतां निराकृत्य तां साधारणजनोपयोगिनीं विधातुमे-तादृशाः प्रयत्नाः पण्डितैरप्यङ्गीकृताः।

डा० रुद्रदेवत्रिपाठी १९२४ खिस्ताब्दे स्वजन्मना पुरा दशपुर-नाम्ना प्रसिद्धं मन्दसोरनगरमलङ्कृतवान्। तत्रैव शिक्षकपदे स्थितो मालवमयूरमासिकस्य संपादनमकरोत्। कतिचिदुपरिनिर्दिष्टरचनाव्यतिरिक्तं तस्य पत्रदूतं नाम दूतकाव्यमपि रोचकं प्रतिभाति। मेघदूतपद्धत्या काव्येऽस्मिन् मुम्बापुरीं प्राप्तः कविर्मन्दसोरस्थं स्वगुरुं प्रति सन्देशप्रेषणे मार्गस्थानि दृश्यानि पत्ररूपिणं दूतं कथयति। अस्मिन् खण्डकाव्ये १४७ पद्यानि मन्द्राक्रान्तायामेव ग्रथितानि। तस्य प्रसादरम्या ललितपदावली निर्दिश्यतेऽत्र—

एकं मित्रं विलसति यतो भूतले निर्धनानां
दूतं चैकं प्रकृतिमधुरं सौख्यदं पत्रमेव।

एतच्चाल्पव्ययमनुचरं　　स्पष्टवाद्यप्रमादि
प्रीतेः पात्रं चरणरहितं शीघ्रगं दूरयायि ॥

(पत्रदूतं १६)

दिष्ट्या दृष्टिं चटुलयति यच्चाकचक्येन चञ्चो-
र्नेदीयस्तत् किमिति शिखरस्थं न जाने मनोज्ञम् ।
इत्थं चित्ते त्वयि विमृशति प्रत्यभिज्ञानपट्टो
विश्रामस्थो भृगुपुरमिति व्यंक्षति स्वाभिधानम् ॥

(७०)

इदानीं प्राचीनपरम्परागतसंस्कृत–छन्दांसि विहाय भाषाछन्दःसु मुक्तच्छन्दसि च काव्यग्रथनस्याभिनवा प्रवृत्तिः परिलक्ष्यते । श्री. भि. वेलणकरो १९१५ खिस्ताब्दे महाराष्ट्रे जाते मुम्बई-विश्वविद्यालये संस्कृताध्ययने पुरस्कारविजेता शासनाधिकारपदे प्रतिष्ठितोऽपि संस्कृतानुरागं संवर्धयन् संस्कृतलेखनेन विद्याव्यासङ्गमद्याप्याविष्करोति । पत्रालयाधीशपदे भारतस्य विविधप्रान्तेषु कार्यं कुर्वतोऽस्य पोस्टमास्टरजनरलपदे भोपाले कंचित्कालं नियुक्तिरासीत् । भोपालस्थेन तेन 'जवाहरचिन्तनम्' 'विरहलहरी' चेति संगीतात्मक-गीतिकाव्यद्वयस्य सर्जनं कृतम् । जवाहरचिन्तते न केवलं जीवन-चरित्रं वर्णितमपि तु जवाहरस्य मृत्युना स्मृतिपथमानीतानां तज्जीवनस्य विविधपक्षाणां चित्रणे तत्कार्यकलापेषु च वक्तव्येषु च कृतं तत् तत् चिन्तनं कविना स्वकल्पनयोत्प्रेक्ष्य कालक्रमानुसारं चित्रितम् । यथा नेहरुणा संयुक्त-राष्ट्रकुलसभायां यद् भाषितं ( ३-११-१९४८ ) प्रथमोपस्थितौ तद्—

समुदितो निर्ममः सङ्गमः
सर्वेभ्यो विनतस्य मे नमः
जनस्य नान्नं नापि च वसनं
न सुखस्पृष्टं तस्य जीवनं
कस्मादत्र तु नीतेः पठनं
न तेन दुःखशमः
सर्वेभ्यो विनतस्य मे नमः ।

( ३८–पृ० ९५-९६ )

गेयशैल्यां विरचिते 'विरहलहरी' काव्ये विरहगीतानि भावानुकूलमसृण-पदचयनेन प्रस्तुतानि । यथा—

विधातुरपि जयिनी। प्रणयिनी।
कण्ठः कमलं, सुधाधिधवलं
कोकिलकण्ठी कलाकामिनी ॥

एते गीतिकाव्ये विविधरागेषु स्वरबद्धे आकाशवाणीतः प्रसारिते। विष्णु-वर्धापनं, गुरुवर्धापनं, जीवनसागर इति लघुकाव्यानि गुरुजनप्रशस्तौ संस्कृत-छन्दःसु विरचितानि जयमङ्गला नाम मराठीकाव्यस्यानुवादोऽस्या कवेः काव्यविस्तारं प्रकटयन्ति।

रावलेश्यामलालस्य वटवल्लरी-मुग्धा-पावनं चेति संस्कृत आधुनिकगीति-काव्यत्रयम् त्रिपाठिरुद्रदेवस्य 'प्रेरणायां' चलश्चित्रपटसंगीतानुकरणेन गेयानां संस्कृतगीतानां संग्रहो विद्यते। 'विनोदिनी' 'डिण्डिम'श्चेति द्वे हास्यरसात्मके-अपि गीतिकाव्ये कविनानेन विरचिते।

करमलकरशास्त्रिणो "लोकमान्यालङ्कारः" इत्यस्मिन् काव्येन सहालङ्कार-शास्त्रस्य समन्वयोऽस्ति। राष्ट्रभक्तिपरः कविरलङ्काराणामुदाहरणार्थं लोकमान्य-तिलकस्य जीवनविषयकाः प्रेरणाप्रदान् शतश्लोकान् प्राचीनछन्दःसु विरचित-वान्। महामना विद्वान् एष इन्दोरसंस्कृतमहाविद्यालये सांख्ययोगप्रधाना-ध्यापको बहूनां प्रकाशिताप्रकाशित ग्रन्थानां कर्ता। पद्यपद्माकर-श्लोकमञ्जू-षादयः तस्य कृतयः प्रथिताः।

अपरो संस्कृतकाव्यस्य विकासोऽन्यभाषासु ग्रथितानां काव्यानां संस्कृता-नुवादे परिस्फुटति। यथा—गान्धीमहात्मनः शतसूक्तीनां बडवानीस्थ गणपतिशङ्करशुक्लकृतः पद्यानुवादः, श्रीरामदेवलीलामृतं तेनैव नाम्ना हिंदी-भाषया डिंगलकविना लिखितस्य काव्यस्य शास्त्रिकृष्णशर्मणा कृतः संस्कृता-नुवादः, त्रिपाठिरुद्रदेवेन संस्कृतश्लोकबद्धौ 'कालिदासप्रेरितः शिल्पसंग्रहः' 'अजन्तादर्शनं' चेति पुरातत्त्वविषयकग्रन्थयोरनुवादौ, रामदासस्वामिकृत-मराठी पद्ययो रावलेश्यामलालेन विहितोऽनुवादः 'मनसः श्लोकाः' 'करुणा-ष्टकं' चेति, द्विवेदिप्रेमनारायणस्य बिहारीकविकृतहिंदीसप्तशत्याः 'सौन्दर्य-लहरी'ति संस्कृतानुवादस्तथाऽन्ये हिंदीसन्तकवीनां पद्यानां सूक्तीनां चानुवाद इत्यादयः। नारायणदत्तत्रिपाठिनः सत्येशगीतं सत्यनारायण-कथायाश्छन्दो भयपद्यरूपमस्ति। सेवानिवृत्तवाक्लीलखरेलक्ष्मणशर्मणा सागरवास्तव्ये पञ्चत्रिंशद् विख्याताङ्गलकवितानां हृद्यसंस्कृतभाषया विहितोऽनुवादोऽभिनवप्रयोगो वर्तते। अस्मिन् काव्यसंग्रहे वर्डस्वर्थ कवेः' वी आर सेव्हन्' लांगफेलो' इत्याख्यस्य 'साम ऑफ लाइफ' आदि सुप्रसिद्ध कवितानां

समावेशोऽस्ति । संस्कृतानुवादेषु विविधप्राचीनछंदांसि प्रयुक्तानि । इत्थं गीर्वाणवाण्या नवनवाशयाभिव्यञ्जनक्षमत्वं नूतनसरणीषु स्पष्टमाविर्भवति ।

अर्चना–स्तुति–प्रशस्ति–विवाहसमारोह–वर्धापनदिवस–रजतहीरकादिमहोत्सव–अभिनन्दनामंत्रणस्वस्तिवाचन–समस्यापूर्ति–काव्यस्पर्धा–कविसम्मेलनादौ संस्कृतकाव्यनिर्झरिणी नित्यं संप्रवर्तते । भक्तिभावनयेव राष्ट्रियभावनया स्नेहवशाद् वाऽऽशुकवित्वं प्रकटयद्भिर्देववाण्याः सेवा मध्यप्रदेशेऽपि सश्रद्धं विहिता । यदाकदाचिदेवंविधकवितानां प्रकाशनं पत्रिकासु भवति । रावले श्यामलालः, रामदत्तशास्त्री, पद्मनारायणशास्त्री, गोस्वामिधनगिरिः, भगवतीप्रसादः, मथुराप्रसादः, रघुपतिशास्त्री, बदरीप्रपन्नाचार्यशास्त्री, मुसलगांवकरः, हसूरकरशास्त्री, करमलकरशास्त्री, डा० तारानाथव्यासः, डॉ० श्रीमतीभवालकर वनमाला, पन्नालालजैनः, राधावल्लभत्रिपाठी–इत्यादयोऽनेके मध्यप्रदेशीयाः संस्कृतकाव्यपरम्परां प्रवर्तयन्ति ।

## गद्यं चम्पूश्च

मध्यप्रदेशे दशमशतकस्य धनपालः सर्वप्रथमः श्रेष्ठो गद्यकारः । स तु धाराधीशस्य मुञ्जस्य सभाश्रितः । तेन बाणस्य कादम्बरीशैलीमनुकृत्य तिलकमञ्जरी प्रणीता यस्यां परमारवंशस्य प्रशस्तेरारभ्य तिलकमञ्जरीसमरकेतुनामकयोः काल्पनिकनायिकानायकयोः प्रणयकथा चित्रिता । धाराधीशो भोजः स्वयमेव शृङ्गारमञ्जरीनाम्नीमाख्यायिकां चम्पूरामायणं च विरचितवान् ।

अष्टादशशतके बुन्देलखण्डशासकस्य सभासिंहस्य समापंडितः शङ्करदीक्षितो गङ्गावतरण-चम्पूं पुरातन-चम्पूशैलीं समासबहुलामनुसृत्य प्रणीतवान् । वाराणसेयमहाराज चेतसिंहस्य च प्रशस्तौ शङ्करचेतोविलासाख्या द्वितीयापि चम्पूस्तेन विरचिता ।

ओरछायां वीरदेवसिंहस्याश्रये ( १६०५–२७ ई० ) मित्रमिश्रेण श्रीकृष्णभगवतो बालजीवनमवलम्ब्याऽऽनन्दकन्दचम्पू ग्रन्थस्य रचना कृता ।

रीवायां बान्धवनरेशवीरभानोः शासनकाले (१५१५–५४ ई० ) भानुकर कविः कुमारभार्गवीयचम्पूं प्रणिनाय । एष ग्रन्थस्तु निर्देशमात्रेण ज्ञातोऽधुनाऽनुपलब्धः । वीरभानुतनयो राजा वीरभद्रदेवः ( १५५४–५६ ) स्वयं दशकुमारपूर्वकथासारस्य लेखक आसीत् । तस्याश्रये पद्मनाभमिश्रभट्टाचार्यः स्वस्वामिनो वीरभद्रदेवस्य चरित्रविषयक-वीरभद्रदेवचम्पूं व्यरचयत् ।

एतदपि चम्पूकाव्यं प्राचीनचम्पूशैलीमेवोद्धरति । रीवाधीशो विश्वनाथसिंहस्तु ( १८३३–५४ ई० ) रामचन्द्राह्निकाख्यायां भक्तिप्रवणायां स्वरचनायां चम्पूसरणिमङ्गीकृतवान् किंतु तत्र पदलालित्यं रमणीयं मधुरं च विद्यते । यथा भगवतो दैनिक कार्यकलापचित्रणे स्नानं वर्णयति—

सख्यः समागत्य…कलिन्दकन्यका इव कमलिनीदलपुटैः…सरस्वत्य इव दरदलितकोकनदकोरकैः काश्चित् कलशहस्ताः…विविधरूपधरा गङ्गा इव प्रभातपुण्डरीकैः रघुनन्दनं स्नपयामासुः ।

विंशशतके मध्यप्रदेशे चम्पूरचनापवादात्मकैव । यथा शतकारम्भे सदाशिव-सीताराम-मुसलगांवकरस्य ग्वालियर-शासकप्रशस्तिरूपा शिंदेविजयचम्पूः । ग्वालियरनगरे पद्मावती–परिणयचम्पूर्नामान्या चम्पूर्विरचिता । उज्जयिनीय-गोपीकृष्णशास्त्रिणा पण्डितसूर्यनारायण-व्यास-पितुश्चरित्रं श्रीमन्नारायण-व्यासचरित-नाम्नि लघुपुस्तके चम्पूशैल्या लिखितम् । सामासिकपदावलीं क्लिष्टशैलीं प्रति च पराङ्मुखा विंशशतकीयाः संस्कृतलेखकाः चम्पूशैलीं विहाय प्राञ्जलसरल-सुबोध-गद्यसरणिं प्रति विशेषाकृष्टाः प्रतिभान्ति । तेषां रचना अप्यल्पकाया जाताः । उपन्यास–लघुकथादयोऽभिनवलेखनविधाः प्रचलिताः ।

इन्दोरसंस्कृतमहाविद्यालये भूतपूर्वप्राध्यापकः ख्यातिंगतः संस्कृतपण्डितः श्रीपादशास्त्री हसूरकरः 'संस्कृतभारत–नररत्नानि' शीर्षके ग्रन्थसमुच्चये पञ्चदशचरित्रग्रन्थान् गुम्फितवान् । सुगमपरिमार्जित संस्कृतेन प्रस्तुतानि राणा-प्रताप–शिवाजी–रामदास–वल्लभाचार्य–गुरुनानक–राजस्थानसतीत्यादीनां भारतीय–विभूतीनां चरित्राणि । उपर्युक्तेषु पञ्चदशसु षड़ेव पुस्तकानि प्रकाशितानि । शेषाणि हस्तलिखितरूपेणैवोपलभ्यन्ते ।

अन्यतम इन्दोरस्थशिक्षकः सोमनाथशास्त्री वृत्तदशकुमारचरिते दशकुमार चरितस्य सारं प्रस्तौति । १९३४ खिस्ताब्दे सागरे पन्नालालजैनेन श्रीपालचरितं गद्ये विरचितम् । राष्ट्रियभावनया धार्मिकश्रद्धया वा बालबोधाय वा चरित्रग्रन्थानां प्रणयनं यथा पद्ये तथा गद्येऽपि सुगमसंस्कृतभाषया प्रस्फुटितम् ।

मध्यप्रदेशे संस्कृतोपन्यासस्य प्रवर्तकोऽस्ति डॉ० रामजी-उपाध्यायः सागर-विश्वविद्यालये संस्कृत विभागाध्यक्षः । श्रीकृष्णसुदाम्नोश्चरितमधिकृत्य विरचिते 'द्वा सुपर्णा' नामक उपन्यासे नवीनपात्राणि परिकल्प्य मूलकथायां काल्पनिक–घटनाः संयोज्य चाधुनिक युगोपयोगिनो भारतस्य भव्यसंस्कृते-

रुदात्ततत्त्वानां महत्त्वं प्रदर्शितम् । आदर्शविश्वविद्यालयस्य, गुरुशिष्ययोः सौहार्दस्य, स्वस्थग्रामीणजीवनस्य, जीवनोपयोगिस्त्रीशिक्षायाः, ब्राह्मणानां त्यागमयतपोनिष्ठाध्यात्मवृत्तेः, सर्वोदयार्थमनासक्तकर्मणश्चोज्ज्वलं निदर्शनं रोचकेऽस्मिन् लघूपन्यासे पुरस्कृतम् । भाषापि प्राञ्जला परिष्कृता सरसा च सन्धीनां परिहारेण बालानामपि सुगम्या प्रेरणाप्रदा च । यथा—

'यथा सुदाम्नः परिश्रमेण नद्याः तटे आश्रमवसतिः समभवत् तथैव कौमुद्याः कल्पनया सुदाम्नो ग्रामे स्त्रीणां संस्थाः संवर्धिताः । अचिरमेव तत्र महत् परिवर्तनं समजनि । तथा हि—कन्यकाना कृते पाठशाला प्रवर्तिता ।··· ग्रामवधूनां कृते प्रौढा शाला उद्घाटिता ।···स्वाभाविको भवति संवादः जनस्य विविध-प्रवृत्तीनाम् ।···सुशिक्षिताः नार्यः ग्रामस्य स्वच्छीकरणे व्यापृता बभूवुः । तस्मै प्रयोजनाय स्त्रीणामेका सभा समायोजिता ।'

यथावसरं स्थाने-स्थाने वैदिकमन्त्राणां सूक्तीनां च सम्यक् समावेशोऽस्योपन्यासस्यान्यद् हृद्यं वैशिष्ट्यम् । मन्त्राणां सुरुचिपूर्णा व्याख्यापि प्रेरणाप्रदा यथा—

ब्राह्ममुहूर्ते—विद्यार्थिनः गुरोः सविधे सन्ध्याविधिं सम्पादितवन्तः । तथा हि—ओऽम् भूः, भुवः, स्वः । तत् सवितुर्वरेण्यं भर्गो देवस्य······'। यथा कालं महर्षिणाऽस्य मन्त्रस्य व्याख्या कृता ।—"न केवलं स्वग्रामः, जनपदः देशो वा स्वकीयः इति मन्तव्यम्, अपि तु सर्वोऽयं भूलोकः युष्माकं···वर्तते । तद्यथा पूर्वः अनूचानैः समर्थितं—"वसुधैव कुटुम्बकमिति······ ।

त्रिपाठिभागीरथीप्रसादस्य मङ्गलमयूखनामोपन्यासोऽप्रकाशित एव । सागर विश्वविद्यालयात् पदवीधरेण युवलेखकेन राधावल्लभत्रिपाठिनेदानीमेव व्यङ्ग्यप्रधानाधुनिकाख्यायिका महार्कविकंटकः रचिता प्रकाशिता च । अद्यतने जीवने पदे पदे प्रयुक्तानां हिन्दीकृताङ्गलशब्दानां यथेच्छं संस्कृतीकरणेनास्मिन् संवादप्रवाहोऽकृत्रिमो रोचकश्च जातः । यथा—बाष्पगन्त्री ( रेल ), यात्रापत्तं ( टिकट ), कार्गलमुद्रा ( करेन्सी नोट ) बेसनभर्जिका ( बेसन की पकौड़ी ) आदि । "थर्ड येन डिवीजनं ह्यधिगतं शास्त्रिपरीक्षार्णवे" एवमादिषु मूलशब्दप्रयोगो हास्यरसं तनोति । दैनंदिनवार्तालापयोग्या प्रवाहपूर्णा भाषा सभ्यविनोदश्चास्य नवलेखकस्योज्ज्वलभविष्यं सूचयतः ।

भागीरथीप्रसादत्रिपाठिनः 'कथासंवर्तिका' 'टालस्टायकथाः' च, गणपति शङ्करशुक्लस्य 'लोककथाः, अन्याश्च पत्रिकासु प्रकाशिता लघुकथा अद्यत्वेऽत्र प्रचलित लघुकथासाहितस्य परिचायिकाः सन्ति ।

उपन्यास कथा-चरित्राद्यतिरिक्तं ज्ञानविज्ञानविषयेष्वपि संस्कृतलेखकानां लेखनी न विरता। भारतीयसंस्कृतेः परिचायको ५१२ पृष्ठात्मको 'भारतस्य सांस्कृतिकनिधि'र्नाम विद्वताप्रचुरो ग्रंथः प्रोफेसर रामजी उपाध्यायेन सपरिश्रमं प्रणीतः पुस्तकेऽस्मिन् प्राचीनसंस्कृतिधाराया विविधाङ्गोपाङ्गानां सम्यक् पर्यालोचनं सविस्तरं वैज्ञानिकप्रणालीमवलम्ब्य कृतम्। संस्कृतेः प्रवृत्तीनां परिज्ञानाय विशिष्टानुसंधानपद्धतिरनुसृता। एतादृशस्य ग्रन्थस्य संस्कृतभाषायामपूर्वं स्थानं विद्यते। भाषा विषयानुरूपा प्रौढाऽपि सरला। लघुवाक्यप्रयोगः सर्वेषां सुबोधाय भवति।

प्राध्यापकपदात् शासकीय शिक्षाविभागाधिकारपदं गतो भोपालस्थो डा० प्रभुदयाल-अग्निहोत्री १९५७ खिस्ताब्धे संस्कृतभाषयाऽभिनवमनोविज्ञानं नाम ग्रंथ प्रणीतवान्।

महेशचन्द्रचूडामणेर्विशिष्टाध्ययनं नाम पी.एच.डी. उपाधिकृते सागरविश्वविद्यालये स्वीकृतः शोधप्रबन्धः जगदीशचन्द्रमिश्रेण १९६४ खिस्ताब्दे संस्कृतभाषया प्रस्तुतः।

साहित्यदर्शनकाव्यशास्त्रव्याकरणादि बहुविधविषयेषु लेखाः संस्कृतपत्रिकासु निरन्तरं प्रकाश्यन्ते। सागरविश्वविद्यालयस्य संस्कृतपरिषदः सागरिका त्रैमासिकीऽनुसन्धानपत्रिका प्रवर्तते। तत्र विगतदशवर्षेभ्योऽखिलभारतीयसंस्कृत-विद्वत्तल्लजानां शोधनिबन्धाः प्रकाश्यमानाः सन्ति।

इत्थं संस्कृतभाषाद्यापि विविधक्षेत्रेषु प्रयोगयोग्येति सुस्पष्टमेव।

## नाटकसाहित्यम्

नाटककारेष्वद्यावधि सर्वश्रेष्ठः शाकुन्तलकारः कालिदास मध्यप्रदेशीय एव उज्जयिनी च तस्य कर्मभूमिरित्याधिकतरविदुषां मतम्। तस्यैवान्ये द्वे नाटके मालविकाग्निमित्रं विक्रमोर्वशीयं च सुप्रसिद्धे। यत्र तत्राभिनीयन्ते नाटकान्येतानि सोत्साहं च दर्शकैरभिनन्द्यन्ते। मृच्छकटिकस्य प्रणेता शूद्रकोऽपि प्राचीनवाङ्मये प्रथित उज्जयिन्या राजा शूद्रक एवेति यत् कैश्चित् प्रतिपाद्यते तत् तु प्रमाणाभावात् संदेहास्पदमेव। चतुर्भाणीति प्रसिद्धे नाटकचतुष्टये 'पद्मप्राभृतक'मित्येकं भाणमस्य शूद्रकस्यैव कृतिः, अपरो भाण 'उभयाभिसारिका' इति वररुचे रचना, स च वररुचिरप्युज्जयिन्यां विक्रमादित्यस्य राजसभायां नवरत्नेष्वन्यतम आसीत् इत्यपि समर्थ्यते। कालिदास इव समादृत उत्तररामचरित-महावीरचरित-मालतीमाधवादीनां प्रणेता भवभूतिः काले काले उज्जयिन्यामुवासेति सम्मतम्।

मायुराजो नवशतकात् प्रागेव चेदिमण्डले कलचुरिवंशजः शासक आसीत्। तेन विरचित-मुदात्तराघवमिति नाटकं बहुकालानन्तरं प्राप्तमेव। मायुराजस्य राजधानी मध्यप्रदेशे माहिष्मत्यासीदिति तर्कस्तु विकल्पस्य-विषयः।

नवमदशमयोः शतकयोः सन्धिकाले माहिष्मत्यां कलचुरिनृपाश्रये मुरारि-कविनाऽनर्घ्यराघवस्य प्रणयनं कृतम्।

राजशेखरस्य चत्वारि रूपकाणि प्रसिद्धानि सन्ति। दशाङ्कात्मकं प्रदीर्घं बालरामायणं, अपूर्णं बालभारतं, नाटिका विद्धशालभञ्जिका, प्राकृतसट्टकं कर्पूरमञ्जरी चेति। अनेन कविना कलचुरिनृपतेः सभायां दशमशतके त्रिपुर्यां विद्धशालभञ्जिकानाटिकां प्रणीय तस्या नाट्यप्रयोगोऽपि कारितः।

दशमशतके धारायां मुञ्जस्य सिन्धुराजस्य चाश्रये जैनाचार्येण महासेनेन प्रद्युम्नचरितं नाटकं प्रणीतम्। एकादशशतके धाराधीशभोजेन नष्टप्रायस्य हनुमन्नाटकस्य सम्पादनं कारितम्। छायानाटकं महानाटकं चेत्यपरनामेदं नाटकमितरेभ्यो वैशिष्ट्यं भजते। भिन्नेव नाटकविधाऽस्मिन्नवलम्बिता। महाकाव्यसरण्या रचितमिदं सुदीर्घं नाटकं भाषामाधुर्येण भावसौंदर्येण च विशिष्यते। अस्य नूतनविधायास्तु प्रचारो विकासो वा परवर्तिनाटककारैर्न कृतः।

परमारनृपार्जुनवर्मणो राजगुरुणा मदनेन धारायां १२१३ ख्रिस्तसंवत्सरे श्रीहर्षस्य रत्नावली-नाटिकामुपजीव्य पारिजातमञ्जरीनाटिका विरचिता।

रायपुरस्थकलचुरिवंशीयराजयोर्हरिवर्मरमणमल्लदेवयोः सभापण्डितस्य रामदेवव्यासस्य त्रीणि छायानाटकानि 'रामाभ्युदय–पाण्डवाभ्युदय–सुभद्रापरिण-येत्याख्यानि सन्ति (१४०२-१४१५ ई०)।

बुन्देलखण्डशासकसभासुन्दरस्य राजसभायां शङ्करदीक्षितेन प्रद्युम्न-विजय इति नाटकं विरचय्याष्टादशख्रिस्तशतके छात्रसालपौत्रस्यास्य सभा-सुन्दरस्य राज्यारोहणोत्सवे पन्नायामभिनीतम्।

रीवायां बान्धवनरेशो विश्वनाथसिंहः (१८८३-६५ ई०) आनन्द-रघुनन्दनं नाटकं प्रणीतवान्। रामभक्तिपर-मेतत् सप्ताङ्कं नाटकं परम्परागत-नाट्यविधामवलम्ब्य विरचितम्। दीर्घक्लिष्टसंवादैः सह पद्यानामपि समा-यशोऽत्र वर्तते। रामाणीयकथापात्राणां नामपरिवर्तनं विधाय रामोऽत्र हितकारी, सीता महिजा, लक्ष्मणो धराधरः, रावणो दिक्शिराः, हनुमान् त्रेतामल इति नामभिः प्रस्तुताः।

ऊनविंशतिशतकस्यान्तिमे चरणे ग्वालियरनगरे रघुनाथविष्णुवेलंकर विरचितो जगन्मोहनं नाम भाणः प्रकाशितः। ततो विंशशतकारम्भे इन्दोर-संस्कृतविद्यालये भूतपूर्वप्राध्यापक-जगन्नाथटिल्लू-अभिधस्य 'उदयप्रेमलीयं कीर्तिमन्दिरं, साम्राज्यप्रदर्शनं'चेति नाटकत्रयं श्रूयते, न तु प्राप्यते।

अमरकण्टके शिक्षकपदस्थो विष्णुदत्तत्रिपाठी ( जन्म १९०८ ) द्वे नाटके विरचितवान्। दन्तकथानुसारिकालिदासजीवनमधिकृत्य विद्योत्तमा इति नाटके वैदुष्यगर्विताया कालिदासपत्न्या विद्योत्तमाया चरित्रं प्रधानतया चित्रितम्। भाषा चातिसरला। अनसूयात्रिचरितचित्रणे शान्तरसपरम् 'अनसूया चरितम्' इति सप्ताङ्कमपरमस्य नाटकम्। अस्मिन् प्रासङ्गिककथावस्तुरूपेण भारतीयसंस्कृतिं चित्रितुं नूतनसंयोजनानि, सुपरिचित-सूक्तीनां प्रयोगश्च, भाषायाश्च सारल्यं वर्तन्ते।

कल्याणपुरवासिनां रामजीवनमिश्रेण सारस्वत-मित्याख्ये स्वनाटक अद्यतनेऽपि युगे संस्कृतभाषाया उपादेयता प्रतिपादिता।

गताब्ददशके नाटयलेखनविधायां नूतनप्रवृत्तीनामाविर्भावेण महत्परिवर्तनं परिलक्ष्यते। आधुनिकरङ्गमञ्च अभिनयार्थं पाश्चात्यनाट्यविधानुसारिणां भारतीयभाषासु लोकप्रियतां गतानां नाटकानां सरणिः संस्कृतनाटयलेखनेऽप्यङ्गीकृता। रूपकाणामेतेषां कलेवरं परिमितं येन द्वित्रिहोरा-वधिरेवैषामभिनयकालः। तथैव-एकाङ्क- नभोनाटय-गीतनाट्य-संगीतिकादीनामपि प्रचलनं प्रावर्तत। नाटयसंस्थाः, नाटयस्पर्धाः, विद्यालयेषु संस्कृतनाटयाभिनयः, नाट्यमहोत्सवाः, आकाशवाणीतः संस्कृतकार्यक्रमप्रसारणं, सभासम्मेलनेषु सांस्कृतिककार्यक्रमाणामायोजनं, संस्कृतग्रन्थेभ्यः पारितोषिकवितरणमेतदादि सर्वं संस्कृतनाट्यसाहित्यसंवर्धनाय संजातम्।

महाराष्ट्रीयोऽपि भोपाले शासकीयकार्ये रतः श्री० भी० वेलणकरो नवशैलीनाटक विरचने प्रसारणे चाग्रेसरः। भोपालस्थेन तेन 'रणश्रीरङ्गः' इति शीर्षकेणैका रणेनापि स्वातन्त्र्यरक्षणं नाहिंसाव्रतविरुद्धमिति प्रतिपादयन्ती नाटक त्रयी विरचिता। अस्यां कालिन्दीति गद्यपद्यमये नाटके गङ्गा-यमुना-सूर्य-हिमालयादीनां मानवीकरणेन प्रतीकात्मक काल्पनिकपात्राणि प्राचीन-राजपरिवाररूपेण निर्माय हिंसाऽहिंसयोः, कर्मसंन्यासयोश्च संघर्षश्चित्रितः। त्रयोऽङ्का अस्मिन् नाटके। द्वितीयं नाटकं कैलासकम्प इति गेयं गीतनाट्यम् ( ओपेरा )। अङ्कत्रयात्मकेऽस्मिन् भारतोपरिकृतं चीनानामाक्रमणं, द्रुतं निवर्तनं शान्तेरुपायाश्च नाट्यस्य वस्तु, कैलासः शची देवेन्द्रः शङ्करो गणेशः

सरस्वाती स्वर्गङ्गादीनि कैलासनिवासि पात्राणि, प्राचीनछन्दःसु विरचितानि विभिन्नरागेषु स्वरबद्धानि च पद्यानि । क्वचिन्नूतनच्छन्दः प्रयोगोऽपि विद्यते । 'स्वातन्त्रलक्ष्मी' झांसीरानीलद्मीबाई जीवनमधिकृत्य त्र्यङ्कं गद्यपद्यमयं नाटकम् । 'प्राणाहुती' नामापरोऽपि नाट्यद्वयसंग्रहो भोपालकार्यकाले तेन प्रणीतः 'हुतात्मा' नाम दधीते ऋषेरात्मबलिदानकथामवलम्ब्य गीतनाट्यं नभोनाट्यरूपं कतिप्राचीनछन्दःसु तथैवाव्याख्यातमात्राबद्धवृत्तेषु ६४ पद्येषु चैकाङ्के विरचितमन्याच राज्ञी दुर्गावतीति गद्यपद्यमयैकाङ्कनभोनाट्यं गोंडराज्ञीदुर्गावत्या जीवनाद् कतिचिद् बिन्दून् संगृह्य प्रणीतमस्मिन् संग्रहे प्रकाशिते । मेघदूतोत्तरनामान्यद् गीतनाट्यं ( ओपेरा ) कवेरस्यैव कृतिः । महाकविकालिदासस्य मेघदूतमवलम्ब्य यक्षशापहेतुं व्रतसमाप्तौ यक्षपत्न्यायोजितपूजनस्वीकारे परिकल्प्य शापावसाने कुबेरप्रसादेन प्रेमिविरहिणोः पुनर्मिलनं च दर्शयित्वाऽपूर्णकथानकस्य पूर्तिरस्मिन् नाट्ये कृता । प्रसङ्गानुसारं स्थाने स्थाने कालिदासीयश्लोकान् संयोज्य नूतनछन्दःसु गेयगीतानां रचनां कृत्वा विविधशास्त्रीयरागेषु स्वरबद्धानि च विधाय कविना स्वकाव्यप्रतिभा प्रस्फुटिता । संस्कृतवाण्या अभिनवविलासभूतानि गीतनाट्यानि नभोनाट्यानि नाटकानि चास्य सर्वाण्या कारावाण्या ध्वनिक्षेपितानि, नैकवारं च रङ्गमञ्चेऽभिनीतानि रसिकहृदयावर्जकानि च जातानि । सरला सुमधुरा प्रसादपूर्णा चास्य शैली निदर्श्यते—

यक्षपत्नी —( सकरुणं, सारिकां प्रति )

स्मरसि त्वं रसिके, सारिके
ननु तस्यासीः प्रिया दारिके ।
सुमधुरवचना पञ्जरनिलया
मम विरहिण्याः कालयापिका ॥

मेघदूतोत्तरीयम् पृ० २१

यत्रा वा—

राज्ञी— परकीयनिष्कासनमेव । किमन्यत् ।

स्वराज्यं हि श्रेयः शतगुणितमात्मजनहितं
सुराज्यं न प्रेमः परविहितमव्युत्तममपि ।
शिशुः पादाभ्यां स स्खलितगतिरप्यत्र चलितः
स्वपङ्गुत्वं जह्यात्, न तु परभुजासीनमनुजः ॥

स्वातंत्र्यलक्ष्मी पृ० १०६

मराठीतोऽनूदितं संगीतसौभद्रं, कालिदासचरितं इति नाटके, स्वातन्त्र्य-चिन्ता, स्वातन्त्र्यमणिः, मध्यमपाण्डवः इति नभोनाट्यानि जन्म रामाणस्येति संगीतबालनाट्यं चानेन कविना विरचितानि । सुरभारतीति नाट्यसंस्थां भोपालनगरे सस्थाप्य संस्कृतनाट्य-प्रकाशनाभिनयप्रचारादिकार्ये महज्जागरणं च लेखकेन विहितम् । अस्य मतेन जनसाधारणेषु संस्कृतानुरागाभिवृद्ध्यर्थं मनोरंजकविषया सुबोधसंस्कृतभाषायाः पुरस्करणमेवैतेषां नाटकानामुद्दिष्टमस्ति ।

अनेनैवोद्देश्येन सागरविश्वविद्यालये रीडरपदस्थ-श्रीमत्य भवालकरवनमालया संगीत-नाट्य-संस्कृतानां सामञ्जस्येन त्रीण्यपि प्रति संस्कृत-संगीतिका-द्वारा जनाभिरुचिं विवर्धयितुं द्वे संगीतिके ( ओपेरा ; उपनिबध्याभिनीते । 'रामवनगमनं' नाम दृश्यत्रयात्मिका रामकथाश्रिता सङ्गीतिका सर्वजनसुखबोधाय वर्तते । सरलसंस्कृतेन विविधप्राचीनवृत्तेषु रचितानि पद्यानि भावानुकूलरागतालयुत संगीतेन संयोज्य नेपथ्याभिनयादिभी रङ्गमञ्चे प्रस्तुतमिदं नाट्यं सकलरसिक मनोहारि जातम् । पद्यमेकमुदाह्रियते यथा—

रामः—( शिखरिणी—राग—भीमपलास, ताल तीव्रा )

अलं वैक्लव्येन त्वमसि हृदयं जानकि मम
त्वमेव प्राणा मे गतिरपि विना त्वां मम कुतः ।
त्वया सार्धं लोकत्रितयमपि कल्पान्तमरतो
दिवीव स्वर्भोगे क्षणमिव च यास्यन्ति दिवसाः ॥

रामवनगमनम् पृ० १३

द्वितीया सङ्गीतिका कुमारसंभवाश्रिता 'पार्वतीपरमेश्वरीयं नाम । कालिदासस्य कल्पनायामनुसरणेऽपि नाट्यानुकूलं चरित्रचित्रणार्थमभिनयदृष्ट्या च नवीन कल्पनानामुद्भावनमत्र वर्तते । तथैव मदनदहनं, विविधर्तुषु पञ्चाग्निमध्ये वर्षायां हिमपाते च स्थितायाः पार्वत्यास्तपो, ब्रह्मचारिणः शङ्कररूपेण प्रकटनादि रङ्गमञ्चे प्रदर्श्य नाट्यस्यास्य सौष्ठवं परिवर्धितम् । संगीते-स्वर-योजना-भावानुरूपा वर्तते । अस्यानेके नाटयप्रयोगा अभिनन्दिताः सर्वत्र । अनेन रसिकतोषणेन संगीतिकाया अभिनेयत्वे साफल्यं प्रमाणितम् । अनयोः सङ्गीतं नाटयप्रयोगेप्सूनां मार्गदर्शनाय लेखिकया ध्व नमुद्रितम् । गीतस्योदाहरणं यथा—मेना (पृथ्वी, राग-कीरवाणी, एकतालः)

श्रुतं पशुपतिस्तपश्चरति केनाचिद्धेतुना
तथापि तनुजां नु यौवनगतामुपेक्ष्येत कः ।

वरास्त्रिभुवने न सन्ति किमुतान्यदेवोत्तमा
उदासितमना पितेति तु विभोऽस्मि चिन्तातुरा ॥
(पार्वतीपरमेश्वरीयम् पृ. ६)

अनयैव लेखिकया गद्ये सामाजिक एकाङ्कः पाददण्डश्चीनाक्रमणस्य पार्श्वभूमिं परिकल्प्य मानवप्रेम्णि हृदयसौन्दर्यस्यैव साफल्यप्रतिपादक आधुनिकसुशिक्षितयुवयुवतीनां त्यागभावनायाः प्रकाशकः प्रणीतः। आशाकवाणीतो ध्वनिक्षेपितोऽयम्। गीतनाट्याभिनयार्थं (वेले) रागेषु गेयं पार्श्वसंगीतं 'सीताहरणं', शालेयछात्राभिनययोग्यानि 'अन्नदेवता' 'भक्तध्रुवमि'त्यादि लघुरूपकाण्यपि लेखिकया विरचितानि।

सागरविश्वविद्यालयस्य भूतपूर्व छात्र उदयपुरे विश्वविद्यालये व्याख्याता राधावल्लभत्रिपाठी 'प्रेमपीयूषम्' इति भवभूतेः प्रणयकथां परिकल्प्य नाट्यमेकं रचितवान्। सहजसरलसंवादै रोचकमभिनेयमिदं विद्यते। भागीरथीप्रसादत्रिपाठिनः 'कृषकाणां नागपाश' इति नभोनाट्यं ग्रामीणकृषकाणां विपदां चित्रणं प्रस्तौति। गोस्वामिधनगिर्यादीनामन्येषामपि लघुरूपकाणि पत्रिकासु प्रकाशितानि सन्ति।

## उत्कीर्णलेखाः

मध्यप्रदेशीयसंस्कृतस्यान्यदप्येकं स्रोत उत्कीर्णलेखेषूपलभ्यते। समस्तमध्यप्रदेशे विविधराज्येषु नृपाश्रितप्रशस्तिकारैः सरसकाव्यशैलीमाश्रित्यैनेकेषु शतकेषु रचिताः प्रशस्तयो यत्र तत्र शिलालेखेषु ताम्रपटेषूत्कीर्णा उपलब्धाः। तत्तद्युगेषु प्रतिभाशालिकवीनामास्तित्वं राज्ञां गुणग्राहित्वं च प्रमाणयन्ति। एरण–उदयगिरि–विदिशास्थिता गुप्तकालिकाभिलेखाः, यशोधर्मणोऽन्याश्च दशपुरप्रशस्तयः, प्रतीहारवंशीयभोजनृपस्य ग्वालियरप्रशस्तिः, परमारनृपतिभोजस्य ( इन्दौरनिकटे ) बेतमाभिलेखः, धङ्गनृपतेः खजुराहोऽभिलेखश्चास्य निदर्शनं सन्ति। एतेषां काव्यगरिमोदाह्रियते। यथा—दशपुरे कुमारगुप्तस्य शासनकाले पट्टवायश्रेण्या विशीर्णैकदेशं सूर्यमन्दिरं ४७३ खिस्तसंवत्सरे संस्कारितम्। तदा तत्रोत्कीर्णः शिलालेखो वत्सभट्टिना विविधछन्दःसु चतुश्चत्वारिंशच्छ्लोकेषु निबद्धः। तत्र दशपुरं वर्णयति कविः—

स्वपुष्पभारावनतैर्नगेन्द्रैर्मदप्रगल्भालिकुलस्वनैश्च।
अजस्रगाभिश्च पुराङ्गनाभिर्वनानि यस्मिन् समलङ्कृतानि ॥
चलत्पताकान्यबलासनाथा–न्यत्यर्थशुक्लान्यधिकोन्नतानि।
तडिल्लताचित्रसिताभ्रकूटतुल्योपमानानि गृहाणि यत्र ॥

यथा वा नवमशतके बालादित्यविरचितग्वालियरप्रशस्तौ प्रशस्तशैल्या कविकुलगुरोः शाश्वतादर्श एवाभिव्यज्यते । तद्यथा—

अर्थिभिर्विनियुक्तानां सम्पदां जन्म केवलम् ।
यस्याभूत् कृतिनः प्रीत्यै नात्मेच्छाविनियोगता ॥

कालिदासादीन् स्मारयन्त एते कविवरा दीर्घकालावधौ काव्यपरम्परामनुबध्नन्ति ।

## शास्त्रं तन्त्रञ्च

उज्जयिन्यां विक्रमादित्यस्य तथाकथितनवरत्नेषु पञ्च विविधशास्त्रपारङ्गता विद्वद्वरा ग्रन्थकारा आसन् । तथा हि—क्षपणको यदि जैनपण्डितः सिद्धसेनदिवाकर एव भवेत् तर्हि स ज्योतिषे तन्त्रे च विशेषज्ञ आसीत् । अमरसिंहो 'नामलिङ्गानुशासन'–कोषकर्ता, 'वाररुचनिरुक्तसमुच्चय'–कर्ता वररुचिः, आयुर्विद्याया अनेकग्रन्थानां प्रणेता धन्वन्तरिः, गणितज्योतिषविद् बृहत्संहिता–बृहज्जातकादिग्रन्थानां कर्ता वराहमिहिरश्च । एतेषां देशकालविषये तु विवादो वर्तते । एवं मध्यप्रदेशीयसाहित्यसंवर्धन एतेषां योगदानमपि संदेहानास्पदमेव । अतो दशमशतकीयमुञ्जपरमारादारभ्य मध्यप्रदेशीयशास्त्रग्रन्थानां यथार्थः परिचयः प्राप्यते ।

## काव्यशास्त्रम्

धारायां मुञ्जस्य सभाश्रितो धनञ्जयो दशरूपकस्य निर्माणेन काव्यशास्त्रकारेषूच्चैः स्थानं प्राप्तवान् । अस्य ग्रन्थस्य 'अवलोक'–टीका धनञ्जयस्य भ्रात्रा धनिकेन विरचिता । अनयोः समसामयिको हलायुधः पिङ्गलकृतछन्दःसूत्राणां भाष्यकर्ता धारानिवास्यासीत् । सरस्वतीविलासमण्डितो धाराधीशो भोजः सरस्वतीकण्ठाभरणस्य शृङ्गारप्रकाशस्य च रचयितासीत् । द्वे अपि ग्रन्थरत्ने काव्यशास्त्रे महत्त्वपूर्णे प्रसिद्धे च । त्रयोदशशतके धारानृपाश्रये जैनभाष्यकाराशाधरेण रुद्रटकाव्यालङ्कारभाष्यमन्ये च चतुर्दशग्रन्थाः प्रणीतानि ।

बान्धवनरेश वीरभानोराश्रये भानुकरेण चतुर्णां काव्यशास्त्रग्रन्थानां—रसमञ्जरी–रसतरङ्गिणी–शृङ्गारदीपिका–ऽलङ्कारतिलकानां रचना कृता । तत्र रींवायामेव नरेशविश्वनाथसिंहस्याश्रितो (१७८९–१८५४ ई०) दामोदरशास्त्री वाणीभूषण–नाम्नश्छन्दसां लक्षणग्रन्थस्य कर्ताऽभूत् । विश्वनाथसिंहस्यानुजेन राघवेन्द्रबलभद्रसिंहेन वृत्तिबोधः नाम लक्षणग्रन्थः श्रुतिबोधसरण्या प्रस्तुतः ।

विंशशतके इन्दोरमहाविद्यालये भूतपूर्वाध्यापको ( १९२३–२७ ई० ) गजाननरामचन्द्रकरमलकरशास्त्री लोकमान्यालङ्कार इत्यभिनवग्रन्थे अलङ्कारशतस्य सोदाहरणं परिभाषां कृतवान् । शतद्वयश्लोकात्मकेऽस्मिन्नलङ्कारग्रन्थे उदाहरणेषु लोकमानतिलकस्य जीवनविषयकाः श्लोकास्तेन सुगमसंस्कृतभाषया निबद्धा येषु शृङ्गाररसस्य लेशोऽपि परिहृतः । अतश्छात्राणां कृतेऽयतीवोपयुक्त एष ग्रन्थः ।

## दार्शनिकं धार्मिकं च साहित्यम्

धारायां ९३३ खिस्ताब्दे जैनमुनिदेवसेनेन 'दर्शनसार' नामको ग्रन्थो विरचितः । धारासभापण्डितेषु जैनधर्मीयैरनेकधार्मिकदार्शनिकग्रन्थानां रचना कृता यथा माणिक्यचन्द्रेण 'परीक्षामुखस्य' न्यायग्रन्थस्य चामितगतिना धर्मप्रकाशस्य ।

धारापतिमुञ्जस्याश्रये मम्मटभ्रात्रा 'उव्वटेन' यजुर्वेदभाष्यस्य प्रणयनं कृतम् । भोजः स्वयं योगसूत्रभाष्यग्रन्थस्य कर्ता आसीत् । रींवायां पद्मनाभमिश्रस्य राद्धान्तमुक्ताहारो नव च दर्शनग्रन्थटीकाः, प्रियादासस्य वैष्णवसिद्धान्तः, वेदान्ततत्त्वादिदशग्रन्थाः ( १८०३–१९ ई० ) रींवाराजगुरु रामसखेन्द्रस्य "द्वैतभूषणम्", रीवानरेश-विश्वनाथसिंहस्य तस्य गुरोः सभापण्डितानां च राधावल्लभीयमतप्रवर्तकब्रह्मसूत्रभाष्यं-तत्त्वमस्यर्थसिद्धान्तभाष्यादिविंशतिकल्पा संस्कृतवाण्या धर्म-दर्शनग्रन्थाश्च विगतशतकेषूपलब्धमध्यप्रदेशीयधार्मिक-रचनानां परिचायकाः सन्ति ।

विंशशतकीयदार्शनिकरचनासु टीकानामेवाधिक्यं वर्तते । इन्दोरनिवासिश्रीपादशास्त्रिहसूरकर-विरचिता मोक्षमन्दिरस्य द्वादशोसोपानावलीति मौलिको दर्शनग्रन्थस्तथा वेदान्तपरिभाषाटीका; कुसुमाञ्जलिटीका च; शिवपुरीस्थरामगोपालाचार्यकृता ( १९३२ ई० ) प्रमाणनवतत्त्वावलोकटीका ; लोकनाथशास्त्रिणः कारिकावलीटीका, माधुरीपञ्चलक्षणीटीका च; दतियास्थितपीताम्बरपीठस्वामिनः पञ्चोपनिषद्-शिवसूत्र-भक्तिसूत्र-ताराकर्पूरराजस्तोत्रादीनां संस्कृतभाष्याणि; पाण्डेयगौरीशङ्करस्य मनोरञ्जनी नाम सौन्दर्यलहरीटीका; स्वर्गीयनारायणत्रिपाठिनो मुमुक्षुसर्वस्वसारसंग्रहः, स्वरूपप्रकाशः, चिदम्बररहस्यं च, भाऊशास्त्रिणोऽध्यात्मविद्या; रघुनाथविष्णुवेलंकरस्य व्युत्पत्तिमण्डनमुपदेशमञ्जूषा च; हरिप्रसादद्विवेदिनो गीतार्थबिन्दुः कर्मयोगश्च; रींवातो बदरीप्रपन्नाचार्यस्वामिनो विशिष्टाद्वैतदर्पणं चान्यद् ग्रन्थत्रयं, अवधशरणस्य सख्यसिन्धुचन्द्रोदयः; विरूपाक्षवडियारस्वामिनः शास्त्रबोधो

लिङ्गाङ्गिधर्मप्रकाशश्च, पन्नालालजैनस्य धर्मकुसुमोद्यानं रत्नत्रयी द्वौ चान्यौ ग्रन्थौ, हिमांशुविजयस्य जैनसप्तपदार्थीत्यादयो मध्यप्रदेशेऽद्यतनेऽपि दर्शनादिगहनविषयेषु संस्कृतानुरागिणां रुचिं प्रमाणयन्ति ।

धाराधीशस्य भोजस्य पूर्तमार्तण्ड-दण्डनीतिव्यवहारसमुच्चय-चारुचर्येति ग्रन्थत्रयस्य ग्रन्थसूच्यां निर्देशो वर्तते । सप्तदशशतके ओरछाराजसभापण्डितस्य मित्रमिश्रस्य वोरमित्रोदयः, रींवायां ( १६८० ई० ) औपगविकृत मन्त्रकल्पद्रुमः, बान्धवनरेशविश्वनाथसिंहस्य धर्मशास्त्रत्रिंशत्-श्लोकी, इत्येते संक्षेपेण मध्यप्रदेशीया धर्मशास्त्रविषयका ग्रन्थाः सन्ति । जानकीवल्लभव्यासस्य शब्दकल्पद्रुमाख्यायी कृतौ ( १८८१ ) श्राद्धाय निंमन्त्रितस्यातिथये भोजनपानादिसत्कारविधानं सविस्तारं निरूपितमस्ति ।

## व्याकरणं कोषश्च

धाराधीशभोजस्य नाममालानुशासनं सिद्धान्तसंग्रहश्च आउफ्रेक्ट-ग्रन्थसूच्यामुपलभ्येते । ततो विश्वनाथशास्त्रिणः परिभाषेन्दुटीका, विज्जलदेवस्य विज्जलवाटिका च धारानगरे ऊनविंशशतके विरचिते । १९२४ खिस्तसंवत्सरे गोपीनाथशास्त्रिणा वैयाकरणभूषणसारं प्रणीतम् । भागीरथीप्रसादत्रिपाठिनो बीजवृक्षो बालबोधाय संस्कृतभाषया व्याकरणमस्ति । व्याकरणादिविषयेषु निर्मितानां ग्रन्थानां प्रचलनप्रसाराभावात् बहुशो लोपो वा अज्ञानं वा संभाव्यते ।

## ज्योतिषम्

धाराधिपभोजो ज्योतिषशास्त्रज्ञ आसीत् । राजमृगाङ्कः, राजमार्तण्डश्चेति ज्योतिषग्रन्थं द्वयं तेन विरचितम् । अन्येऽपि तस्य त्रीणि ज्योतिषग्रन्था आउफ्रेक्टग्रन्थसूच्यां निर्दिष्टाः सन्ति । बान्धवनरेशकर्णदेवेनापि प्रायः १२०० खिस्ताब्दे सारावली नामक ज्योतिषग्रन्थस्य रचना कृता । ब्रह्मगुप्तस्य ब्रह्मस्फुटसिद्धान्तोऽपि १२०७ संवत्सरे रचितः । उज्जयिनीयदीनानाथस्य सारसंग्रहः ( १८७४ ई० ), श्रीपतिभट्टस्य सिद्धान्तशेखरः, ज्योतिषरत्नामाला च, जबलपुरनिवासि लक्ष्मीप्रसादपाठकस्य ज्योतिर्विवेकरत्नाकरः (१६३९), उज्जयिनीस्थ-आपटे-गोविन्दस्य सर्वानन्दकरणं (१९३१) इत्येते मध्यप्रदेशे निर्मिताः केचिद् ज्योतिषग्रन्थाः ।

## अन्यशास्त्राणि

धारायां मुञ्जस्य सभाश्रितेन भट्टहलायुधेन व्यवहारमयूखाख्यस्य राजनीति-ग्रन्थस्य प्रणयनं कृतम्। आउफ्रेक्ट ग्रन्थसूच्यां निर्दिष्टेषु धाराधीशभोजस्य २३ ग्रन्थेषु कल्पतरुः समराङ्गणसूत्रमिति द्वे ग्रन्थे शिल्पशास्त्रविषयके स्तः। समराङ्गणसूत्रं बडोदातः प्रकाशितं वर्तते। अस्मिन् ग्रन्थे यन्त्रविधाननामकेऽध्याये जलयान-वायुयान-स्वयंचलितयान जलोद्धरणयन्त्र-यन्त्रचलितशय्या-यन्त्रचलितपुत्तलिकादीनां विधानं वर्णितमस्ति। अद्भुतो रोचकश्चापूर्वोऽयं ग्रन्थः संस्कृतभाषायां महत्त्वपूर्णः प्रतिभाति। युक्तिकल्पतरुग्रन्थे जलयाननिर्माणस्य विवरणं प्रस्तुतमस्ति। भारतीयविज्ञानपरिचायकौ द्वावपि ग्रन्थौ एतौ। पशुचि-चिकित्साविषयकः शालिहोत्रनामको ग्रन्थोऽपि भोजराजस्येवेति निर्दिष्टम्। आयुर्विद्यासम्बन्धि–विश्रान्तविद्याविनोदः, आयुर्वेदसर्वस्वमिति ग्रन्थद्वयं भोजेन प्रणीतम्। विंशशतकेऽपि नारायणदत्तत्रिपाठिना आयुर्वेददर्शनमिति संस्कृत-ग्रन्थस्य, उज्जयिनीयशंकररामचन्द्रपलसीकरेण निघण्टुरत्नं नामायुर्वेदोऽधीनां कोषस्य, मुंगजीनिवासिना जगदीशप्रसादेन च आयुर्वेदशब्दकोष इति संस्कृतभाषया कोशग्रन्थस्य (१९२३ ई) मध्यप्रदेशे प्रणयनं कृतम्। 'धनुर्विद्या' रींवाधीशविश्वनाथस्य कृतिरस्ति। राजरञ्जनमिति मृगयाविषयकरचना रींवाधीशरघुनाथसिंहस्योनविंशशतकीया। रींवानरेशवीरभद्रदेवस्य कन्दर्प-चूडामणिः, नारायणशास्त्रिणः पञ्चसायकम् इति कामशास्त्रग्रन्थेऽपि मध्यप्रदेशे प्रणीते। तोमरवंशीयग्वालियरनृपमानसिंहस्य (१४८६–१५१६ ई०) मानकुतूहलम्, रागमाला संगीतसारेति संगीतविषयकसंस्कृतग्रन्थत्रयमनुपलब्धमनुवाद-रूपेणैव ज्ञातम्। पन्नाधीशच्छत्रसालतनयो हृदयशाहो (१७३६ ई०) हृदय-कौतुकम्, उदयप्रकाशनं चेति संस्कृतभाषया संगीतग्रन्थद्वयस्य प्रणेताऽसीत्। बुरहानपुरे पुण्डरीकविट्ठलेन सद्रागचन्द्रोदय-रागमञ्जरी-रागमाला-नृत्यनिर्ण-येति ग्रन्थानां रचना कृता। रायगढ़निवासिना चक्रधरसिंहेन नर्तनसर्वस्वं, रागरत्नाकरः, तालतोयनिधिश्चेति संगीतनृत्यग्रन्था विरचिताः। भोपाल-शासकया 'शाहजहां'बेगमाख्यया १८८५ खिस्तसंवत्सरे षड्भाषीयकोषः पण्डितैः कारितो यस्मिन् संस्कृत-तुर्की-अरबी-फारसी उर्दू-आङ्ग्लभाषातः पर्यायवाचिशब्दाः संगृहीताः। अस्मिन् प्रेमनारायणशास्त्रिणा संस्कृतपदानां चयनं कृतम्।

### पत्रिकाः

संस्कृतपत्रिकायाः प्रथमोऽवतारो वाराणस्यां १८६६ खिस्ताब्दे जातः। तदनु मध्यप्रदेशेऽपि १८६६ संवत्सर एव ग्वालियरनगरे रघुपतिशास्त्रिणो-

ऽध्यक्षतायां संस्थापितायाः संस्कृतसभायाः काव्यकादम्बिनीति मासिक पत्रिकाऽजनि । अस्यां प्रायः समासपूर्तीनां स्फुटश्लोकानां च प्रकाशनं प्रावर्तत । अस्याः पत्रिकाया अवसानानन्तरं १९०० ई० वर्षतो विद्वत्कला पत्रिकाऽनया सभया प्रकाशिता । एषाऽपि पत्रिकाऽचिरमेवास्तं गता । अभिनवयुगे निम्नलिखितपत्रिका मध्यप्रदेशे प्रकाशिताः ।

(१) मालवमयूरः— मन्दसोरनगरे रुद्रदेवत्रिपाठिना सम्पादितः कथा–कविता–नाटक–निबन्धादीनां क्वचिच्च लघुग्रन्थानां प्रकाशनेन नवोदितलेखकानपि प्रोत्साहयति ।

(२) सागरिका—१९६२ खिस्तवर्षे सागरविश्वविद्यालये त्रैमासिकीयमनुसन्धानपत्रिका प्रो. रामजी उपाध्यायेन सम्पादिता साम्प्रतमेकादशवर्षे पदं निहितवती । अखिलभारतीयविदुषामुच्चैःस्तरीयाः शोधलेखा एवास्यां प्रकाश्यन्ते । साहित्यिक-दार्शनिक-वैज्ञानिक शास्त्रीय विषयाणां तथैवार्वाचीनसंस्कृतसाहित्यस्य परिचायका लेखा अन्यान्यप्रान्तीयविद्वद्वरैः शोधछात्रैश्च प्रणीताः सागरिकां परिपोषयन्ति । अत्रापि मध्यप्रदेशीयलेखकानां प्रशंसनीयं योगदानं वर्तते । लेखानामतिरिक्तं सागरिकायां काले-काले ग्रन्था अपि प्रकाशिताः । यथा—डॉ. रामजी उपाध्याय विरचितो 'भारतस्य सांस्कृतिकनिदोनूतना परिवर्धितावृत्तिः', डॉ. रेवाप्रसाद द्विवेदिप्रणीतं 'सीताचरितं' महाकाव्यं तेनैव च सम्पादितो रसार्णवसुधाकरः, पुल्लेलु रामचन्द्रस्य 'सुसंहतभारतम् नाटकं, डॉ. श्रीमती वनमालाभवालकरविरचितः 'पाददण्डः एकाङ्कः', यादवेश्वरतर्करत्नस्य काव्यं 'अश्रुविसर्जनम्', डॉ. फतेहसिंहस्य व्याख्यानानि 'सिन्धु सभ्यता', परिसवादे प्रस्तुतानां लेखानां संकलनम्—'आधुनिकसंस्कृतसाहित्यानुशीलनम्' इति । सागरिका विकासेन प्रचारेण च मध्यप्रदेशीयसंस्कृतवाङ्मयपरिवर्धने विशिष्यते ।

(३) मेधा—रायपुरसंस्कृतमहाविद्यालयतः प्रकाशिता ।

इत्थं संगीयमानावदानस्य कविललामभूतस्य कालिदासस्य शाश्वतनेतृत्वं समानीकृत्य मध्यप्रदेशे साहित्यकारा नित्यमेव भारत-भारती प्रणयनपरा आसन् सन्ति भविष्यन्ति च ।

—×—

# आचार्य-रामचन्द्रशुक्लानां रस-विमर्श-विवेकः

डॉ० बच्चूलालः अवस्थी

आचार्याः श्रीरामचन्द्र-शुक्ल-पादा हिन्दी-समीक्षा-प्रवर्तकत्वेन समादर-भाजः । अनन्य-परतन्त्रैस्तेषां विचारैस्तत्कालादारभ्य हिन्दी-जगदद्यापि प्रपूरितम् । यद्यपि तैर्न कोऽपि काव्य-शास्त्र-ग्रन्थः प्राणीयत, तथापि स्फुटैर्लेखैः, रसमीमांसाख्य-लेख-संग्रहेण, तदन्ते साहित्यदर्पणात् संकलिताभिष्टिप्पणीभिश्च तन्मतं पौस्फुरीति तद्वैदुषीसीमा च प्रचाकाशीति । तस्मै समर्पित-यथार्ह-प्रश्रये-णापि तच्छेमुषी-वशंवदेनापि मया यत्किञ्चिदिह समीद्यते तद्विचारनिकाय इति तदात्मानं क्षमां प्रार्थये ।

१. भावालम्बनमधिकृत्याचार्यचरणा आहुः–( रसमीमांसा–पृ० १६–२० )

'यद् वस्तु अस्माकं कमपि भावं जनयेत् तद् ( वस्तु ) तस्य भावस्या-लम्बनं कथ्यते । ईदृशानि रसात्मकानि वस्तूनि ( तथ्य ), पूर्वं ज्ञानेन्द्रियै-रुपस्थाप्यन्ते, अनन्तरं च ज्ञानेन्द्रियोपस्थापितसामग्रीतो भावना कल्पना वा तन्नियोजनं विदधाति ।' इति । अत्र विचार्यते :

आलम्बनविभावो भावमुत्पादयतीति केवलं भट्टलोल्लटमतेन संगच्छमान-मपि न युक्तिमभिस्थातुमलम् । न हि जन्यमानो भावः सहृदयानां भाववासना भवति, न वा तदुपस्थापनं ज्ञानेन्द्रियैर्बहुभिः क्रियते, प्रत्युत मनसैव, सा च मानसी वस्तूपास्थतिर्भावनाकृतैवेति निर्विवादं किन्तु भावनायां विभावादि-भिरनुमाप्यन्ते वा भाव्यन्ते वाथ व्यज्यन्ते वा भावाः भट्टशङ्कुक-भट्टनायक-ध्वनिकारमतैर्यथायथ, नोत्पाद्यन्ते । उत्पत्तिश्च भावस्यानुकार्ये भवति, न जातु सहृदये । अपि च ज्ञानेन्द्रियैरिति किमभिप्रैति ? बाह्यकरणानि वा मनो वा ? नाद्यः । चक्षुरादीनि न विभावानुपस्थापयन्ति, बौद्धो हि प्रत्ययो येयं विभावाद्युपस्थितिः । यथोक्तं हरिणा –

"शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान् ।
प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते ॥" इति॥

प्रत्यक्षोऽप्यत्र मानस एव । द्वितीये च ज्ञानेन्द्रियैरिति बहुत्वं निरर्थकम् । किं च, यत्र भाव एव भावान्तरस्य विभावो भवति तत्र मनोऽन्तरेण कान्येषां ज्ञानेन्द्रियाणां गतिः ? न हि स्थूला एव पदार्था विभावता भजन्ते, किन्तु सूक्ष्मा अपि । तथा चाहुस्ते स्वयमेव ( रसमीमांसा–पृ० ३१ ) :

"कविता न केवलं रूपच्छटामाविष्करोति, प्रत्युत ( ? ) कर्मणो मनो-
वृत्तेश्च सौन्दर्यस्य मार्मिकानि दृश्यानि प्रत्यक्षयति ।" इति ।

२. आचार्य शुक्लैः कल्पित-रूप-विधानमेव काव्यघटकं मतम् । परन्तु
कल्पितैरिव प्रत्यक्षैरपि स्मृतैरपि रूपै रसनिष्पत्तिस्तैः साध्यते । 'रसात्मक-
बोधस्य विविधानि रूपाणि' इति लेखे तैस्तथा प्रमाणीकृतम् । अत्र पृच्छ्यते—
"रसो वै सः । रसं ह्येवायं लब्ध्वानन्दीभवति ।" इति जगत्कारणभूतरस-परा
वा वाच्यो युक्तिः परिमितलोकसुख संभार–संवित्तिप्रवणा वा ? आद्ये दुःख-
संविदपि परमानन्द हेतुकी-स्यात् । द्वितीये यत्र सुखातिरेको लोके तत्र रस-
दशापरिकल्पने मानाभावः । उभयथापि लक्षणीयस्य रसस्य लक्ष्यतावच्छेदक-
निर्णयो न संभवति । अथ साधारणीकृतो भावो रसत्वेनाभिमतो वः स्यात्
तर्हि केयं साधारणीकृतिर्या लोकेऽपि रसनिष्पत्तिमाविष्कुरुते ? भावकारणानां
विश्वजनीनता वा चैतन्यस्य निर्वैयक्तिकता वा तदुभयं वा ? नाद्यः । जुगुप्सादेः
कारणानां विष्ठाप्रभृतीनामपि लोके वीभत्सरस-विभावीभावापत्तेः । न द्वितीयः ।
परिमित-प्रमातृ-भाव-परिमोष एव नैकाकी रस-प्रयोजकः, अपितु कारण-कार्य-
सहकारिभावानां साधारणीभाव एव तथा । यथा चाहुः 'एतेभ्यः सामान्यगुण-
योगेन रसा निष्पद्यन्ते ।' इति । नापि तृतीयः । न हि लौकिकानि वस्तूनि
सर्वत्र सुखायन्ते । क्रोध-शोकादि-स्थलेषु तथानुपपत्तेः । काव्यानन्दस्य लक्षणी-
यताविरहापत्तेश्च । कांचित् सुन्दरीं सर्वलोक-मनोरमां पश्यतो नाम यो
भावोद्रेकः स एव न जातु रस-पदवीं भजते । न वा कंचनशोकपरीतं दृष्ट्वा
'सहानुभूतिं' भजतो रसात्मको बोधो जायते; सहानुभूतेः समानुभूतेश्च ( from
sympathy and empathy ) व्यतिरिक्तत्वाद् रसानुभूतेरित्यवोचाम परत्र ।

अपि च शुक्लपादा दुःखात्मकभावेभ्यः आनन्दबोधं प्रति शङ्कन्ते इति
तेषां मन्तव्यं दिनमिव स्पष्टं जागर्ति, यत्र व्यावहारिकं सुखं व्यतिरिच्य नास्ति
कश्चित् परमानन्दात्मको लोकोत्तरो रस-प्रत्यय इति । आचार्यशुक्ला यदा
रसं भाव-मुक्ति-दशां मन्वते तदा लौकिकयोः सुखदुःखयोरेव क्रोडे पातः किमर्थ
इति त एव विदुः ।

३. अन्यच्च "करुण नाट्येषु वस्तुतो दुःखस्यैवानुभवः । हृदयस्य
मुक्तदशोपलब्धेः तद् दुःखमपि रसात्मकं संजायते ।" इत्याहुः शुक्लचरणाः
( काव्य में रहस्यवाद ) । तदपि न विवेकपदवीमवतरति । दुःखानुभव–रस-
योरेकत्र भावे कथं समञ्जसो व्यपदेशः ? केयं वा हृदयमुक्तिर्यत्र दुःखाद् न
मोक्षः ? इदमप्यत्रावधेयम् । रसप्रत्ययक्षणे न केवलं लौकिकाद् दुःखादेव, अपितु
तादृशात् सुखादपि मुक्तिरेव सम्पद्यते, अन्यथा शृङ्गारकाव्येषु लौकिकमिन्द्रि-

यस्पन्दनमेव लभ्येत । लौकिक-बोध-विरेचनमेव मुक्तिः, सा च रसस्य प्रथमोऽनुबन्धः । फ्रायडप्रभृतीनां मनोविदामपि मतेन कलात्मको बोधः सर्व-प्रयोजन-मौलिभूत इत्यलं प्रपञ्चेन ।

४. व्यञ्जनाशक्तिवादस्तावच्छुक्लपादानां बहुमतः । तत्रापि तैर्मौलिकता-मौलि-माला ग्रथिता । तथा हि—

"व्यञ्जितैर्भावैः सह पाठकानां सहानुभूतिः साधारणीकरणं वा रसस्य पूर्णानुभूतावपरिहार्यम्" इति । ( चिन्तामणिः—भागः १—संस्करणम् १९०७ पृ० १७३ ) अत्र विचार्यते—आचार्य-शुक्लाना मते भावाः क्वचिदन्यत्र व्यज्यन्ते, न सहृदये । अन्यत्र व्यञ्जितानां भावानां सहानुभूतिरेव भवति पाठकस्य सहृदयस्यैव वासनात्मको भावो रसरूपेण व्यज्यत इति ध्वनिमत-स्योपरि कुठारपात एव कृतो भवतीति स्पष्टमेव प्रतिभाति । किमीयो भावो व्यज्यते, येन सहृदयस्य 'सहानुभूतिः' संभवति ? शुक्लचरणानां मतेन स आश्रयस्य ( अनुकार्यस्य ) भावो भवितुमर्हति । न हि आश्रय-भावो व्यज्यते, प्रत्युत, कारणेन जन्यते, कार्यैरनुमीयते, सहकारिभावैश्च विशदीक्रियते । अभिव्यक्तिस्तावत् सहृयस्यैव वासनाया भवतीति राद्धान्तः, किन्तु शुक्लपादा अन्यथैव व्यतिषङ्ग-पराःप्रतीयन्ते ।

अथ केयं सहानुभूतिः । सहशब्द : समानकालिकता परो वा तादात्म्य-परो वा स्यात् ? नाद्यः । युगान्तर-सतां रामादीनां सहृदयैः सह यौगपद्यं न घटते; कल्पितपात्राणां समानकालिकता तावदसंभाव्यैव । नापि द्वितीयः । न हि विभावादीन् शब्दमात्र-संदृब्धान् व्यतिरिच्य काव्ये कस्यापि सत्ता येन तादात्म्यापत्तिर्भवेत् । अनुकार्यानुकार्ययोः-नटाश्रययोः-तदावेशतापत्तिरेव तादात्म्यम् । सा च रसिकानुकारकयोरपि संघटत एव, किन्तु कथमुभय-भाव-तादात्म्यं घटेत, यदा नैवास्ति नटे क्वापि भाव-सत्ता । इदमेवाघटमानं तादात्म्यं शुक्लैः साधारणीकरणमिति व्यपदिश्यते इत्यहो अघटित-घटना-पटीयस्त्वम् । तथा चोक्तं तैः—

"पाठकानां श्रोतॄणां वा मनसि यो व्यक्तिविशेषो वस्तुविशेषो वा समुदेति, स यथा वर्णितस्याश्रयस्य भावं प्रति आलम्बनं भवति, तथैव सर्वेषां सहृदयानां पाठकानां श्रोतॄणां वा भावस्यालम्बनतां भजति, इति साधारणीकरण-स्याभिप्रायः ।" ( चिन्ता० पृ० १८५ )

अत्र पश्यामः । शुक्लमते आश्रय-सहृदययोर्यथा तादात्म्यं तथा तदालम्बनयोरपीति तदेव साधारण्यम् । अतएवाहुः—

"यदि कस्यापि पाठकस्य श्रोतुर्वा कांचित् सुन्दरीं प्रति प्रेमा, तर्हि शृङ्गाररसस्य स्फुटोक्तीः श्रोतुं समये क्षणे-क्षणे आलम्बनत्वेन तत्प्रेयस्या एव मूर्तिः कल्पनायामुदेष्यति यदि नास्ति तथा प्रेमा तदा सुन्दर्याः कापि कल्पितैव प्रतिमा समेष्यति।" इति। ( पृ० १८५ )

एतदविचाररमणीयम्। पुरुषा एव रसास्वादाधिकारभाजः कच्चित्? अथ स्वीक्रियेत—स्त्रियोऽपि स्व-स्व-प्रेमालम्बनीभूत-पुरुष-प्रतिमाः कल्पयन्तीति ततोऽपि न निस्तारः। पुरुषस्याश्रयत्वे स्त्रिया आलम्बनत्वे स्त्रीणाम्, स्त्रिया आश्रयत्वे पुरुषस्यालम्बनत्वे पुरुषाणां वा कथंकारं रसो निष्पद्येत?

न हि स्त्रियः पुरुषैः पुरुषाश्च स्त्रीभिः सह तादात्म्यं लब्धुमलम्। महती च विडम्बना स्यात् यदि आलम्बनीभूतया स्त्रिया सह सहृदया कापि तादात्म्यं लभेत, स्वं च यं कमपि काव्य-निबद्धं पुरुषं प्रति प्रेयसीत्वाय कल्पेत। न हि शुक्लपादाः आश्रयालम्बनयोर्व्यक्तिता-हानिं सहन्ते। सहृदया स्त्री शकुन्तलाभावं भजन्ती दुष्यन्तप्रियां एवं मन्वाना शुक्लमते स्यात्।

५. शुक्लमते भाव-व्यञ्जना तावत् आश्रये भवति न रसिके—तथा च तैरनेकत्रोक्तम्—

'आश्रयस्य यां भाव—व्यञ्जनां श्रोतुः पाठकस्य वा हृदयं न किञ्चिदङ्गीकरिष्यति, तस्या ग्रहणं शीलवैचित्र्य-रूपेणैव भविष्यति।'

( पृ० १८७ ) इति।

'पात्रस्य भवा-व्यञ्जनया सह श्रोतुर्दर्शकस्य वा पूर्णा सहानुभूतिर्भविष्यति।' ( पृ० १८७ ) इति च।

इत्थं च व्यञ्जनानुमानयोरैक्यमेव स्थापितं भवति, न्यायमतं च समर्थितं भवति। इयं चापरा हानिर्यत् शुक्लपादा नैयायिकानां साहित्यसमीक्षायां **पदनिक्षेपमपि न सहन्ते—**

'साहित्यशास्त्रे नैयायिकानां मतस्य यथावद् ग्रहणेन काव्य-स्वरूप-निर्णये बाधा जाता। तदुदाहरणं च शक्तिग्रह-प्रसङ्गो यत्र संकेतग्रहो व्यक्तौ न मतः किन्तु जातौ मतः।' ( पृ० १८५ ) इत्याहुस्त एव।

अहो स्वमताग्रह-विजम्भितम्। न हि नैयायिका जातौ संकेतग्रहं स्वीकुर्वन्ति, अपितु जातिविशिष्टव्यक्तौ तं मन्वते। भाट्ट-मीमांसकास्तावज्जाति-संकेतवादिनः इति सर्वविदितम्। अपि च तेऽचकथन्—

'काव्ये भाषायाः प्रत्यक्षीकरण-पक्ष एव धुरि तिष्ठति। तत्र शब्दद्वारेण सूचितस्य वस्तुनो बिम्ब-ग्रहणं भवति। अर्थात् तन्मूर्तिः कल्पनायामुज्जृम्भते।' इति।

अत्र प्रष्टव्यम्—कस्या व्यक्तेरियं मूर्तिः? सर्वे सहृदया एकामेव मूर्तिं कल्पयन्ति, पृथग् वा? असम्भवः प्रथमः पक्षः। न हि काव्यं कामपि स्पष्टामाकृतिमर्पयति। द्वितीये पक्षे व्यक्ति-बिम्ब-स्थापना खण्डिता भवति। न हि काव्ये व्यक्तिबिम्बमुपस्थापितं दृश्यते। सर्वे सहृदया यदा स्व-स्व-प्रेयसी-मूर्तिमेव कल्पयन्ति तदा काव्योपस्थापिता व्यक्तिमूर्तिः कथमागृह्यते। अस्पष्टेव कापि गुण–धर्म–रेखासु चित्रिता प्रतिमा काव्येनार्प्यते, इति शुक्लपादैरपि स्वीकर्तव्यमापतति।

भट्टनायकादिभिर्नेयं साधारणीकरण–सरणिः स्वीकृतेति वृथैव पूर्वाचार्याणां नामग्रहः।

६. बीजभाव–स्थापना शुक्लचरणानां नूतनः प्रयासः। तन्मतेन बीजभावोऽन्तःसंज्ञा-स्थित कोऽपि भावो यो घटनाचक्रं विविध–भाव–स्फुरणं च प्रेरयति। अयं च स्थायिभावादङ्गिभावाच्च भिन्न एव। यस्मिन् पात्रेऽस्य भावस्य प्रतिष्ठा भवति, तद्गतानां सर्वभावानां (कोमलानां कठोराणां च) तथा ग्रहणं भवति यथा सहृदयानां तैः सहानुभूतिर्जायते। त एव भावा रसत्वेनानुभूयन्ते येऽनेन बीजभावेनोपस्थाप्यन्ते।

(चिन्तामणि–पृ० १७८)

अत्र भरतो रामचरितमानसीय उदाहरणम्। अन्यायं प्रति क्रोधो भरतस्थो बीजभावः। तं च बीजभावमाश्रित्य भरतो यदा मातरं कैकेयीं भर्त्सयति तदापि सहृदयानां सहानुभूतिरक्षुण्णा जागर्ति। अत्र विचारणीयम्। काव्याद् बहिः का भरतस्य सत्ता, यत्र बीजभावः स्यात् भावस्फुरणं च सहृदयेषु विदध्यात्? न हि रसिकमतिरिच्य कापि वास्तवी सत्ता यत्र कस्यापि भावस्योपस्थितिः प्रमीयेत। वस्तुतः सहृदय-हृदये विद्यमानामन्यायं प्रति क्रोधवासनामेव बीजभावपदेन वक्तुं सभावयामः। प्रत्युदाहरणमपि हि सुलभम्—गान्धिमहोदयः शत्रवेऽपि नैवाक्रुध्यत् किन्तु तत्पक्षपातिनस्ताव-धक्रुध्यन्नेव। अन्यायं प्रति क्रोधवासनाऽस्मासु तिष्ठति, न गान्धिनि, इति बीजभाव–परिकल्पनैव भज्यते।

७. हास्यरसे नाश्रयः प्रायेण निबध्यते। तत्र सहृदय एवाश्रयपदवीं भजति, तत्रैव च बीजभावस्योपस्थितिर्मान्या भवतीति हासभावनां वासनारूपां विना बीजभावो नास्ति कश्चित्। सा च सहृदय–हृदये तिष्ठति। तथा चाहुस्त

एव 'हास्येऽप्येवं घटते। यावत् तत्पात्रं सम्मुखीनं भवति तावत् मनुष्यः सकलं सुखं दुःखं च विस्मृत्य विलक्षणं कमपि आह्लादमनुभवति।'
( चिन्तामणि- पृ० २०१ ) इति।

अत्र 'पात्र' पदेन क उच्यते ? आश्रय आलम्बनं वा ? हास्ये प्रायेणाश्रयो नोपनिबध्यते इति प्रथमः पक्षो दूरापास्तः। द्वितीये पक्षे स्वीकृते आश्रयस्य भावव्यञ्जकता शिरोऽधिरोहति। यदा तत्र ह्लादे सुखदुःखे उभे अपि विस्मृते जायेते तदा करुणादौ कोयं दुःख—स्मरणाग्रहः ? यदा हास्ये विभावस्य भावव्यञ्जकता मता तर्हि शृङ्गारेऽपि तस्यैव मान्येति समूलघातं हता शुक्लचरणानामुपस्थापना।

८. 'आलम्बनत्व—धर्मस्य—साधारणीकरणं भवति' इति शुक्लपादानां कश्चिदुपन्यासः। किमिदमालम्बनत्वम् ? आलम्बनकारणतावच्छेदको वा आलम्बनविभावतावच्छेदको वा धर्मः ? दुष्यन्तं प्रति हि शकुन्तलालम्बन-कारणम्, सहृदयं प्रति चालम्बनविभावः। कारणातावच्छेदकं शकुन्तलात्वं दुष्यन्त—प्रियात्व—समानाधिकरणम्। विभावतावच्छेदकं तावत् स्त्रीत्वसामान्यमेव, न शकुन्तलात्वम्, इत्येव प्राचां मतिः। स्त्रीत्वसामान्यं हि शकुन्तलात्वस्य साधारणीकृतो धर्मः। एतच्चासहमानाः शुक्लपादा आहुः—

'यं व्यक्तिविशेषं प्रति कस्यचिद् भावस्य व्यञ्जनां कविः पात्रं वा करोति, स व्यक्तिविशेष एव पाठकस्य श्रोतुर्वा कल्पनायामुपतिष्ठते' इति।

विषम उपन्यासः। व्यक्तिविशेषः कथमिवोपस्थातुं शक्नोति ? न हि गुणान् धर्मान् वोपनिबद्धान् विहाय कापि व्यक्तिमूर्तिः काव्ये चित्र्यते। अतएवाहुर्भरताः—

'एतेभ्यश्च सामान्यगुणयोगेन रसा निष्पद्यन्ते।' इति। सहस्रशः सहृदयेषु नाम कथं व्यक्तिहृदयं लप्स्यते ? अकस्माद् 'गौः' इत्युदीरिते नैक एव गौर्व्यक्तिः सर्वेषां बुद्धौ समायाति। नास्ति काव्य—वर्णिता व्यक्तिः सहृदयानां परिचितपूर्वेति तथा संभवेत्।

९. 'विभावादयः सामान्येन प्रतीयन्त इत्यस्यैतदेव तात्पर्यं यद् रस-मग्नानां पाठकानां मनसि ममेदं परस्य वेति भेदभावो नावशिष्यते। कंचित् कालं पाठकस्य श्रोतुर्वा हृदयं लोक—सामान्य—हृदयतां समश्नुते।' इत्याचार्य-चरणानां प्रस्तावोऽपि अविचार—रमणीय एव। न हि ममत्व—परकीयत्व—निरासात् पूर्वं रसमग्नता घटते। अपि च, किं नाम लोकसामान्य-हृदयत्वम् ? समूह-मानसत्वं वा निर्वैयक्तिक-चैतन्यं वा ? नोभयथापि तादात्म्य—पर्यायस्य

साधारणीकरणस्य शुक्लसंमतस्यावकाशः । तादात्म्यं हि पृथग्-द्रव्ययोरेव घटते । एकत्वं गतस्य सतः का वार्ता तादात्म्यस्य ?

१०. 'पात्रस्थस्यैव भावस्य प्रतीतिः श्रोतुः पाठकस्य वा रसरूपेण जायते । अतः वै प्रतीतिकाल एव साहित्य-दर्पण-कारेण रसस्य सत्ता मता, पूर्व वा पश्चाद्वा न–न तु दीपेन घट इव पूर्व-सिद्धो व्यज्यते ।'(रसमीमांसा-पृ० १६३)

इति ब्रुवाणैराचार्यपादैः साहित्यदर्पणकारा अपि कर्दमक्षिप्ताः कृताः । पात्रस्थस्येति कोऽर्थः ? अनुकार्यस्थो वानुकारकस्थो वा भावः प्रतीयते ? आद्ये भट्टलोल्लटमतस्य पुनरुज्जीवनम् । द्वितीयेऽनुमानवाद एव शरणम् । नोभयथापि दर्पणकृतां किमपि सामञ्जस्यम् । अथ पात्रस्थो रसिक-प्रतीतिमवतीर्ण एव रसनाम भजतीत्यभिप्रेतम् । तदापि प्रतीतिरनुमितिरिति पर्यायौ, न हि तथाभूतायाः प्रतीतेर्व्यञ्जनायाश्च कोपि सम्बन्धः । दर्पणकाराणां तावदेष आशयः—

'रसिकस्थो वासनात्मको भावो यावत्क्षणे प्रतीयते ( व्यज्यते ) तावदेव रसत्वं भजति स भावे इति चर्वणैकप्राणत्वाद् रसस्य । चर्वणायाः पूर्वं च पश्चाच्चाव्यक्तो भाव आस्तां, किन्तु रस्यमानताया अभावान्न तत्र रसत्वव्यपदेशः । यथा पयो दधिरूपेण परिणमति द्रव्यान्तरयोगवशात्; तथैव विभावादिसंयोगाद् वासनारूप-भावस्य रसरूपेण परिणतिरिति तात्पर्यम् ।

११. भावकोशानां मत-स्थापना शुक्लपादानां नवीन उपक्रमः । यथा चाहुस्ते—

"रतिस्तावत् । प्रियस्य साक्षात्कृत हर्षः, वियुक्तौ विषादः, तद्विपत्प्रिासे विरहशङ्का, तस्य दुःखदातारं प्रति क्रोधः–एवंभूतानामनेकेषां भावानां स्फुरणं रति-प्रणाल्यां स्थिरायां जायते । एनान् भावानतिरिच्य नैव रतेः काचित् स्वतन्त्रा सत्ता, न च किमपि स्वरूपम्" इति । हंहो । यदि कथितसहकारिभावान् विहाय रतेः सत्तैव नास्ति तर्हि किङ्कृता प्रियता ? हर्षादयोऽपि कस्माज्जायन्ते ? रति-प्रणाल्यां स्थिरायामेव ते ते सहकारिणो भावाः स्फुरन्तीति वदतोव्याघातः । पूर्वं हि रतेः स्थिरत्वम्, अनन्तरं च तत्तद्भाव-स्फुरणमिति भवतामेवोक्तिः, इति रतेः सत्ता प्रमाणिता तिष्ठति । किं च–'यो रतिरिति स्थायि उच्यते स नास्ति कश्चिदेको भावः परन्तु तन्मूलं कश्चिद् भावोऽवश्यं तिष्ठति यस्य स्थायिदशां रतिरिति प्रीतिरिति वा वदन्ति' इत्युक्तौ संगतिर्मृग्यैव । नास्ति भाव इत्युक्त्वा भावोऽवश्यं तिष्ठतीति कोऽयमुपक्रमः ?

उक्तदिशा रामचन्द्रशुक्लानां रसविषयकं मतं दिङ्मात्रेण विविक्तम् । विद्वद्भिः पुनरपि अनुशीलनेन सन्देहनिरासः कार्यः ।

—: ० :—

# वाल्मीकेर्गोत्रं स्वभावः समयश्च

डॉ० पुरुषोत्तम लाल भार्गवः

वैदिकसाहित्ये या संस्कृता वाक् प्रयुक्ता सैव यदा वैदिकयुगस्य समाप्तौ भाषाविकासस्य नैसर्गिकनियमेन परिवर्तनं प्राप्ता तदा लौकिकसंस्कृत-भाषेत्यभ्यधीयत । लौकिकसंस्कृतभाषाया आदिकविर्वाल्मीकिरासीत् ।

## गोत्रम्

सर्वेष्वेव प्राचीनग्रन्थेषु येषु वाल्मीकेरुल्लेखो विद्यते स भृगुवंशोद्भवो ब्राह्मणः कथितः । स्वयं रामायणे ( ७, ९४, २६ ) एतद् लिखितं वर्तते—

संनिबद्धं हि श्लोकानां चतुर्विंशत्सहस्रकम् ।
उपाख्यानशतं चैव भार्गवेण तपस्विना ॥

महाभारते ( १२, ५७, ४० ) वाल्मीकेरुल्लेख एवंप्रकारेण कृतः -

श्लोकश्चायं पुरागीतो भार्गवेण महात्मना ।
आख्याते रामचरिते नृपतिं प्रति भारत ॥

प्राचीने मत्स्यपुराणे ( १२, ५१ ) तदनुगामिनि पद्मपुराणे च ( ५, ८, ११५ ) रामचरितस्य प्रसंगे वाल्मीके प्रशंसायामिदं कथितम्—

वाल्मीकिस्तस्य चरितं चक्रे भार्गवसत्तमः ।

अश्वघोषसदृशः प्राचीनकविरपि स्वरचिते बुद्धचरिते 'कृतानि पुत्रैर-कृतानि पूर्वैः' इति स्वकथनं साधयितुं यान्यनेकान्युदाहरणानि दत्तवान् तेष्वेकमिदम्—

वाल्मीकिनादश्च ससर्ज पद्यजं ग्रन्थयन्नच्यवनोमहर्षिः ।

अनेनोदाहरणेनेदं स्पष्टं यदश्वघोषोऽपि वाल्मीकिं भार्गवस्य च्यवनस्य वंशजममन्यत ।

वस्तुतः बौधायनश्रौतसूत्रस्य प्रवराध्याये भृगुवंशस्य वत्सपक्षे यानि गोत्राणि परिगणितानि तेष्वेकस्य नाम वाल्मीकिः । अतो नात्र संशयस्य लेशोपि विद्यते यद्वाल्मीकिर्भृगुवंशे समुत्पन्न आसीत् ।

## स्वभावः

इदं महद् दुर्भाग्यं यत् केषुचित् परवर्तिषु ग्रन्थेष्वेका कपोलकल्पिता कथोपलभ्यते यस्यामेतत्प्रतिपादितं यद्वाल्मीकिः स्वयौवनकाले जनानां

लुण्ठको मारकश्च दस्युरासीत् पश्चाद् रामनाम्नो जपं कृत्वा ऋषिरभवत्। एषु ग्रन्थेषु स्कन्दपुराणमध्यात्मरामायणं चोल्लेखनीयौ । एतावुभावपि ग्रन्थौ रामायणमहाभारतमत्स्यपुराणेभ्यो नितरां परतरौ । अतो रामायणादीनां साद्यस्य विरोधि एतयोः साक्ष्यं न कदापि स्वीकरणीयम्। अधुना रामायणाद् एतयोः साद्यस्य विरोधित्वं प्रदर्श्यते ।

रामायणे वाल्मीकेः स्वभाव एतावान् कोमलः प्रतिपादितो यद् निषादबाणेन स्वभर्तृवधं वीक्ष्य शोकाभिभूतायाः क्रौञ्च्याश्चीत्कारं श्रुत्वैव स करुणया विह्वलो जातः सहसाचेदं वचनमब्रवीत्—

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥

को हि धीमान् इदं विश्वसितुं शक्नोति यदेक एव मनुष्य एकदा निःशङ्कं नराणां वधं करोत्यन्यदा चैकस्य तुच्छपक्षिण एव वधान्न केवलं द्रवीभवत्यपि तु घातकाय शापमपि ददाति ।

इदमपि सुष्ठु विचारणीयं यद्यो वाल्मीकिः स्वरचितेषु रामायणस्य मूलपञ्चकाण्डेषु रामं सर्वत्रैकं महापुरुषमेव मन्यते स एव कथं तमीश्वरं मत्वा तस्य नाम्नो जपं कर्तुं शक्नोति । एतेनेदं स्पष्टं यत् स्कन्दपुराणाध्यात्मरामायणयोः वृत्तं प्राचीनग्रन्थेषूपलभ्य मानाद् वृत्ताद् नितरां विपरीतं त्याज्यं च।

**समयः**

वाल्मीकिः कदा जात इत्यपि विचारणीयम् । भाषायाः साक्ष्यमिदं पूर्णतया स्पष्टं करोति यद् वाल्मीकी रामस्य समकालीनो नासीत्। रामो वैदिकयुगे जातो नात्र संशयः । ऋग्वेदस्य दशममण्डलस्य त्रिनवतितमे सूक्ते अनेकनृपाणां नामसु रामस्य नामापि विद्यते । वैदिककाले या संस्कृता भाषासीत् तस्या एव क्रमशो विकसितं रूपं लौकिकसंस्कृतमभवत् । लौकिकसंस्कृतभाषाया आदिकविर्वैदिककाले जातस्य रामस्य समकालीनो भवितुं कथमपि न शक्नोति। वस्तुतो रामस्य कथा राजवृत्तान्तानां रक्षितृभिः सूतैश्चिरकालपर्यन्तं रक्षिता । सूतेभ्य इमां कथां संगृह्य वाल्मीकिः स्वकाव्यं रचितवान् । लौकिकसंस्कृतस्य प्रादुर्भावः खीष्टात् षट् शतानि वर्षाणि पूर्वमभवत् । यतो वाल्मीकिर्लौकिकसंस्कृतभाषाया आदिकविस्तस्मात्तस्याप्ययमेव समयः प्रतिभाति ।

वाल्मीकिना रचितं रामायणं पश्चात् कुशीलवनाम्ना प्रसिद्धैश्चरित्रगायकैरनेकशः गीत्वा लोकप्रियं कृतम्। किन्त्वियं लोकप्रियता गुणापेक्षिण्यासीत्। अनेनैव कारणेनाद्यापि रामायणस्य लोकप्रियताऽनपाया विद्यते। रामायणमधिकृत्य सत्यमेवोक्तम्—

यावत्स्थास्यन्ति गिरयः सरितश्च महीतले।
तावद्रामायणकथा लोकेषु प्रचरिष्यति॥

अनेन महाकाव्येन न केवलं भारतनिवासिनोऽपित्वेशियामहाद्वीपस्य दक्षिणपूर्वस्यां दिशि स्थितानां देशानां निवासिनोऽपि प्रेरणां प्राप्तवन्तः। ईदृशस्य प्रेरणादायकस्य महाकाव्यस्य रचयिता वाल्मीकिः परमार्थतः संस्कृतभाषाया भारतवर्षस्य च गौरववर्धकोऽस्ति। अद्यापि स विश्वस्य महाकवीनां मध्ये नक्षत्राणां मध्ये चन्द्रमा इव प्रकाशते।

--( ० )--

# भगवतो बुद्धस्य चत्वारि आर्यसत्यानि

कु० विमला कर्नाटकः

भारतीयद्वादशदर्शनेषु यानि वैदिकेतरषड्दर्शनानि तत्र ताथागतदर्शनस्य स्थानं महत्त्वपूर्णमिति जेगीयते। तत्र कारणमिदमेव यत् तस्य दर्शनस्य साहित्यं विशालं, अनुयायिनोऽनल्पास्तथा तत्त्वचिन्तनं विश्लेषणकारिदृष्टिपथमायाति।

मानवानां कल्याणार्थं बहुकालं यावत् तलस्पर्शिगभीरपारदर्शि च चिन्तनं विधाय भगवता बुद्धेन इमानि चत्वारि आर्यसत्यानि निरूपितानि। येषां यथार्थज्ञानाद् विना बौद्धदर्शनस्य यथावदवबोधो न भवितुमर्हतीति कृत्वा तन्निरूपणं स्वल्पैरेवाक्षरैरत्र क्रियते।

'आर्यसत्य'शब्दश्रवणेन कोऽर्थो मतिमारोहतीति जिज्ञासायां 'उत्कृष्टं सत्यं' 'महापुरुषाणां सत्यं' वेत्यर्थ एव समुपस्थितो भवति। 'आर्यसत्यस्य' ज्ञानादृते मानवः संसारस्य निर्वाणस्य वा स्वरूपमवगन्तुं न शक्नोति। मानवजीवने यस्य ज्ञानं नितान्तमावश्यकं तदेव 'आर्यसत्यं' नाम।

जैनदर्शने तद्दर्शनविदामभिमतेषु सप्तसु तत्त्वेषु श्रद्धान-ज्ञानयोर्यत् प्रयोजनमभिमन्यते तदेव बौद्धदर्शने आर्यसत्यानां चतुर्णां प्रयोजनमभ्युपगम्यते। सांख्यदर्शने पञ्चविंशतितत्त्वानां, न्यायदर्शने षोडशपदार्थानां, वैशेषिकदर्शने षट्पदार्थानां, मीमांसादर्शने सप्तपदार्थानां, तदेकदेशिनां मते अष्टपदार्थानामिव बौद्धदर्शनेऽपि तत्त्वव्यवस्थासम्पादनार्थं चत्वारि आर्यसत्यानि स्वीकृतानि सन्ति।

तस्य आर्यसत्यस्य दुःख-दुःखोदय-मार्ग-निरोधश्चेति चत्वारो भेदाः। कतिपयैर्बौद्धदार्शनिकैः दुःखं, आयतनं, मार्गः, दुःखोदय इति चत्वारि आर्यसत्यानि स्वीकृतानि। प्रथमपक्षस्य दार्शनिकाः दुःखोदयसंज्ञके आर्यसत्ये 'आयतनस्य' तथा द्वितीयपक्षस्य दार्शनिका मार्गसंज्ञके आर्यसत्ये 'निरोधस्य' अन्तर्भावं विधाय आर्यसत्यस्य चतुःसंख्यां पूरयन्ति। आयतनं नाम स्थानं कारणं वेति। क्षितिसलिलानलानिलरूपाः विज्ञानञ्चेति सर्वे समनस्काः स्पर्शनादिपञ्चानामिन्द्रियाणां आयतनानि कथ्यन्ते। यत एतेषां सम्पर्केणैव इन्द्रियेषु समुदयन्ति दुःखानि।

अत्र तावत् प्रथमभेदानुसारेण आर्यसत्यानां किञ्चिद् विवेचनं सुस्पष्टं क्रियते । दुःखविवेको नाम प्रथमं आर्यसत्यम् । वेदान्तदर्शनं अखिलं विश्वमेव आनन्दात्मकं ब्रह्मरूपं स्वीकरोति । किन्तु बौद्धदर्शनं खलु एतद् विपरीतं चिन्तयति । दर्शनमिदमखिलं विश्वं दुःखात्मकमभ्युपगच्छति नानन्दात्मकम् । अस्य मते आनन्दो न खलु स्वाभाविकः, स तु प्रयत्नलभ्यः सुखार्थं यत्नः अपेक्ष्यत इति को वा न जानाति किन्तु न नियता तदुपलब्धिः । दुःखार्थं न हि तावत् प्रयत्नापेक्षा तथापि तत् स्वयमेव उपनतं भवति । अतः अस्य विश्वस्य दुःखात्मकतैव युक्तियुक्तेति विज्ञायते । अयमेव दुःखविवेक इत्यभिधीयते । अस्मिन् विषये वेदान्तबौद्धदर्शनयोः चिन्तनसरणिः परस्परं नितान्तं विपरीता वर्तते ।

**दुःखभेदाः**—दुःखसंज्ञकस्यास्याऽऽर्यसत्यस्य पञ्चभेदा भवन्ति । तथाहि—रूप संज्ञा-संस्कार–विज्ञान–वेदनाभिधा इमे प्रसिद्धाः । वेदान्तदर्शनं तावत् सत्ता-चेतना-ऽऽनन्द-कर्म-रूप-नामसंज्ञिकाः षट्भावना अभ्युपैति, किन्तु तत्र सत्तासंज्ञकः पदार्थो न हि तर्कारुढो भवतीति बौद्धदार्शनिकाः प्रतिपादयन्ति । यतो जगति सर्व एव पदार्था असद्रूपाः, अतएव उपर्युक्तानां पञ्चस्कन्धानां अभ्युपगम एव समुचितः प्रतिभाति ।

रूपस्कन्धशब्देन न हि केवल रूपसंज्ञको गुण एव गृह्यते, अपितु द्रष्टरि बुद्धिद्वारा दृश्यपदार्थेषु समवेतानां रूपरसगन्धस्पर्शादीनां पृथ्वीजलवाय्वादीनां श्वेतनीलहरितपीतादीनां कषायकटुमृदुकठोरमन्दामन्ददूरादूरशुभादीनां यो रूपनिश्चयः क्रियते स एव रूपस्कन्धशब्देन उच्यते । आर्हतदर्शनोक्तं पुद्गलद्रव्यं बौद्धाऽभिमतो रूपस्कन्धश्च प्रायश एक एव । रूपस्कन्धश्चैषः दुःखहेतुत्वात् दुःखरूप एव ।

यथा रूपस्कन्धो दुःखरूपस्तथैव संज्ञास्कन्धोऽपि दुःखरूप एव । यदृच्छा-जात्यादिभेदैः शब्दस्तावदनेकविधः । शब्दात् यज्ज्ञानमुत्पद्यते, तत् खलु भिन्नमेव रूपकर्मभ्यामुत्पद्यमानात् ज्ञानात् । अत आभ्यां खलु संज्ञास्कन्धो भिन्नः, अयमपि च दुःखरूप एव ।

तृतीयः संस्कारस्कन्धोऽपि दुःखात्मक एव । सत्ता प्रवृत्ति-सृविट-शक्तिभेदादस्यापि चत्वारो भेदाः । 'अस्ति' इत्याकारिका बुद्धिस्तावत् सत्ताशब्दार्थः । अयमपि एकः संस्कारविशेषः, सन्तानकल्पनया अस्योत्पत्तिर्भवति । वस्तुतस्तु पदार्थः सर्वथा क्षणिक एव, अतः असन्नेव । शरीरस्य वचसो मनसश्च गतिरेव प्रवृत्तिरिति कथ्यते । सृष्टिर्नाम पदार्थपरिवर्तनमिति । प्रत्येकस्मिन्

पदार्थे या अर्थक्रियाकारिता वर्तते सा एव तस्य शक्तिः । यथा जलधारणादिषु घटस्य अर्थक्रियाकारिता सर्वैरनुभूयत एव । एतच्चतुर्विधं कार्यमेव संस्कार-शब्देनोच्यते । अयमात्मीयपदार्थेषु आत्मन्यपि च प्रवाहरूपेण उत्पद्यमानो वर्तते । पुण्यपापजन्यादृष्टादीनां रागद्वेषक्लेशादीनां मदेर्ष्याद्युपक्लेशादीनां सर्वेषामपि संस्कारनामके दुःखस्कन्धेऽन्तर्भावो भवति । वेदान्तदर्शने सत्ता-कर्मणोर्भेदोऽभ्युपगम्यते, किन्तु बौद्धास्तावत् न स्वीकुर्वन्ति तन्मतम् । सत्ता-कर्मणी द्वे अपि पृथक्-पृथक् संस्काराविल्याहु बौद्धदर्शनिकाः ।

विज्ञानस्कन्धोऽपि दुःखरूप एव । अस्य च त्रयो भेदा भवन्ति । आत्मा, आत्मीयः, तयोश्च सम्बन्धः, अहमस्मीत्याकारको विचारोऽपि आलयविज्ञान-शब्देनोच्यते । अस्य नामधेयं आत्मरूपविज्ञानस्कन्ध इति निगद्यते । अयं तावत् विषयेभ्यः पृथगपि स्वयं निर्विशेषो वरीवर्ति । अस्मिन्नेव अन्ये सर्वे पदार्थाः प्रतिबिम्बिता भवन्ति । अस्य विज्ञानस्कन्धस्य त्रयो भेदाः, प्रमाण-प्रमेयात्मायतनानीति । तत्र प्रमाणविज्ञानस्य आलम्बन-समनन्तर-नियामक-सहकारीति भेदेन चत्वारो भेदा भवन्ति । इदमेव प्रवृत्तिविज्ञानमित्युच्यते । नीलशब्दश्रवणेन जायमानं नीलाकारज्ञानमेव आलम्बनमित्युच्यते । पूर्वा-वगतस्य पदार्थस्य संस्कारात् उत्पद्यमानः 'स एवायं पदार्थः, यः पूर्वं दृष्ट' इत्याकारकं ज्ञानं समनन्तरसंज्ञकं आत्मीयविज्ञानमित्यभिधीयते । चक्षुरादयः नियामकविज्ञानशब्देन उच्यन्ते । एतद्बलेनैव रसादिज्ञानात् रूपादिज्ञानस्य भेदः सिद्धो भवति । तथा प्रकाशः सहकारिविज्ञानमिति निगद्यते । यतः तेन विना रूपज्ञानं नैव भवितुमर्हति । एषु चतुर्षु आलम्बनसमनन्तरनियामकानां त्रयाणां सामूहिकमभिधानं चित्तमित्यभिधीयते ।

चित्तस्य आत्मीयेन सह यः सम्बन्धः स एव विज्ञानस्कन्धस्य तृतीयो भेदः सम्बन्धशब्देनोच्यते । अस्यापि त्रयो भेदाः—अवग्रहः, ईहा, अवापश्चेति । अवापस्यैव नामान्तरमपायः, अथवा अवगम इति । धारणासंज्ञकज्ञानमेव त्रयाणां फलं भवति । इन्द्रियाणां विषयैः सह यः सम्बन्धः स एव अवग्रह इत्यभि-धीयते । तदनन्तरं ईहासंज्ञकस्य सम्बन्धस्यापि षड्भेदाः भवन्ति । ते च संशय-बुभुत्सा-प्रमाणदृष्टि तद्ग्रह-तन्नियोग निर्धारणसंज्ञकाः ।

अविद्यारूपाः सुखदुःखमोहा एव वेदनाशब्देन निगद्यन्ते । ते सर्वे दुःख-स्वरूपा भवन्ति । न हि सुखसंज्ञकः कोऽपि स्वतन्त्रः पदार्थः प्रसिद्धः । यतो-ऽतिशयितस्य दुःखस्य अभिभूतावस्थैव सुखपदवाच्या भवति । इत्थं दुःखा-भिधानस्य आर्यसत्यस्य पञ्च भेदा वर्णिताः ।

[३]आर्यसत्यस्य द्वितीयो भेदः दुःखोदयः समुदयो वा ऽस्ति । अस्यापि त्रयो भेदाः—रागद्वेषमोहाश्चेति । क्रोधमानमायानां तथा लोभादीनामप्येतेष्वेवान्तर्भावो भवति । यतः त एव दुःखस्य जनका भवन्ति ।

[४]तृतीयस्य आर्यसत्यस्य नाम निरोधः । दुःख-दुःखोदयाभ्यां जायमाना मुक्तिरेव निरोधशब्दार्थो भवति । आभ्यां प्राप्यमाणा मुक्तिरेव आत्मनो निर्वाणमित्यभिधीयते । आत्मनः स्वरूपतो नाश एव निर्वाणशब्दार्थः ।

[५]चतुर्थमार्यसत्यं मार्गसंज्ञकम् । सर्वमेव दुःखात्मकं, क्षणस्यापि क्षयित्व-

---

३. (क) कादाचित्कतया सिद्धा दुःखस्यास्य सहेतुता ।
नित्यं सत्त्वमसत्त्वं वा हेतोर्ह्यान्यानपेक्षणात् ॥
प्रमाणवार्तिकं १।१८१

(ख) असामर्थ्यादतो हेतुर्भववाञ्छा परिग्रहः ।
यतोऽपि प्राणिनः कामविभवेच्छे च ते मते ।
सर्वत्र चात्मस्नेहस्य हेतुत्वात् सम्प्रवर्तते ॥
प्रमाणवार्तिक १।१८५,१८७

(ग) इदं खो पन भिक्खवे दुक्खसमुदयं अरियसच्चं । योयं तण्हा पोनब्भविका नन्दिरागसहगता तत्र तत्राभिनन्दिनी सेयमीदं कामतण्हा भवतण्हा विभवतण्हा—मज्झिमनिकाय महाहत्थिपदोपमसुत्त । दृष्टव्य—मज्झिमनिकाय महादुक्खखन्धसुत्तम् ।

४. (क) मोहश्च मूलं दोषाणां.............. ।
सत्कायदृष्टेर्विगमादाद्य एवाभावो भवेत् ॥
प्रमाणवार्तिकं १।१९८, २०१

(ख) इदं खो पन भिक्खवे दुक्खनिरोधं अरियसच्चं सो तस्सायेव तण्हाय असेसविरागनिरोधो चागो पटिनिस्सागो मुत्ति अनालयो ।
मलिन्द पञ्ह पृ० ३०५ ।

५. (क) आत्मात्मीयग्रहकृतः स्नेहः संस्कारगोचरः ।
हेतुर्विरोधि नैरात्म्यदर्शनं तस्य बाधकम् ॥
बहुशो बहुधोपायं कालेन बहुनास्य च ।
गच्छन्त्यभ्यस्यतस्तत्र गुणदोषाः प्रकाशताम् ॥
प्रमाणवार्तिकं १।१३७, १३८

(ख) उक्तो मार्गः तदभ्यासादाश्रयः परिवर्तते । मार्गः नैरात्म्यदर्शनलक्षणः । तस्याभ्यासादाश्रयः क्लेशवासनाभूतमालयविज्ञानं क्लिष्टदशानिरोधात् क्लेशविसंयुक्तचित्तप्रबन्धात्मना परिणमति— प्रमाणवार्तिकं १।२०७

(ग) मग्गानट्ठङ्गिको सेट्ठो । धम्मपद २०।१

मित्याकारिकाया वासनायाः दाढ्र्यमेव 'मार्ग' इत्यभिधीयते। अयं 'मार्ग' एव निरोधसंज्ञकस्य आर्यसत्यस्य कारणम्। अस्यैव हितकारिमार्गस्यावलम्बनेन मानवः निर्वाणं प्राप्नोति। आलयसंज्ञकविज्ञानमेव आत्मनः स्वरूपम् तस्मादेव निखिला वासना उद्भवन्ति। एतासां वासनानां नाश एव आत्मशुद्धिरिति निगद्यते। मार्गशब्दस्यार्थोऽपि संमार्जनं शुद्धिर्वा भवति। वस्तुतस्तु आत्मा 'वासना' रूपम् एव। स च ज्ञानप्रवाहरूपः। अस्थिरज्ञानसन्ततेर्नाश एव आत्मनो विनाशः। सर्वाणि दुःखानि आत्मन एवोत्पद्यन्ते, अत आत्मनो विनाशेनैव दुःखस्य क्षयो भवति। दुःखनाश एव पुरुषार्थः। अयं पुरुषार्थ एव आत्मनिर्वाहशब्देन कथ्यते। इत्थं भगवता बुद्धेन स्वकीयान् शिष्यान् प्रति चत्वारि आर्यसत्यान्युपदिष्टानि।

# अक्षरविवेचने ऋकारऌकारौ

विश्वनाथमिश्रः

विप्रतिपद्यन्ते केचित् स्वर एवाक्षरम्, न तु व्यञ्जनमपि। तत्रापि ऋकारऌकारौ न स्वरौ किन्तु व्यञ्जनवर्णौ। स्वरमात्रस्याक्षरत्वप्रसाधिकेयं विप्रतिपत्तिर्नास्त्यहैतुकी यजुःप्रातिशाख्ये "स्वरोऽक्षरम्" १।८९ इति सूत्रेण तथा ऋक्प्रातिशाख्येऽपि—"सव्यञ्जनः सानुस्वरः शुद्धो वापि स्वरोऽक्षरम्" १८।३२ इति सूत्रेण च केवलं स्वराणामेवाक्षरत्वव्यवस्थापनेन तत्र सहेतुकत्वस्य स्पष्टं वक्तव्यत्वात्। अत एव स्वर्यते शब्द्यते व्यञ्जनं येन स स्वरः। विगतम् अञ्जनम्–उच्चारणं यस्य तत् व्यञ्जनम् अर्थात् यस्योच्चारणं न स्यात् तदेव व्यञ्जनमित्युभयोर्व्युत्पत्तिः शक्यते कर्त्तुम्। अतएव छन्दःशास्त्रे केवलं स्वराणामेव मात्रागणना कृता न तु व्यञ्जनानामपि। अतः स्वरा एवाक्षराणि इति सिद्ध्यति।

अत्रोच्यते नहि व्यञ्जनशब्दस्य व्युत्पत्तिः-विगतमञ्जनमुच्चारणं यस्येति युज्यते वक्तुम्, विशिष्टम् अञ्जनमुच्चारणं यस्येति व्युत्पत्तेरपि संभवात्। उच्चारणे वैशिष्ट्यञ्च-स्वरप्रयोज्यम्। अतएव स्वर्यते शब्द्यते येनेति स्वरशब्दस्य व्युत्पत्तिरपि संगता भवति। अत एव अचमन्तरेण व्यञ्जनस्योच्चारणमपि न संभवतीति भाष्यमपि संगच्छते। तस्मात् स्वर इव व्यञ्जनमपि अक्षरमिति शक्यते वक्तुम्। अतएव "वर्णैकदेशा वर्णग्रहणेन चेत् सन्ध्यक्षरे समानाक्षरविधिप्रतिषेधः"[१] इति भाष्यप्रदीपोद्योते "अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ" दश समाना इत्युक्त्वा समानाक्षरेषु ऋऌवर्णयोर्ग्रहणं कृतं संगच्छते। ऋक्प्रातिशाख्येऽपि "अष्टौ समानाक्षराण्यादितः" १।६ सूत्रे वर्णसमाम्नायस्यादाक्षराणि समानाक्षरसंज्ञकानि भवन्तीत्युक्तम्। यद्यपि भाष्योद्योते दशवर्णानां समानाक्षरत्वं तथा इह चाष्टौ वर्णानां तदिति पार्थक्यं वर्तते, तथापि ऌकारमतिरिच्य ऋकारस्य तु अक्षरत्वम् ऋक्प्रातिशाख्यतोऽपि साधितमेव। किञ्च ऌकारस्याक्षरत्वं तत्राप्यच्त्वं तस्य "ततश्चत्वारि सन्ध्यक्षराण्युत्तराणि"[२] इति सूत्रव्याख्याने निपुणमेव प्रसाधितम्। तत्र ह्युक्तम्–"तत इत्यनयैव पञ्चम्या

१. नवाह्निकमहाभाष्यम् पृ० ११६।
२. ऋग्वेदप्रातिशाख्यम्-श्रीमंगलदेवशास्त्रिसम्पादितम् पृष्ठम् २४।

सन्ध्यक्षराणां समानाक्षरैः सहानन्तर्यं सिद्धे यदुत्तराणीति वदति तदन्तरा लृ लृ इत्यनयोः स्वरयोः प्रतिषेधार्थम् ।" अत्र नामग्राहम् लृकारस्य स्वरत्वमुक्तं तेन तस्य अक्षरत्वञ्चापि सिद्धयत्येव । नह्यक्षरत्वमन्तरा तदधिकरणकं स्वरत्वं शक्यते वक्तुम् ।

किञ्च वर्णानां मात्राप्रयुक्तह्रस्वादिसंज्ञाविधानावसरे "मात्रां ह्रस्वः"[1] इति सूत्र व्याख्यानं कुर्वता "ह्रस्वस्वरो मात्राकालो वेदितव्यः । यथा अ इ उ लृ" इत्युदाहरणं च प्रदर्श्य लृकारस्य स्वरत्व तद्ग्राह्यमत्त्वञ्च निपुणं प्रादर्शि ।

यदि चोच्येत–एवं चेत् यजुःप्रातिशाख्ये "स्वरोऽक्षरम्" तथा ऋग्वेदप्रातिशाख्ये च "सानुस्वरः सव्यञ्जनः शुद्धो वापि स्वरोऽक्षरम्" इति स्वरमात्रस्याक्षरसंज्ञाविधानमपार्थमेवेति चेदत्र ब्रूमः--वेदे स्वराणामुच्चारणस्य महती प्रधानता दत्ता वर्तते । "यो वा इमां स्वरशोऽक्षरशश्च वाचं विदधाति" तथा "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह" इत्यादि भाष्येण चैतदेव ध्वन्यते । तत्र स्वरपदेन क्वचिदुदात्तादयः क्वचिच्च स्वरपदेनाकारादयो गृह्यन्ते । एवमेव उच्चारणप्रधान्यमधिष्ठायाक्षरपदमपि तत्र पारिभाषिकमेवावतिष्ठते । उक्तञ्च "उभये त्वक्षराणि"[1] १।१९ इति सूत्रभाष्ये उव्वटेन "ननु कस्मात् प्रकृता एव स्वरा दीर्घा ह्रस्वाश्चोभयग्रहणेन नान्तर्भाव्यन्ते । येनेमौ व्यवहितावपि लृकारप्लुतावुभयग्रहणे नान्तर्भाव्येते इति । शृणु तन्त्रान्तरे "स्वरोऽक्षरम्"[3] इति स्वरमात्रस्याक्षरसंज्ञा विधीयते । अयमपि "सव्यञ्जनः सानुस्वरः शुद्धो वापि स्वरोऽक्षरम् १८।३२ इति स्वरस्याक्षरसंज्ञां विधास्यति । न चाक्षरसंज्ञां विनोदात्तादयस्तदाश्रयाः स्युः । किञ्च गुरुलघुपूर्वाङ्गपराङ्गचिन्तामक्षरस्यैवेदानीं वक्ष्यति"। एतेन सिद्धयति यत् प्रयोजनविशेषानुरोधात् वैदिकाक्षरसंज्ञा पारिभाषिकी । तत्रार्धमात्राकालावच्छिन्नव्यञ्जनानामनुपयोगिता एवेति न कृता तेषां पारिभाषिक्यक्षरसंज्ञावैदिके विधाने । अन्यत्र तु सर्वत्राक्षरशब्देन स्वराणामिव व्यञ्जनानां चापि ग्रहणं दृश्यते । उक्तञ्च याज्ञवल्क्येन—

संयोगे तु परं स्वार्यं परं संयोगनायकम् ।
संयुक्तस्य तु वर्णस्य न स्वार्यं पूर्वमक्षरम् ॥[4]

---

१. ऋक्प्रातिशाख्यम् पृष्ठम् ३६ ।
२. तत्रैव पृष्ठम् ३१ ।
३. अथ० प्रा० १।९३ ।
४. याज्ञवल्क्यशिक्षा ।

अर्थात् व्यञ्जनानां संयोगे परं व्यञ्जनं स्वार्यं = स्वरसहितं कार्यं, तदेव च संयोगनायकम् । पूर्वमक्षरं व्यञ्जनं न स्वार्यं न स्वरसहितं कार्यमिति । अत्राक्षरशब्देन व्यञ्जनग्रहणं स्पष्टतया कृतम् ।

अनुस्वारे विवृत्यां तु विरामे चाक्षरद्वये ।
द्विरोष्ठ्यौ तु विगृह्णीयात् यत्रौकारवकारयोः ॥[1]

अत्राक्षरशब्देन संयुक्तव्यञ्जनद्वयस्य ग्रहणं कृत्वा व्यञ्जनानामक्षरत्वं साधितमेव ।

अतएव अक्षराणां गणनावसरे ऋक्प्रतिशाख्ये अष्टौ समानाक्षराण्यादितः इत्यारभ्य "सर्वः शेषो व्यञ्जनानि"[2] इत्यन्तं यावदक्षरविभागः कृतः । तत्र च अक्षरपदेन स्वराणां व्यञ्जनानामुभयेषां गणना कृता । एवमेव यजुःप्रातिशाख्येऽपि" "अथातो वर्णसमाम्नायं व्याख्यास्यामः" इति प्रकरणे स्वरव्यञ्जनयोरुभयोर्ग्रहणं कृतम् । भगवता भाष्यकृताऽपि स्वरव्यञ्जनसमुदायात्मकचतुर्दशसूत्राणामक्षरसमाम्नायत्वं व्याहृतम्—"सोऽयमक्षरसमाम्नायः पुष्पितः फलितः चन्द्रतारकवत् प्रतिमण्डितो ब्रह्मराशिरिति"[3] । किञ्च-अक्षरशब्दस्य व्याख्यानं कुर्वता भाष्यकारेण प्रत्याहाराह्निके "अक्षरं न विद्यात्" इत्युक्तम् । तत्र न क्षरतीति न क्षीयते वा यत् तदक्षरम् । अथवा "अश् व्याप्तौ" अस्मात् औणादिके सरन्प्रत्यये निष्पन्नोऽक्षरशब्दो व्यापकार्थकः । "अथवा वर्णं वाहुः पूर्वसूत्रे" अर्थात् पूर्वेषामाचार्याणां सूत्रे वर्णा अक्षराणीति इति वर्णानामेव अक्षरसंज्ञा कृता । एवञ्चोपर्युक्तप्रपञ्चेनेदं निश्चप्रचं यद् अक्षरशब्दो वर्णपर्यायः । स च द्विविधः स्वरो व्यञ्जनञ्च । स्वतन्त्रोच्चारणविषयः स्वरः । स्वराधीनोच्चारणविषयो व्यञ्जनमिति ज्यायसी व्यवस्था । छन्दःशास्त्रे मात्राणामावश्यकतामनुरुध्य स्वराणामेव ताः परिगणिताः न तु अनुपयोगिन्यो व्यञ्जनमात्राः । नैतावता व्यञ्जनानामक्षरत्वाभावः शंकनीयः कदाचित् ।

यदप्युच्यते-ऋकारलृकारौ न स्वरौ, किन्तु व्यञ्जने, यतो हि "पदाद्यन्तयोर्न लृकारःस्वरेषु"[4] इति सूत्रेण लृकारस्य स्वरेभ्यः पृथक्करणस्य दृष्टचरत्वात् । किञ्च "धातौ स्वरः क्लृप्यतावॢलृकारः"[5] इति सूत्रे कृपधातोः ऋकारस्य लृकार-

१. पाणिनीयशिक्षा ।
२. ऋक्प्रातिशाख्यम् पृष्ठम् २८
३. नवाह्निकं भाष्यम् पृ० १४७
४. ऋक्प्रातिशाख्यम् पृ० १८
५. तत्रैव पृ० ३९३

भावे तस्य स्वरत्वं साधितम्। तच्च साध्यते पूर्वतोऽसिद्धमेव। यदि लृकारे पूर्वत एव स्वरत्वं स्यात् तदा तस्य तद्विधानं व्यर्थमेव स्यात्। किञ्चानयोः ऋकारलृकारयोः मध्ये रश्रुतिः लृकारश्रुतिश्चापि अनयोः स्वरत्वाभावमेव व्यञ्जयति। नह्यस्मिन् कस्मिंश्चिदपि स्वरे भवति श्रुतिर्व्यञ्जनवर्णस्य। तस्मादनयोर्व्यञ्जनत्वमेव युक्तमिति।

अत्र विचार्यते—ऋकारलृकारावुभावपि स्वरावेव। अक्षरसमाम्नाये, शिक्षायाम्, "एते स्वराः" इति ऋक्प्रातिशाख्ये च स्वरमध्ये तयोरपि परिगणनस्य दृष्टत्वात्। याज्ञवल्क्येनापि—

"लृकारस्य तु दीर्घत्वं नास्ति वाजसनेयिनः"

इत्युक्त्वा लृकारस्य स्वरत्वं स्वीकृतमेव। दीर्घत्वादयः स्वरधर्माः सन्ति। अतः स्वरत्वाभावे लृकारस्य दीर्घनिषेधः सर्वथैवासंगतः स्यात्। यद्यपि "कृपो रोलः"[१] इति सूत्रव्याख्यानात् "ऋति ऋृवा"[२] "लृति ल्लृवा"[३] इति वर्तिकद्वयव्याख्यानाच्च "ऋकारलृकारमध्ये रकारलकारौ स्तः" इति प्रतीयते तथापि नैतावता तयोरस्वरत्वं व्यञ्जनत्वं वा साधयितुं शक्यते, यतो हि ऋलृवर्णयोर्विषये प्रकारद्वयस्योज्जृम्भणात्। तत्र प्रथमः प्रकारोऽयं वर्तते यद् अक्षरसमाम्नाये -'ऋलृक्" इति सूत्रे पठितौ हि ऋलृवर्णौ विवृतप्रयत्नवन्तावेकमात्रिकौ स्वरौ। अतस्तयोः परत्वे "दध्यृकारः'; दध्य्लृकारः इत्यादीनि यण्वटितानि उदाहरणानि द्रष्टुं शक्यन्ते। अनयोश्च परस्परस्थानभेदात् सावर्ण्यं न प्राप्नोतीति ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यमिति प्रावोचत् वार्तिककारः। तेन ऋतः सवर्णे ऋति लृति च होतॄकारः इति दीर्घघटितं रूपं भवति। भाष्यकारेण च "ऋति ऋृ वा वचनम्," "लृति ल्लृ वा वचनम्" इति रूपेणापरोऽपि पक्षः प्रस्तुतीकृतः। अत्र वार्तिकद्वये विधेयं वर्णद्वयं द्विमात्रम्। तयोराद्यस्य ऋकारस्य मध्ये द्वौरेफौ तयोरेका मात्रा, तदुभयतः अज्भक्तेरपरा मात्रा। एवं 'लृतिल्लृ वा" इति वार्तिकविधेये द्वौ लकारौ तयोश्चैका मात्रा, लकारद्वयस्याभितोऽज्भक्तेरपरा मात्रा। एवं चेमौ ऋकारल्लृकारौ न विवृतप्रयत्नवन्तौ, किन्तु रकारलकारद्वयवत् सादृश्यात् ईषत्स्पृष्टप्रयत्नवन्तौ विभृतः कश्चित् विशेषं स्वात्मनि। ईषत्स्पृष्टकरणत्वाच्च नयोरनच्त्वमिति संभावनायामाह-भाष्यकारः-

---

१. वैयाकरणसिद्धान्तकौमुदी बालमनोरमा पृ० १०६

२. नवाह्निकं मह भाष्यम् पृ० २४८

३. तत्रैव

"ऋकारस्य ऌकारस्य चाच्त्वं वक्ष्यामि" इति भाष्यवचनमिदं विवृण्वता कैयटेनोक्तम्-' ऋ वा वचनं ऌ वा वचनं" इति ब्रुवता अच्त्वमनयोर्वक्तव्यम्। अन्यथा विधानमात्रमनयोः स्यात् नाच्कार्यं प्लुत। सति त्वच्त्वे ताभ्यां त्रिमात्रयोरपि सावर्ण्यात् ग्रहणे सति प्लुतसिद्धिः[२]। तच्च समीहितमच्त्वमनयोः "अइउण्" सूत्रानन्तरं पाठाद्बोध्यम्।

एतेनोपर्युक्तप्रपञ्चेन ऋकारलृकारयोर्द्वैविध्यं तत्र च तयोरच्त्वमिति प्रसाधितम्। इदमत्रापरं विज्ञेयम्—इह समुदाया अप्युपदिश्यन्ते, अवयवा अपि। समुदायास्तावत् ऋ-ऌ-ए-ओ-ऐ-औ इति। अवयवास्तु-अइउणरट्लण इति। तत्र य एते वर्णेषु वर्णैकदेशा वर्णान्तरसमानाकृतयः सन्ति तेषामवयवसदृशवर्णग्रहणेन ग्रहणेऽभिप्रेते प्रऌय इत्यत्र दीर्घोकारेऽपि ह्रस्वत्वप्रयुक्तस्तुक् इव, किं वा, खट्वाभिरित्यत्र ह्रस्वाकारप्रयुक्तो भिसः स्थाने ऐस इव "प्रातर्-ऋतम्" इत्यत्र [३]रोरीति सूत्रेण रकारलोपविषयकं शंकासमाधानं न कृतं भाष्ये। किञ्च यदि वर्णावयवा वर्णग्रहणेन गृह्येरन् तावतापि "मातृणाम्" इत्यत्र "रषाभ्यां नो णः समानपदे"[४] इत्यनेन नकारस्य णत्वं न सेत्स्यति यतो "यत्तद्रेफात् परं भक्ते" इत्युक्त्यनुसारं ऋकारगतस्य रभागस्य सर्वतोऽज्भागेन व्यवहितत्वमिति रकारनकारयोरनान्तर्यात्।

विवेचनेनानेन यद्यपि प्रतिभासते ऋकारे रकारो ऌकारे च लकारस्तथापि प्रतीतिरियं भ्रान्तिजन्यैवेति प्रतीमः। उक्तञ्च-कैयटेन "नरसिंहवद् वर्णान्तरत्वात् सादृश्याच्च प्रत्यभिज्ञानात् तत्त्वासिद्ध्या पृथगुपलब्धानां वर्णानां समुदाये नास्ति सत्त्वम्। भ्रान्तिवशात्तु अवयवप्रतीतिः[६]। कैयटोक्तेरस्या व्याख्यानं कुर्वतोद्योतकारेणोक्तं "सत्यपि गोसादृश्ये गवये गोत्वस्येव सन्ध्यक्षराद्यवयवेषु अत्वादिजातेरभावात् अकारादिग्रहणेन ग्रहणं नेति भावः। ऐकारादीनामेकेच्छाप्रयत्नजन्यत्वेनैकत्वमेव, अकारादिवत्। अत एवैषां पदवन्न वर्णसमूहत्वेन प्रतिभासः। भ्रान्तिगृहीतावयवाश्रयेण समुदायवाचोयुक्तिरिति[७]। एतेन निर्विवादं शक्यते वक्तुं यद् समुदायवत् प्रतीयमानानि वस्तुतोऽसमुदायरूपाणि सन्ध्यक्षराणि स्वतन्त्रसत्ताकानि सन्ति। भ्रान्त्या

१. तत्रैव पृ० २४६ २. तत्रैव पृ० २५०
३. सिद्धान्तकौमुदी बालमनोरमा पृ० ११२ ४. तत्रैव पृ० १५४
५. नवाह्निकं भाष्यम् पृ० १२१ ६. तत्रैव पृ० ११६
७. तत्रैव पृ० १२०

प्रतिभासन्तां तत्रावयवा इत्यन्यदेतत्। अतएव "मातॄणामित्यादौ णत्व-सिद्ध्यर्थं पठ्यते", 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति।

इदमपरमप्यविचारितरमणीयं विवेचनीयतामापद्यते यत् "अ-इ-उ" इति स्वराणामुच्चारणकाल इव ऋलृवर्णयोरुच्चारणकाले जिह्वा शिथिला सती पतिता न तिष्ठति। तेन मन्तव्यम् 'ऋकारलृकारौ न स्वरावि'ति। तत्रोच्यते अ-इ-उ स्वराणामुच्चारणकाल इव "ए ऐ ओ औ" इति वर्णानामुच्चारण-कालेऽपि जिह्वा शिथिला सती पतिता न तिष्ठति। किमेतेन एषां वर्णानां व्यञ्जनत्वं स्वीकर्तुं शक्यते केनापि। नो चेत् ऋकारलृकारयोरेव कृते मुधैव एतादृश आग्रहः। वस्तुतः प्रत्येकं वर्णानामुच्चारणस्थानं भिन्नं भिन्नं भवति। तत्र स्थानप्रयत्नानुकूलैव जिह्वायाः स्थितिः। अतस्तद्द्वारा स्वरव्यञ्जनविभागो न शोभनः। अतएव एकेनैव कण्ठेनोच्चार्यते अकारेण समं व्यञ्जनं कवर्गोऽपि। स्वेन राजन्ते, स्वर्यन्ते वा यैस्ते स्वराः। एतादृशञ्च स्वरत्वम् अकारादीनामिव ऋकारलृकारयोरप्यव्याहतमेव। यथा अकारो व्यञ्जनानामुच्चारणे साहाय्यमाचरति, तथैव कृष्णशब्दघटकककारोच्चारणे ऋकारस्य तथा 'क्लृप्तशिखः' इत्यत्र ककारोच्चारणे लृकारस्य साहाय्यं न केनापि तिरोहितम्। तेनास्थाने खलु सन्देहोदयः ऋकारलृकारयोरज्विषयकः।

"यत्तद् रेफात् परं भक्तेः"[1] इति भाष्ये "अभितोऽज्भक्तेरपरा मात्रा" इति कौमुद्याञ्च[2] समापतितो भक्तिशब्दोऽपि नालम्बतेऽनालोचनताम्। तत्र भक्तिशब्दार्थो भागः। तेन रेफाद् भक्तेरित्यस्य रेफसदृशो यो भागः ऋकारे वर्तते तस्मात् परः अचो भाग एवाज्भक्तिः। तेन व्यवहितत्वात् मातॄणामि-त्यादौ नस्य णत्वानापत्त्या आरभ्यते 'ऋवर्णान्नस्य णत्वं वाच्यमिति'। तस्माद-कारादावचि स्वातन्त्र्येण यथा तेषामेव सर्वस्वम् तथैव ऋकारलृकारयोरप्यचोः यो रेफसदृशो लकारसदृशो वा भागस्तस्मात् परस्तस्यैव स्वकीयोऽज्भागो वर्तते, न तु तत्र अकारादिस्वराणां भागः कथंचित् शंकनीयः। "किरति गिरति," इत्यत्र ऋकारस्य, इरादेशः "मातुः" इत्यादौ तु उरादेशः "देवर्षिः" इत्यादौ च अरादेशः "ऋत्—इद्धातोः" "ऋत उत्" इत्यादिसूत्रद्वारा यथादिष्टं लक्ष्यैकचक्षुष्कैस्तथैव भवति। न तु तत्र अकारदीनां भक्तिं स्वीकृत्य विधीयते किमपि। अतः अक्षरशब्देन स्वरव्यञ्जनयोरुभयोर्ग्रहणम्। ऋकार-लृकारौ चेत्युभावपि स्वरावेवेति नास्ति संशीतिलेशः॥

---

१. सिद्धान्तकौमुदी बालमनोरमा भ्वादौ पृ० १४८
२. तत्रैव पूर्वार्धे पृ० १८३

# आधुनिके युगे तर्कशास्त्रस्य परमोपयोगिता

डा० गजाननशास्त्री मुसलगांवकरः

चार्वाकप्रभृतयो निरीश्वरवादिन इति विश्रुतमेव सर्वेषाम्। जगदिदमाकस्मिकमिति ते आचक्षते। अस्य जगतो रचयिता न कश्चिदीश्वरो नाम सर्वज्ञः सर्वशक्तिमान् पुरुषविशेषः। क्षिति-सलिलानलाऽनिलानां भूतानां विजातीयसंयोगात् किण्वेभ्यो मदशक्तिरिव समुत्पद्यते चितिशक्तिः। उत्तरोत्तरञ्च पदार्थस्वभावा विकसन्तो नानाविधरचनाभित्तीश्चित्रयन्तो दरीदृश्यन्ते। यत्र च 'अहं स्थूलः अहं कृश' इति सामानाधिकरण्यप्रत्यय उदेति, स एव भोक्तापरपर्यायो देह आत्मा, तदतिरिक्त आत्मनि प्रमाणाभावात्। प्रत्यक्षातिरिक्तञ्च नास्ति प्रमाणम्। न वा परलोकः सुकृताऽसुकृतसन्धानक्षमो नियन्तृविशेषाऽपेक्षः।

एवं जातीयकानां कुतर्काणां समूलोन्मूलनं तर्कशास्त्रादेव भवितुमर्हति। नहि तावत् निरीश्वरवादिदुर्दान्तचार्वाकादिकुमतपरासनमनायासेन न्यायशास्त्राश्रयणमन्तरा भवितुमर्हति। तथाचोक्तं महर्षिणा गौतमेन—

"तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्"[१] अतएव "जल्पस्थले संशयस्य आवश्यकत्वेऽपि वादस्थले न तथा इति संशयमन्तरेणाऽपि अनुमित्साधीनानुमितिनिर्वाहाय न्यायप्रयोग संभवात्"[२] इति। अतः "सन्दिग्धेऽर्थे न्यायः प्रवर्त्तते इति नियमस्तु जल्प एव, नतु वादे" इति। तस्माद् वैदिकतत्त्वनिर्णयाय निरस्तसमस्तपुन्दूषणतया वेदा एव प्रमाणं, नहि तर्कस्योपयोग इति नैव वक्तुं-शक्यम्। यतो महाजनपरिगृहीतागमप्रामाण्यविप्लावनतत्परचार्वाकादिकुतर्ककुठारकुण्ठीकरणक्षमतयाऽस्य शास्त्रस्य वैदिकसिद्धान्तरक्षणे परमोपयोगं मन्यन्ते आगमविदः।

अतएव उत्तरमीमांसायामपि दुर्दान्तवादिमतदलदलनाय श्रुतिप्रमाणापेक्षां परिहाय शास्त्रार्थाहवे केवलस्तर्कपाद एव पदातिमुख्यतां नीतः। यदि नाम प्रत्यक्षातिरिक्तमनुमानं प्रमाणं न स्यात्, कथं तर्हि अप्रतिपन्नाः सन्दिग्धा विपर्यस्ताश्च पुरुषाः प्रतिपद्येरन्, अर्थात् 'अयमज्ञानी, अयं संशयाकुलः,

---

१. न्या. सू. (४।२।४८)

२. अवयवग्रन्थनिरूपणे गदाधरः।

अयं भ्रान्तिमान्' इति ज्ञातुं चार्वाकः कथं प्रभवेत् ? नहि कश्चिदपि गौरत्वादिदेहधर्ममिव पुरुषान्तरवर्तिनोऽज्ञानादीन् कल्पकोटिभिरपि प्रत्यक्षेणाध्यक्षीकर्तुं क्षमते। मा नाम योगिप्रत्यक्षगोचरान् परकीयाज्ञानादीन् चार्वाको वराको ज्ञासीत्, किन्तु अज्ञातपरकीयाऽज्ञानसंशयविपर्यासस्तु यं कञ्चनापि पुरुष प्रति वर्तमानोऽनवधेयवचनतया प्रेक्षावद्भिर्नितान्तमुपेक्षणीयः सतां संसदि। तस्मात्परपुरुषवर्तिनोऽज्ञानादयोऽभिप्रायभेदा वचनभेदात्मकलिङ्गबलान्नास्तिकेनाऽप्यनुमेया मन्तव्याः, अन्यथा सकलव्यवहारोपप्लवप्रसङ्ग इत्यकामेनापि अनुमानं मानमभ्युपेयम्।

एवं सति ईश्वरस्य प्रत्यक्षाभावेऽपि कार्यलिङ्गेनानुमानेन तत्सिद्धौ न किमपि बाधकम्। अर्थात् यद्यपि रूपसाद्यभावात् ईश्वररूपोऽर्थः न प्रत्यक्षगोचरः, तदभावादेव च व्याप्तेरभावात् नानुमानगम्योऽपि, सादृश्याभावान्नोपमानमान्यः, तदभावादेव च तत्कर्तृकागमाभावात्तदविषयश्च, दुर्जनतोषन्यायेन आगमस्वीकारेऽपि अन्योन्याश्रयादिदूषणगणग्रस्ततयाऽऽगमस्य तत्साधने सर्वथाऽसामर्थ्यमेवेति कुचोद्यजातमवतरति, तथापि कार्यलिङ्गकमनुमानमीश्वरसाधने समुचितमीक्षामहे।

तथाहि—"क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वाद् घटवत्' इति। यद् यद् घटादिकार्यमुपलभ्यते तत् तत् सर्वमेव कुलालादिकर्तृजन्यमेवोपलभ्यते। अस्ति च क्षित्यङ्कुरादिकमपि कार्यत्वधर्मोपेतं, तत् कथं कर्त्तारमन्तरेणोत्पद्येतेति-भवितव्यं तस्यापि केनचित् कर्त्रा। अस्माकमल्पज्ञानशक्तिमतां तु तत्कर्तृत्वं स्वप्नेऽपि भवितुं नार्हति। जडञ्च परमाण्वादि स्वयं किमपि कुर्वन्नोपलभामहे। तस्माद् यस्तस्य कर्त्ता स एवेश्वरः सर्वज्ञः सर्वशक्तिमांश्चेति नात्र सभीतिः।

तथापि किमत्र पक्षतावच्छेदकमिति विचार्यमाणे न तावत् क्षितित्वं वक्तुं शक्यते, अङ्कुरादेरपि क्षितित्वेन पृथक् तदुपादानवैयर्थ्यात् अर्थात् पृथिवीत्वस्यैव पक्षतावच्छेदकत्वे अंकुरस्यापि पृथिवीकार्यतया पृथिवीत्वेन पृथक् तदुपादानं व्यर्थमेव। यद्येवमुच्येत पक्षकुक्षिनिक्षिप्तक्षितिपदस्य भूमण्डलपरतया भूमण्डलाङ्कुरादीनां सर्वेषामेव पक्षत्वलाभः, ततश्च सर्वानुगतं पक्षतावच्छेदकं पृथिवीत्वमेवेति नाङ्कुरादिपदोपादानवैयर्थ्यं तदा एवं प्रष्टुं शक्यते किं प्रकृते पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धरुद्देश्या ? पक्षतावच्छेदकावच्छेदकासामानाधिकरण्येन वा ? आद्ये दृष्टान्तभूतघटादौ अंशतः सिद्धसाधनम्। नहि तत्र कार्यत्वेन कर्तृजन्यत्वे कस्यचिद् विवादः। द्वितीये

पृथिवीपरमाणौ क्षितित्वसत्त्वेऽपि कार्यत्वहेतोर्बाधः। नहि तत्र क्षितित्वसत्त्वेऽपि कार्यत्वं स्वीकर्तुं शक्यम्। अथ जन्यक्षितित्वं पक्षतावच्छेदकं चेत्? तदा व्यर्थविशेषणम् परमतेऽजन्यक्षितेरभावात्। किञ्च जन्यत्वस्यैव पक्षतावच्छेदकत्वे पक्षतावच्छेदककोटौ क्षितित्वनिवेशो व्यर्थः। अपि चैवं जन्यत्व-कार्यत्वयोरविशेषात् पक्षतावच्छेदकहेत्वोरैक्यप्रसङ्गोऽनिवार्यः स्यात्। किन्तु प्रसङ्गोऽयमेवम्परिह्रियते—'स्वरूपसम्बन्धविशेषरूपकार्यत्वं पक्षतावच्छेदकं, प्रागभावप्रतियोगित्वरूपं कार्यत्वं हेतुतावच्छेदकमिति न पक्षतावच्छेदकहेत्वोरैक्यप्रसङ्गः।

इत्थम्पक्षविवेचनानन्तरं साध्यविवेचनमपि किञ्चित् क्रियते—कर्तृजन्यत्वं साध्यं न तावत् स्वोपादानगोचराऽपरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वम्, यतः कार्यमात्रं प्रति अन्वयव्यतिरेकाभ्यां कृतिरेव कारणं, कृतिजन्यज्ञान-चिकीर्षयोर्घटम्प्रति रासभस्येव अन्यथासिद्धत्वम्, तेन च तत् त्रितयजन्यत्वरूपस्य साध्यस्य बाधः। अपिच यादृशं स्वत्वं दृष्टान्तभूतघटादौ, न तादृशं पक्षवृत्तीति दृष्टान्त पक्षसाधारणस्य स्वत्वस्यैकस्य अभावात् तद्घटित "स्वोपादानगोचरे"त्यादिसाध्यस्य सुतरामसम्भव एवेति चेत्? न, कार्यमात्रं प्रति कृतित्वेन अन्वय-व्यतिरेकाभ्यां ज्ञानत्वेन इच्छात्वेन च हेतुत्वस्वीकारात्। तादृशज्ञानजन्यत्वस्य कृतिजन्यत्वरूपस्य वा साध्यस्य विवक्षितत्वेन कोऽपि बाधः।

अस्मिन् प्रसगे आर्हता एवमाहुः[1]—कार्यत्वहेतोरेव असिद्धत्वात् न हि तावत् उक्तानुमानेन ईश्वरसिद्धिः। न च 'क्षित्यादि कार्यं सावयवत्वात् पटवत्' इति वाक्यम्, सावयवत्वस्यैव अनिरुक्तेः। तथाहि—सावयवत्वं किमवयवसंयोगित्वम्, अवयवसमवायित्वं वा? अवयवजन्यत्वं वा? समवेतद्रव्यत्वं वा? सावयवबुद्धिविषयत्वं वा? इति पञ्च विकल्पाः। न तावदाद्यः पक्षः क्षोदक्षमः, आकाशस्य कपालाद्यवयवसंयोगित्वेऽपि कार्यत्वाभावात्, तेन 'सावयत्वं' हेतुरनैकान्तिकः। द्वितीयोऽपि न; सामान्यादौ व्यभिचारात्, नहि अवयवत्वरूपं सामान्यमवयवेषु समवायसम्बन्धेन वर्त्तते इति तवापि स्वीकारः। न च तृतीयः साध्यविशिष्टत्वेन साध्यसमत्वात्, तथाहि—यथा क्षित्यादिषु कार्यत्वं साध्यं तथाऽवयवजन्यत्वमपि साध्यं, तेन साध्येन अविशिष्टत्वात्, साध्यसमो हेत्वाभासः। चतुर्थे तु अवतरति विकल्पद्वयम्—किं नाम समवेतद्रव्यत्वम्? समवायसम्बन्धमात्रवद्द्रव्यत्वमिति चेत् आकाशादौ व्यभिचारः, गुणादिसमवायस्य तत्र सत्वात् द्रव्यत्वस्यापि च विद्यमानत्वात्। अथ

---

१. प्रमेयकमलमार्तण्डीयपक्षोऽर्थत उपक्षिप्तः।

अन्यत्र समवेतद्रव्यत्वं विवक्षितं तदा पूर्ववत् साध्याविशिष्टत्वेन साध्यसमता । वस्तुतस्तु समवाय एव नास्ति प्रमाणाभावात् । नापि पञ्चमः, सावयवबुद्धि-विषयत्वेऽपि कार्यत्वाभावात् आत्मनि अनैकान्तिकत्वम् ।

अपि च—यदि एकः कर्ता साध्यते तदा विशिष्टकार्येषु प्रासादादिषु व्यभिचारः, तत्र स्थापत्यादीनां बहूनां पुरुषाणां कर्तृत्वोपलम्भात् । कर्तृबहुत्वं चेत् तदा एककर्तृत्ववादभङ्गः । तस्माज्जगत्कर्तुरीश्वरस्याङ्गीकारो युक्ति-पराहतः, तथा सति रागादिविशिष्टतया तस्य अनीश्वरत्वप्रसङ्गः ।[१]

किन्तु उक्तमेतत्सर्वमनालोचितकर्कशतर्कस्वरूपाणां सुकुमारमतीनामभिधान-माकाशमुष्टिहननायते । तथाहि–'कार्यत्वं' हेतुर्नाऽसिद्धः सावयवत्वेन तस्य साधनात् सावयत्वञ्च समवेतद्रव्यत्वम् । तच्च—जन्यत्वे सति समवायसम्बन्धा-वच्छिन्नस्वाश्रयवृत्तिमत्वम् । तेन नैव जन्यगुणादिमदाकाशादिषु व्यभिचारः । 'जन्यत्वे सति अवयवसमवायित्वं वा,' तेन सामान्ये न अनैकान्तिकत्वम् । अवयवजन्यत्वं वाऽस्तु । नच साध्यसमता, क्षित्यादिषु अजन्यत्वस्य आर्हतैरपि अस्वीकारात् ।

सावयवबुद्धिविषयत्वं वा कार्यत्वमस्तु, तावतापि न दोषः । न चात्मनि अनैकान्तिकत्वम्, तादृशबुद्धिविषयत्वे तत्र कार्यत्वावश्यंभावस्वीकारप्रसंगात्, तत एव च तत्र अनात्मत्वापत्तेः किञ्च–'आत्मा अनित्यः सावयवत्वात् घटा-दिवत्' इति आभाससाम्यप्रसंग आर्हतपक्षे अनिवार्यो भवेत् । नच समवाय एव नास्तीति वाच्यम्, 'रूपी' इत्यादिविशिष्टबुद्ध्यनुपपत्तेः । स्वरूपसम्बन्धे च अनन्तस्वरूपकल्पना अपरिहार्या । तत्स्थाने च आर्हतैरपि स्वीक्रियमाणे कथञ्चित्तादात्म्यलक्षणसम्बन्धे विविधदूषणगणप्रसरप्रसंगः । एवं च सावयवत्वेन 'कार्यत्वं' हेतुर्नाऽसिद्धः । अथवा 'क्षित्यादि कार्यं भावत्वे सति विनाशित्वात्

---

१. उक्तञ्च वीतरागस्तुतौ—

कर्त्तास्ति नित्यो जगतः सचैकः
स सर्वगः सन् स्ववशः स सत्यः ।
इमाः कुहेयाः कुविडम्बनाः स्यु
तेषां न येषामनुशासकस्त्वम् ॥

२. अयमेव 'अविष्वग्भावलक्षणः सम्बन्ध इत्युच्यते आर्हतैः । तथाच-स्याद्वादमञ्जर्यां मल्लिषेणसूरिणा—तस्माद्धर्म-धर्मिणोरविष्वग्भावलक्षण एव सम्बन्धः प्रतिपत्तव्यो नान्यः समवायादिरिति ।

पटवत्' यत्र यत्र भावत्वे सति विनाशित्वं तत्र तत्र कार्यत्वम्। किंवा 'यत्र यत्र कार्यत्वे सति भावत्वं तत्र तत्र विनाशित्वम्' इति विनाशित्वकार्यत्वयोः [1]समैव व्याप्तिः पार्थसारथिमिश्रोऽप्याह—यत्र न्यूनाधिकभावेन व्याप्यव्यापकभावत्वमसंकीर्णं, यथा गोत्वविषाणित्वयोः तत्र व्याप्यमेव गोत्वं विषाणित्वमनुमापयति। नतु व्यापिका विषाणिता गोत्वम्। अतः समोदाहरणेऽपि व्याप्यतैव अनुमितेरङ्गं न—व्यापकतेति। एवमीश्वरवादविद्विषां कार्यत्वं हेतुः स्वरूपाऽसिद्ध-इत्यभिधानमसङ्गतम्। नापि कार्यत्वं व्यभिचारि, पक्षादन्यत्र साध्याभावाधिकरणे आत्मादौ वृत्तेरप्रसिद्धेः। न चायं विरुद्धो हेतुः, साध्याभावव्याप्तेरभावात्। नापि कालात्ययापदिष्टः, बाधकस्य अनुपलम्भात्। न च सत्प्रतिपक्षः, साध्याभावसाधकस्य हेत्वन्तरस्य अदर्शनात्।

अपि च यदिदं प्रत्यहमुपचीयमानं ज्ञानैश्वर्यादिकं मानवेषु वीक्षामहे तन्न स्वाभाविकं भवितुमर्हति तथा सति तस्य परसाहाय्यापेक्षानुपपत्तेः। न हि किञ्चिदपि स्वाभाविकं सत् परसाहाय्यापेक्षि दृष्टचरम्। यदात्मलाभाय परसाहाय्यमपेक्षते न तत् स्वाभाविकम्, अपितु नैमित्तिकम्। उपलभ्यमानञ्च ज्ञानैश्वर्यादिकं नियमेन परसाहाय्यमपेक्षते इति सर्वविदितमेव। एवं ज्ञानैश्वर्यस्य नैमित्तिकत्वे साम्प्रतमिव सर्गादावपि भवितव्यं तस्य केनचिन्निमित्तेन, नैमित्तिकस्य निमित्तमन्तराऽनुपलब्धेः। न हि विना निमित्तं कस्यचिन्नैमित्तिकस्य अस्तित्वमुपलभेमहि। नैमित्तिकं च स्वाभाविकं चेति विप्रतिषिद्धम्। सर्गादिभुवो मानवास्तु अनधीतविषयत्वेन अनधिगतार्थत्वेन च समानमतयः कथं परस्परं ज्ञानैश्वर्यविनिमयाय निमित्तभावमुपगच्छेयुः, असति च ज्ञानैश्वर्यशालिनि कस्मिंश्चिदलौकिके शक्तिशालिनि अद्य यावज्जगदान्ध्यमेव प्रसज्येत। जडञ्च प्रधानादि स्वयं तादृशज्ञानैश्वर्यपरिणामाय विभवितुमसमर्थम्। परिशेष्यात् सर्वज्ञं सर्वशक्ति पारमार्थिकं किमपि वस्तु तेभ्यो वेदलक्षणया वाचा ज्ञानैश्वर्यं वितरतीति नूनं स्वीकार्यम्। योगसूत्रकारैः[2] पतञ्जलिरपि समर्थयति वृत्तमिदम्। यथा इदानीन्तनानामस्माकं वेदशास्त्रादिपरम्परया ब्रह्म एव ज्ञानैश्वर्यं प्रददद् गुरुः, तथा सर्गादिभुवां पूर्वेषामपि तादृशवेदशास्त्रपरंपरया ज्ञानैश्वर्यं प्रददद् गुरुर्विद्यत इति विज्ञेयम्। स च नास्मदादिवत् कालेना-

---

१. कुमारिल आह—'तेन यत्राप्युभौ धर्मौ व्याप्यव्यापकसम्मतौ।
तत्रापि व्याप्यतैव स्यात् अङ्गं न व्यापता मितेः॥
( श्लो. वा. अनु. श्लो. ६ )

२. "स एष सर्वेषामपि गुरुः कालेनाऽनवच्छेदात्" ( यो. सू. १।२६ )

वच्छिद्यते। एतादृशं शास्त्रं न निर्मूलं भवितुमर्हति, यच्च तन्मूलं तदेवास्माकं ब्रह्म, शास्त्रयोनि जगत्कर्ता ईश्वर इति। भगवती श्रुतिरेव[1] न केवलं जैनजनगणश्रद्धेय आप्तम आप्तपरीक्षाकारोऽपि एवमेवाह[2]। स खलु जगत्कर्तारमीश्वरमनङ्गीकुर्वन्नपि श्रेयोमार्गसिद्धिं परमेष्ठिनः सकाशादेव मन्यते। एतच्च भङ्ग्यन्तरेण श्रुतिसिद्धान्तानुसरणमेवाभिव्यनक्ति। इत्थं भूतचैतनिकवादादिनिरसने न्यायशास्त्रस्य महानुपकारः। अस्य शास्त्रस्य तर्कापरपर्यायमीमांसाद्वयसाहाय्यपर्यवसायितया वैदिकमार्गरक्षणाय परमोपादेयतायां न कस्यापि वैमत्यम्।

यद्यपि अनीश्वरवादिषु मीमांसाशास्त्रस्यापि परिगणनं लोकैः क्रियते, तत्समर्थने च विद्वद्भिः श्लोकवार्तिक न्यायकणिकादि ग्रन्थाः पुरस्क्रियन्ते, तच्छ्रुत्वा अनीश्वरवादिनो वदन्ति यत् धर्मरक्षणगृहीतदीक्षैरेव जगत्कर्ता ईश्वरः परास्यते तत्रास्माभिरेव किमपराद्धं तदनङ्गीकारविषये ? किन्तु तैरवगन्तव्यमिदम्— सर्वेषां वेदप्रामाण्याभ्युपगन्तॄणां वेदस्य तात्पर्यांशे मात्रयाऽपि विरोधो न दृश्यते। यश्च विरोध इव प्रतीयते, सचाधिकारिभेदनिबन्धनतया—प्रक्रियाभेदनिबन्धनः। सर्वेषामास्तिकानां वेदप्रामाण्यं रिरक्षयिषितम्, तत् क्वचित् स्वतःप्रामाण्याङ्गीकारेण, क्वचित् परतः प्रामाण्याङ्गीकारेण। आद्यपक्षस्थापना ईश्वरानङ्गीकारेऽपि प्रौढिवादमुद्रया भवितुमर्हति। कथमन्यथा "ब्राह्मेण जैमिनिरुपन्यासादिभ्यः" ( ब्र. सू. ४।४।५ ) इत्यत्र सर्वज्ञत्व-सर्वेश्वरत्वरूपेण स्वरूपाभिव्यक्तिं महर्षिर्व्यासो जैमिनिपक्षत्वेन समुपन्यास्यात्, अत्यन्तासतोऽभिव्यक्तेरनुपपत्तेः। नैके मीमांसकाः स्वस्व ग्रन्थेषु कुतश्च ईश्वराङ्गीकर्तृवत् मङ्गलमातेनिरेयदि तेषामीश्वरानङ्गीकारे आग्रहः स्यात्।

श्रीकुमारिलभट्टपादेन श्लोकवार्त्तिकादौ—

---

१. "नकिरिन्द्र ! त्वदुत्तरो न ज्यायाँ अस्ति वृत्रहन् ! नकिरेवा यथा त्वम्।" ( ऋ. ३।६।१९।१ )

"न तत्समश्चाभ्यधिकश्च दृश्यते"—( श्वे. उ. ६ ८ )—

२. "परमेष्ठी हि भगवान् परमोऽर्हन् तत्प्रसादात् परमागमार्थनिर्णयोऽपरस्य परमेष्ठिनो गणधरदेवादेः सम्पद्यते, तस्माच्चापरपरमेष्ठिनः परमागमशब्दसन्दर्भो द्वादशाङ्गः।"

—( आप्तपरीक्षा )

विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे ।
श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे ॥

श्रीपार्थसारथिमिश्रेन न्यायरत्नमालायाः प्रारंभे—

आनन्दममृतं ज्ञानमजं साक्षिणमीश्वरम् ।
ब्रह्म सर्वमसर्वञ्च वन्दे देवं हरिम्प्रभुम् ॥

श्रीशंकरभट्टेन मीमांसासारसंग्रहे—

नत्वा गणेशवाग्रामगुर्वङ्घ्रीन् भट्टशङ्करः ॥

श्रीवाचस्पतिमिश्रेण न्यायकणिकादौ—

परामृष्टः क्लेशैः कथमपि न यो जातु भगवान् ॥

श्रीकृष्णयज्वना मीमांसापरिभाषादौ—

सूर्यनारायणं वन्दे देवीं त्रिपुरसुन्दरीम् ॥

श्रीमदापदेवेन मीमांसान्यायप्रकाशे—

यत्कृपालेशमात्रेण पुरुषार्थचतुष्टयम् ।
प्राप्यते तमहं वन्दे गोविन्दं भक्तवत्सलम् ॥

श्रीखण्डदेवेन भाट्टदीपिकादौ—

विश्वेश्वरं नमस्कृत्य खण्डदेवः सतां मुदे ।

एवंच पूर्वमीमांसकानामीश्वरनिराकरणविषये तात्पर्यं कदाचिदपि नास्तीति सुदृढं वक्तुं शक्यते । यद्यपि श्रुतिमार्गे बद्धश्रद्धानामास्तिकानां वैदिकतत्त्वनिर्णयाय निरस्तसमस्तपुंदूषणतया वेदा एव प्रमाणं, तथापि वेद-प्रामाण्याऽनभ्युपगन्तॄणां दुर्दान्तचार्वाकादीनामाधुनिकानां भौतिक वादिनां कुतर्कजालकृन्तनाऽकुण्ठकर्तरीभावङ्गतस्य आर्यजनपरिगृहीतागमप्रामाण्य-विप्लावन तत्पराऽधुनिकविज्ञानवादिकुतर्क ठाकुरकुण्ठीकारणक्षमस्य भारतीय-तर्कशास्त्रस्य परमोपयोगे न कस्यापि संशीतिः ॥

—[ ० ]—

# अपभ्रंशभाषा

डॉ० देवेन्द्रकुमार शास्त्री

संस्कृतस्य प्राचीने वाङ्मये "अपभ्रंश" शब्दो भूम्ना लभ्यते । तत्र क्वचिदसौ विकृतिवाचको दृश्यते क्वचिच्च भाषा-वाचकः । निबन्धेनानेन एतत्सर्वमेव संक्षिप्य प्रस्तूयते । तत्र

**अपभ्रंश-प्रयोगाः**

पाणिनीये महाभाष्ये शेषावतारो भगवान् पतञ्जलिरुदीरयति—

'भूयांसोऽपशब्दाः, अल्पीयांसः शब्दाः ।
एकैकस्य हि शब्दस्य बहवोऽपभ्रंशाः । तद्यथा
गौरिति शब्दस्य गावी गोणी
गोता गोपोतलिका इत्येवमादयोऽपभ्रंशाः ॥[१]

वाक्यपदीय-नाम्नि व्याकरणागमे भर्तृहरिणाप्युच्यते—

साधौ प्रयोक्तव्ये योऽपभ्रंशः प्रयुज्यते ।
तेन साधुव्यवहितः कश्चिदर्थोऽभिधीयते ॥
पारम्पर्यादपभ्रंशा विगुणेष्वभिधातृषु ।
प्रसिद्धिमागता येषु तेषां साधुरवाचकः[२] ॥ इति ।

**कः पुनरपभ्रंशो नाम--**

कः पुनरपभ्रंशो नामेति जिज्ञासायां वाक्यपदीयकार एव तत्रभवान् भर्तृहरिदेवं प्रतिपद्यते—

'शब्दः संस्कारहीनो यो गौरिति प्रयुयुक्षितः ।
तमपभ्रंशमिच्छन्ति विशिष्टार्थनिवेशिनम् ॥[३]

एतेनेदं स्पष्टं यत् 'संस्कृतादतिरिक्तं यदपि किञ्चित् तत् सर्वं शब्दसंस्कारहीनत्वात्, शब्दशास्त्रनियमरहितत्वात्, संस्कृतशब्दानुशासनासिद्धत्वाच्च 'अपभ्रंश' इति उच्यते ।

---

१. महाभाष्ये १.१.१
२. वाक्यपदीये, ब्रह्मकाण्डे १४८
३. तत्रैव १।१४८

अपभ्रंश-शब्दस्य भाषा-भिधायित्वं पुनस्तस्य साधुशब्दस्येव अर्थप्रकाशकत्वात्कृतिवचनेभ्यः स्पष्टम् । तथा चाह संग्रहकारः—

'शब्दप्रकृतिरपभ्रंश' इति,

वाक्यपदीयेऽपि—

'अस्व-गोण्यादयः शब्दाः साधवो विषयान्तरे ।[१]
निमित्तभेदात् सर्वत्र साधुत्वं च व्यवस्थितम् ॥' इति,

नागेशभट्टोऽपि—

'सा च शक्तिः साधुष्विवापभ्रंशशब्देस्वपि ।' इति,

वैयाकरणभूषणसारेऽपि—धात्वर्थ-निर्णयविषये—

असाधुत्वेऽपि साधुत्वभ्रमाद् बोधोऽस्तु नाम अपभ्रंशवत् । इति,

लघुमञ्जूषाटीकायामपि—

'अपभ्रंशाः साधुशब्दैरभेदमिव प्रतिपन्ना अर्थस्य प्रकाशका' । इति ।

एवं हि अपभ्रंश-शब्दाः स्वतन्त्रशक्तिसम्पन्नतया स्वातन्त्र्येणैव 'भाषा'-रूपतां प्राप्नुवन्ति । अत्र प्रश्न :—

किं प्राकृतस्य प्रकृतिः संस्कृतम्

योऽयमुपरितनो विकृति-मात्रप्रतिपादकः अपभ्रंशशब्दः तेन प्राकृतमपि क्रोडीक्रियते । तर्हि को नु भेदः प्राकृतादस्यापभ्रंशपदवाच्यस्य भाषाभेदस्य । अत्र केचिद् भाषा-विभाषा-कल्पनया, प्रकृतिविकृतिकल्पनया वा समाधानमिच्छन्ति । तत्र प्राकृतं संस्कृतादुत्पन्नं संस्कृतविकृतिरिति मन्यमानो

१. मार्कण्डेयः[१] 'प्रकृतिः संस्कृतम् , तत्र भवं प्राकृतमुच्यते' इति,

२. सिंहदेवगणिः[२] 'प्रकृतेः संस्कृतादागतं प्राकृतमि- ति,

३. धनिकः[३] प्राकृतेरागतं प्राकृतम् , प्रकृतिः संस्कृतम्' इति,

४. अभिनवगुप्तः[४] 'अव्युत्पादितप्रकृतेस्तत्तज्जनप्रयोज्यत्वात् प्राकृतमिति केचिद्'-ति

---

१. प्राकृतसर्वस्वे

२. वाग्भटालङ्कारटीकायाम्

३. दशरूपकटीकायाम्

४. अभिनवभारत्याम्

५. नरसिंहलक्ष्मीधरौ[1] 'प्रकृतेः संस्कृतायास्तु विकृतिः प्राकृतीमता' इति,
६. चण्डः[2] 'सिद्धं प्राकृतं त्रेधा भवति, संस्कृतं योनि' रिति,
७. हेमचन्द्रः[3] 'प्रकृतिः संस्कृतम्, तत्रभवं तत आगतं वा प्राकृतम्' इति,
८. वासुदेवः[4] 'प्राकृतस्य तु सर्वमेव संस्कृतं योनि'-रिति
९. प्राकृतचन्द्रिका-कारश्च 'प्रकृतिः संस्कृतम्, तत्र भवत्वात् प्राकृतमि'-ति तेषु तेषु सन्दर्भेषूदाहरन्ति। अत एव च ई. बी. कावेल-भण्डारकर प्रभृतयोऽपि प्राकृतं संस्कृतयोनिकमेव मन्वते।

तथाहि भाष्यकारेण पतञ्जलिना यथा "सिद्धे शब्दार्थसंबंधे" संस्कृतशब्दानामनुशासनप्रवृत्तिरसूचि तथैव प्राकृतशब्दानां संबंधप्रयोजकतासंसूचनाय शब्दरूपसिद्धिविषये "संस्कृतं प्रकृतिः, तत्र भवं तत आगतं वा प्राकृतम्" इति संसूचितम्। अतएव 'प्रकृति' शब्देन नात्र 'योनि', अपितु "रचनाऽऽकारः (मॉडल) एव संस्कृतशब्दशस्त्राणां मन्तव्यः। प्राकृतमञ्जर्यां प्राकृतप्रकाशस्य पद्यविवृतौ तदित्थं विवेचितम्[5]—

एषामपरिमेयत्वाद् दाढादीनां पदं प्रति।
न शक्या गणना वीचिर्गणयेत् को नु सागरे।
याः सर्वलोकसामान्याः संस्कृतानन्विता गिरः।
अट्टमट्टप्रभृतयस्ताश्चाप्यत्रैव दर्शयेत्।
संस्कृतप्रकृतित्वेन ये न सिद्धयन्ति केवलम्।
तेषां लक्ष्येषु शब्दानां दाढादित्व विमृश्यताम्।

संस्कृतयोनि–संस्कृतभव–तज्जप्रभृतिशब्दानामप्याकूतमितोऽन्वद्वितर्क्यमाणं न समीचीनमाभाति। मानवानां सहजवचनव्यापाररूपप्रकृतिभवाः स्वभावसिद्धाः प्राग्भवा एव। प्राकृतशब्दाः, तत्र शब्दानुशासने तु ते सस्कृतप्रकृतिमुपादाय संस्कृतसंस्कारोत्कर्षणपूर्वं ज्ञापिताः। अतएवोपचारात् ते तत्र संस्कृतयोनयः संस्कृतभवाः संस्कृतजा इत्यादि रूपेणोच्चार्यन्ते। परमार्थतस्तु ते प्रागेव सिद्धाः। अतएव वाक्पतिराजेन गौडवधे—

---

१. लक्ष्मीधरः षड्भाषाचन्द्रिकायाम्
२. प्राकृतप्रकाशे
३. सिद्धहेमचन्द्रशब्दानुशासने
४. कर्पूरमञ्जरीटीकायाम्
५. अपभ्रंशकाव्यत्रयीभूमिकायाम् पृ' ८३

'सकलाश्चेमा वाचः प्राकृतमहार्णवाद् निर्यान्ति, तत्रैव च प्रविशन्ति' इत्याद्युदगारि, यायावरीयराजशेखरेण काव्यमीमांसायाम् 'तद् योनिः किल संस्कृतस्य' इत्यादि वदता तदेवासूचि, नमिसाधुना रुद्रटीयकाव्यालङ्कारस्य टिप्पनेऽपि च तथा व्याख्यायि। एवं विचार्यमाणे सति लक्षणाभिधाने च शब्दशास्त्रे ये न सिद्धाः प्रकृतिप्रत्ययादिविभागेन च न निष्पन्नास्ते 'बजर–पजर--उप्फाल–पिसुण–संघ–बोल्ल–चव–जंप–सीस–साहादयः देशविशेषेषु प्रसिद्धाः शब्दा अनादिप्रवृत्तप्राकृतभाषाशब्दा एव। एत एव देशीशब्देनोच्यन्ते।

**प्राकृतमेवापभ्रंशः**

'पाणिन्यादिव्याकरणोदितशब्दलक्षणेन संस्करणात् संस्कृतमुच्यते। तथा प्राकृतभाषैव किञ्चिद्विशेषलक्षणान्मागधिका भण्यते। तथा प्राकृतमेव किञ्चिद्विशेषात् पैशाचिकं भवति। शूरसेन्यपि प्राकृतभाषैव। प्राकृतमेवाभ्रंशः'–इत्याख्यातं रुद्रटीयकाव्यालङ्कार–टीकायाम्। वस्तुतः प्राकृतभाषायाः प्रवृत्तिविशेषाः शब्दानां विभक्तीनां च परिवर्तनं विनिमयाश्च अपभ्रंशे परिलक्ष्यन्ते एव। ततश्च "प्राकृतमेवापभ्रंशः "कथनं नोचितम्। देशविशेषेषु सर्वा अपि भाषाः स्वतन्त्राः स्वनियमप्रकृतिबन्धनत्वात्। न काचित् भाषा काञ्चिदपि भाषां जनयितुं समर्था। अयं हि भाषायाः शाश्वतो नियमः। तर्हि न प्राकृतस्य जन्म संस्कृताज्जातम्, न वा प्राकृतादपभ्रंशस्य। यथोक्तं नमिसाधुना "सकलजगज्जन्तूनां व्याकरणादिभिरनादृतसंस्कारः सहजो वचनव्यापारः प्रकृतिः, तत्र भवं सैव वा प्राकृतम्' इति।

पाणिनीयमहाभाष्ये निरूपितं खल्वेतत् पतञ्जलिना—

"एकैकस्य हि शब्दस्य बहवोऽपभ्रंशाः, तद्यथा गौरित्यस्य।
शब्दस्य गावी गोणी गोता गोपोतलिका इत्येवमादयोऽपभ्रंशाः।"

अतएव प्राकृतदेशीशब्देषु संस्कृताभिधानेष्वपि च अपभ्रंशबहुलाः प्रयोगाः दृश्यन्ते। यतस्त एव गावी, गोणी प्रभृतयः शब्दाः न केवलं प्राकृतभाषायामेव अपितु वर्तमानेऽपि बहुशः प्रयुक्ताः दृश्यन्ते। यथा—

आचाराङ्गे "खीरीणियाओ गावीओ", 'गोणं वियालं'।
(श्रु० २, उ० ४, ५)

आवश्यकचूर्ण्यां च—"गावीए पुण दिण्णं तणं पि खीरत्तणमुवेइ",
"व्यवहारसूत्रे "गोणीणं संगेल्लं" (उ० ४),

  

आवश्यक-निर्युक्तौ च "वच्छग गोणी खुज्जा०" 'गोणी चंदणकथा०'।
(गा० १३३, १३)

दशवैकालिकवृत्तौ "एत्थं गोणीए दिट्ठंतो।
अप्पग्घुया उ गोणी।
गोणिसरिच्छो उ गुरु।"

चण्डकृते प्राकृतलक्षणेऽपि 'गोर्गावी' (२,१६)

सिद्धहेमचन्द्रशब्दानुशासने 'गोणादयः' (८, २, १७४), देशीनाममालायां 'गोणो साक्षी वृषभश्च'।

पालिभाषायामपि 'गोण नम्हि वा' कच्चायनव्याकरणान्तर्गते।
(२, १, २६)

उक्तं हि—

गोणज्वे तरमानानं उजु गच्छति पुङ्गवो।
सत्वा गावी उजुं यन्ति नेते उजुगते सति॥

अद्यापि बङ्गलाभाषायां गावीशब्दः गोवाचकः विद्यते। सिन्धीभाषायामपि तस्य प्रचलनं वरीवर्तते। एवं 'गावी' शब्दः गवार्थप्रकाशकः परिलक्ष्यते। गोणो च वृषभवाचकः तथा गोपोतलिका च युवावस्थां प्रपन्नां गामभिधत्ते। अतएवात्र शब्दार्थभेदकाः वैकल्पिकरूपेषु प्रयुक्ताः भाषाभेदं चोद्योतते। प्रतिपादितं यत् श्रीवास्तव महोदयेन :—

वैदिकी भाषा (वेदनिर्माणकाले या लोकानां भाषासीन्न केवलं वैदिकवाङ्मयस्यैव) नानाविधप्रयोगैः लोकजीवनं प्रतिबिम्बितमिव दर्शयति। अथर्ववेदस्य पृथिवीसूक्ते 'नानाधर्माणं विवाचसं' जनं बिभ्रतीं भूमिं स्तुवता ऋषिणास्यैव पक्षस्य प्रदर्शनं विहितम्। सा वैदिकी भाषा शनैः शनैः लोकभाषातः पृथगस्तित्वं प्रातिशाख्येषु पाणिनीयव्याकरणे चालभत[1]।" इति। पाणिनीयसूत्रेषु 'भाषा' शब्दस्य यास्काभिमते एवार्थे प्रयोगः। वैदिकभाषार्थं पुनः 'छन्दस्' 'निगम' इत्यादि शब्दानां तत्र प्रयोगः। पातञ्जलमहाभाष्यस्यापि 'शब्दानुशासनम्। केषां शब्दानाम्? लौकिकानां च' इति वाक्यं ध्वनयति लौकिकशब्दाः यास्कपाणिन्यभिमतायाः लोकप्रयुक्तायाः भाषाया एव। एवमीसातः

१. विद्यावाचस्पति वीरेन्द्रश्रीवास्तवः अपभ्रंश भाषा का अध्ययन, परिशिष्ट २, पृ० २७७

पूर्वमष्टशताब्दीतः द्वितीयशताब्दीं यावद् भाषाशब्दप्रयोगः संस्कृतभाषार्थमेव विद्यते। परस्ताद् भाषाशब्दो हि प्राकृत-देशी-नामरूपेणाख्यातः। उक्तञ्च शाकुन्तलटीकायां शंकरेण—"संस्कृतात् प्राकृतं श्रेष्ठं ततोऽपभ्रंशभाषणम्" (शा० ना० ६, १०)। अतोऽपभ्रंशो मध्यकालिकभारतीयार्यभाषाणामन्तिमावस्था कथ्यते। सा चाधुनिकभारतीयार्यभाषाणां जननी निरूपिता भाषाविद्भिः।

अपभ्रंशभाषायाः प्राचीनतमं निदर्शनं महाकविकालिदासस्य रूपके विक्रमोर्वशीये भरतमुनेर्नाट्यशास्त्रे च दृश्यन्ते। विक्रमोर्वशीये चर्चरीनृत्यगानस्य द्वादशचर्चरीपद्यान्यपभ्रंशभाषायां रचितानि लभ्यन्ते। प्राकृतापभ्रंशभाषायां 'चच्चरी', 'चाचरि' इति नाम्ना संस्कृतभाषायां च 'चर्चरी' इति संज्ञया प्रसिद्धाया गीतेर्नृत्यपूर्वं गानक्रीडनगुम्फनादपद्धतिः प्राचीना परिज्ञायते।[१] नाटये विक्रमोर्वशीये खलु देशीविधाभिधाने चर्चरीरचनाया प्रस्तुतं विधानमुचितमेव। (उपविश्य चर्चरी)

रे रे हंसा किं गोइज्जइ। (इति नर्तित्वा उत्थाय)
हउं पइं पुच्छिमि अक्खहि गअवरु
ललिअपहारे णासिअतरुवरु।
दूरविणिज्जिअ ससहरुकन्ती
दिट्ठी पिअ पइं संमुह जन्ती।

( विक्रमोर्वशीये ४।२२ )

( अनन्तरे चर्चरी )

मोरा परहुअ हंस विहंगम
अलि गअ पव्वअ सरिअ कुरंगम।
तुज्झह कारण रण्ण भमन्ते
बहु बहु पुच्छिअ मइं रोअन्ते॥ तत्रैव ४।३०

तथा च

हंसविहंगमु कुंकुमसंखकआभरणु
करिमअराउलकसणलकमलकआवरणु।
वलासलिलुव्वेल्लिअसत्थदिएणतालु
ओथ्थरइ दस दिस रुन्धेविणु णवमेह आलु॥
—तत्रैव ४।२६

इत्येवमपभ्रंशप्रयोगा लभ्यन्ते । नाट्यशास्त्रे चैवम्—

मोरल्लउ नच्चन्तउ ।
महागमे संयन्तउ ॥ ना० शा० ३२।६६
मेह उद्ठउं ठोई जोहउं ।
णिच्च णिप्पहे एस चन्दउ ॥ तत्रैव ३२।७४

षष्ठशताब्द्यां भामहेन स्पष्टं चोदितम्—

शब्दार्थौ सहितं गद्यं पद्यञ्च तद्द्विधा ।
संस्कृतं प्राकृतं चान्यदपभ्रंश इति त्रिधा ॥ का० १।१६

एवमुल्लेखपुरस्सरेण स्पष्टमेव ज्ञायते षष्ठशताब्द्यां संस्कृतप्राकृतवदपभ्रंशोऽपि काव्यस्य भाषाऽऽसीत् । प्रसिद्धालङ्कारिकेण दण्डिना तस्याभिधानं 'आभीरादिगिरः' इति वचनात् निरूपितम् । उक्तञ्च—

आभीरादिगिरः काव्येष्वपभ्रंश इति स्मृताः ।
शास्त्रेषु संस्कृतादन्यदपभ्रंशतयोदितम् ॥ —काव्यादर्श १।३६

काव्यादर्शस्य काव्यलक्षणटीकायां आचार्यरत्नश्रीज्ञानेन व्याख्या व्यधायि । तत्रैवोक्तम् ।

आभीरा वाहिका । आदि शब्देन ढक्कादिपरिग्रहः । तेषां गिरो भाषा अपभ्रंश इति अपभ्रंशनाम्ना व्यपदिश्यत इति स्थितिर्व्यवस्था । कुत्रेत्याह-काव्येषु गद्यपद्यमिश्रात्मकेषु कविप्रयोगेषु । अपभ्रंशोऽपि प्राकृतवच्चतुर्धा स्मर्यते । शब्दभवं शब्दसमं देशीयं सर्वशब्दसामान्यम् । प्राकृतवदपभ्रंशं जानीहि चतुर्विधमाहितम् ।" इति भरतमुनिना 'आभीरोक्तिषु' या भाषा 'उकारबहुला' भाषा कथिता सा अपभ्रंशभिन्ना नास्ति । तथा चोक्तम्—

हिमवत्सिंधुसौवीरान्ये जनाः समुपाश्रिताः ।
उकारबहुलां तज्ज्ञस्तेषु भाषां प्रयोजयेत् ॥ ना० १७।६२

लंकेश्वरकृता प्राकृतकामधेनौ उकारबहुला भाषा अपभ्रंश इति कथिता । 'उः' पदान्ते अकारस्य स्थाने भवति, यथा—घरु, पिउ, सुन्दरु, पहु, चलउ, घरु, खरु, सुरसु, सरु, सासु प्रभृतिः । अपभ्रंशभाषाविषये राजशेखर उद्धरति श्लोकद्वयम्—

एकोऽर्थः संस्कृतोक्त्या ससुकविरचनः प्राकृतेनापरोऽस्मिन्
अन्योऽपभ्रंशगीर्भिः किमपरमपरो भूतभाषाक्रमेण ।
द्वित्राभिः कोऽपि वाग्भिर्भवति चतसृभिः किञ्च कश्चिद् विवेक्तुं
यस्येत्थं धीः प्रगल्भा स्नपयति सुकवेस्तस्य कीर्तिर्जगन्ति ॥

१. दृष्टव्यम् 'अपभ्रंशकाव्यत्रयी', पृ० ११४

गौडाद्याः संस्कृतस्थाः परिचितरुचयः प्राकृते लाटदेश्याः
सापभ्रंशप्रयोगाः सकलमरुभुवष्टक्कभादानकाश्च ।
आवन्त्याः पारियात्राः सह दशपुरजैर्भूतभाषां भजन्ते
यो मध्ये मध्यदेशं निवसति स कविः सर्वभाषानिषण्णः ॥
—काव्यमीमांसा १०।९–१०

बालरामायणेऽपि तेन तथैवोच्यते—

गिरः श्रव्या दिव्याः प्रकृतिमधुराः प्राकृतधुरः
सुभव्योऽपभ्रंशः सरसरचनं भूतवचनम् ।
विभिन्नाः पन्थानः किमपि कमनीयाश्च त इमे
निबद्धा यस्त्वेषां स खलु निखिलेऽस्मिन् कविवृषा ॥ (१।११)

तथा—"पश्चिमेनापभ्रंशिनः कवयः । तथा—
"सकलमरुभुवष्टक्कभादानकाश्च" (का० मी० अ० १०)

अपभ्रंशकाव्यत्रयी सम्पादकस्य शब्देषु उपलभ्यमानैः प्रमाणैः प्रतीयते खलु विक्रमीयप्रथमशताब्द्याः पूर्वमप्यपभ्रंश—भाषायां गद्यपद्यमयानि काव्यानि स्युरिति । छन्दोलक्षणं काव्यालङ्कारानुशासकैः पिङ्गलभामहस्वयम्भूहेमचन्द्र—प्रभृतिभिरन्यैरपि च भाषात्रये तत्काव्यमसूचि । तथा च शकसंवत् ४०० तम-वर्षीये धरसेनताम्रपत्रे —

"संस्कृतप्राकृतापभ्रंशभाषात्रयप्रतिबद्धप्रबन्धरचनानिपुणतरान्तःकरणः"—
वलभीराजधरसेनशिलालेखः
(इण्डियन एण्टक्वेरी १०,२८४)

अपभ्रंशभाषायाः प्राचीनतमं गद्यम् अश्वघोषस्य शारिपुत्रप्रकरणे, भासस्य पंचरात्ररूपके, शूद्रकस्य मृच्छकटिके, दाक्षिण्यचिह्नउद्योतनसूरेः कुवलयमालाकथायां, विविधप्राकृतग्रन्थेषु टीकाया चोद्धृतं समुपलभ्यते । उदाहरणार्थं कुवलयमालाकथायाम्—

"अण्णेण भणिअं—हुं हुं कहिउ वुत्तंतउ तेण जंपिएल्लउ । कहिं कोढं । कहिं वाणारसि । मूलत्थाणु भडारउ भो काढइं जे देइ । उद्दालि लोअहुं । अण्णेण भणिअं—काइं इमेण जत्थ चिरपरूढ पाउ फिट्टइ, तुम्भे उद्दिसह तित्थ । तत्थ वि सय—जवण—वब्बर—चिलाय—खस—पारस—भिल्ल—मुरंडोड्ड—बोक्कस—सबर—पुलिंद—सिंघलाइसु—परिभमंतस्स दुल्लहं चिय सुकुल-जम्मं ति । तत्थ वि काण—कुंट—मुंट—अंध—बहिर—कल्ल—लल्लायंगमो होइ । तथा—'तेरे मेरे आउ' त्त जंपिरे मज्झदेसे य । 'एगे ले' जंपिरे अइ पेच्छइ मागहे कुमारे ।" इति ।

उक्तं हि आख्यानकमणिकाशे सोमप्रभाख्यानके—

जहिं बिल्ल-पलासह तरुवराहं, पायउ जइ महिगउ होइ ताहं।
अह खंजरीडसंजोउ होइ, ता तत्थ निरुत्तु निहाणु जोइ।
जो पायउ रत्तइं रसिण जुत्तु, सो रयणहनिहि अक्खइ निरुत्तु।
पीइं रसेण कंचणु विसिट्ठु धवलई कलहोउ मुणिंदु सिट्ठु॥

तथा उक्तिव्यक्तिप्रकरणेऽपि पण्डित दामोदरेण उक्तं— [१३।६]

देशे देशे लोको वक्ति गिरा भ्रष्टया यया किञ्चित्। सा तत्रैव हि "संस्कृतरचिता वाच्यत्वमायाति ॥६॥ प्रतिदेशभिन्ना येयं सर्वजनसाधारणा भाषा गावी गोणी प्रभृतिका सोऽपभ्रंश उच्यते।

ततो देशे-देशे प्रतिविषयं लोकः पामरजनो यया यया गिराऽपभ्रष्टया यत् किञ्चिदभिधेयं वस्तु वक्ति व्यवहरति साऽपभ्रंशभाषा।' यथा 'भाषा' भिधानेन—

भाषायाम्—

सूपें पच्छोड।
अंधारीं रातिं चोरु ढूक।
आगि लागें बांस फूट।
छूट वाछा भमि भमि कूद।
पूतकरें बधावें नाच।

उक्तिरत्नाकरेऽपि देशीशब्दानां बहुलता दरीदृश्यते। अन्य राजस्थानी-भाषायां निबद्धेषु ग्रन्थेषु अपभ्रंशभाषाया निदर्शनं समुपलभ्यते। परवर्तीकाव्य-ग्रन्थेषु 'अवहंस' शब्देनापि अपभ्रंशस्योल्लेखो भवति। महाकवि पुष्पदन्तेन महापुराणे स्पष्टमुक्तम्—

सक्कउ पायउ पुणु अवहंसउ।
वित्तउ उप्पाइउ सपसंसउ॥

महा० ५, १८, ४

विद्यापतिः स्वकृतिकीर्तिलतायामपभ्रंशविषये मर्मः प्रकाशयति—

सक्कय वाणी बुहय न भावइ।
पाउअ रस को मम्म न जानइ॥

देसिलबअना सब जन मिट्ठा ।
तैं तैसन जम्पओं अवहट्ठा ॥

अर्थात् संस्कृतवाणी बुधजनं न भावयति । प्राकृतरसस्य मर्म न जानाति। देशी वचनानि सर्वजनमिष्टानि । अतः तादृशं जल्पामि अवहट्टम् ।

विद्यापतेःकीर्तिलता अपभ्रंशभाषायामेव रचिता । तस्योदाहरणं द्रष्टव्यम्—

तिहुअण खेत्तहि काइं तसु कित्तिवल्लि पसरेइ ।
अक्खर खंभारंभ जउ मंचा बंधि न देइ ॥

प्राकृतपैंगलच्छन्दशास्त्रेऽपि अपभ्रंशभाषायां विविधरचना उद्धताः। कवितिल्हणस्य रचितं 'कुट्टणि' रासकमपि समुपलभ्यते । अतएव न केवलं जैनबौद्धवाङ्मये अन्येषां चापि रचनायामपभ्रंशस्य श्रेष्ठं निदर्शनं प्रतिपद्यते ।

यथा—

पअभरु दरमरु धरणि तरणि रह धुल्लिअ झंपिअ,
कमठपिट्ठ दरमरिअ मेरु मंदर सिर कंपिअ ।
कोह चलिअ हम्मीर वीर गअजूह संजुत्ते,
किअउ कटट हाकंद मुच्छि मेच्छहके पुत्ते ॥

—प्रा० पैं ९८

कवितिल्हण स्वररचनाचातुरीं प्रकटयितुं काव्याभिनिवेशमुपनिबद्धयति । यथा—

सरस डक्क डहइ सरस मंदलरउ सुम्मइ ।
रणझणझणझंकारु सरस किंकिणिरउ गुम्मइ ॥
रसवसकस उल्हसइ वसुहलीला पउ दिंतह ।
झलहलंत सत्तउ समुद्द जसु णित्तु करंतह ॥

तथा—

छंदु लक्खणु णहु अलंकारु, णहु देसभाषा मुणहु ।
सुकइ गंथु णहु किंपि, दिट्ठउ जडउ ॥

अब्दुलरहमानः स्वविरचिते सन्देशरासककाव्ये वर्णयति —

जसु पवसन्त ण पवसिआ मुअइ विओइ ण जासु ।
लज्जिजउ सन्देशडउ दिन्ती पहिय पियासु ॥

अतएवोपलभ्यमानैः प्रमाणैः सिद्धयति भाषापभ्रंशः स्वतन्त्रभाषारूपेण प्राकृतकालादुत्तरमेव विशिष्टं स्थानमलभत। अस्याः भाषायाः प्रचलनं भारतीयेतिहासस्य गुप्तकाले संजातः। भामहस्य समये अपभ्रंशभाषा-काव्य-रचना सम्यक्प्रकारेण संस्कृत-काव्यरचनावदेवासीत्। दशमशताब्धामस्य विशेषोत्कर्षमासीत्॥ अतएवानन्दवर्द्धनेनापि तस्योल्लेखो व्यधायि—

"यतः काव्यस्य प्रभेदा मुक्तकं संस्कृतप्राकृतापभ्रंशनिबद्धं सन्दानित-कविशेषककलापककुलकानि। पर्यायबन्धः परिकथा खंडकथा सकलकथे सर्गबन्धोऽभिनेयार्थमाख्यायिका कथे इत्येवमादयः। तदाश्रयेणापि सङ्घटना विशेषवती भवति। तत्र मुक्तकेषु रसबन्धाभिनिवेशिनः कवेस्तदाश्रय-मौचित्यम्।" (ध्वन्यालोकः ३, ७)

इत्थमपभ्रंशभाषाया जातिविशेषेण सम्प्रदायविशेषेण च सम्बन्धनं नोचितम्।

—:०:—

# रसगंगाधरे रत्नाकरस्य सन्दर्भाः

श्री विहारि लालशर्मा

तैलङ्गदेशनिवासिनः पेरुभट्टस्यात्मजः पण्डितराजजगन्नाथः यवनशासकस्य शाहजहाँनामकस्य राज्ञः सभापण्डित आसीत्। अतोऽस्य समयः १६०० ईसवी वर्तते। अनेन बहवो काव्यग्रन्थाः विरचिताः। अस्य रसगङ्गाधरनामा ग्रन्थः साहित्यशास्त्रस्य सर्वाधिकः मर्मप्रकाशकः। यस्मिन् अलङ्काराणामतीव मनोरम-पद्धत्या विश्लेषणं कृतम्। एतेन विभिन्नेषु अलङ्कारप्रसङ्गेषु रत्नाकरस्य सन्दर्भाः गृहीताः। कुत्रचित् खण्डनं कुत्रचित् मण्डनं च कृतम्। अनेन रस-गङ्गाधरस्योपरि रत्नाकरस्य महान् प्रभावः दृश्यते। तथाहि—

**उपमा**

रत्नाकरकारः प्रसिद्धगुणेन उपमानेन अप्रसिद्धगुणस्य उपमेयस्य सादृश्ये उपमां ब्रवीति। जगन्नाथस्तु श्लेषमूलकोपमायां श्लिष्टशब्दस्य साधारणधर्मतया विवक्षितस्य कविकल्पितत्वेन उपमानगुणत्वेन अप्रसिद्धेस्तत्राव्याप्तेः, प्रसिद्ध-गुणत्वेन रूपेण उपमानस्य क्वापि प्रसिद्धत्वाभावात् लक्षणेऽस्मिन् अव्याप्तिनामकं दोषं दर्शयति। एतदित्थम्

"एवं प्रसिद्धगुणेन, उपमानेन अप्रसिद्धगुणस्य उपमेयस्य सादृश्यम् उपमा इत्यलङ्काररत्नाकरोक्तमपि लक्षणं न भव्यम्। श्लेषमूलकोपमायां तादृशशब्दा-त्मकस्य धर्मस्य कविनैव कल्पनात् तेन रूपेण उपमानस्य अप्रसिद्धेश्च।"

**उपमेयोपमा**

रत्नाकरकारेण[1] **'परस्परम् उपमानोपमेयत्वे उपमेयोपमा अलङ्कारः'** निरूपितः। तत्र उपमानोपमेयत्वम् उपमानान्तरस्य निषेधार्थम्। पण्डितराज-जगन्नाथः तस्य उदाहरणे उपमानान्तर-निषेधस्य अभावं दर्शयित्वा ग्रन्थविरोध-मेवं प्रदर्शयति—

यदपि[2] 'परस्परम् उपमानोपमेयत्वमुपमेयोपमा' इति लक्षणं विधाय—

१—अलङ्काररत्नाकरः पृ० ११

२—रसगङ्गाधरः उपमेयोपमाप्रकरणम् पृ० ४०७

**सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः ।**
**यामिनयन्ति दिनान्यपि सुखदुःख वशीकृते मनसि ॥**

इति पद्यं रत्नाकरेण उदाहारि, तच्च तदीयेनैव 'स च उपमानान्तरनिषेधार्थः' इति ग्रन्थेन विरुद्धम् । न हि अस्मिन् पद्ये उपमानान्तरनिषेधः प्रतीयते इति प्रागेव आवेदनात् । प्रतीयते एवेति चेत्, पुनरपि पृच्छ हृदयमेव स्वकीयम् ।" इति ।

**अनन्वयः**

रत्नाकरकारः[1] अनन्वयस्य

१. **उपमानतया कल्पितेन तेन सादृश्यम् अनन्वयः,**

२. **उपमानतया कल्पितेन तदेकदेशेन सादृश्यमनन्वयः,**

३. **'अवसितभेदेन तेन उपमानतया कल्पितेन सादृश्यमनन्वयः'** इति ।

त्रिविधं लक्षणं कृतवान् । रसगङ्गाधरकारः अस्य लक्षणस्य अलङ्कारान्तरेषु अतिव्याप्तिं प्रदर्श्य तस्योदाहरणेऽपि असामाञ्जस्यमेवं प्रदर्शयति ।

यत्तु[2]—"तेन तदेशदेशेन अवसितभेदेन वोपमानतया कल्पितेन सादृश्यम् अनन्वयः । उपमेयेनैव उपमानतया कल्पितेन उपमेयस्यामुखावभासमानसाधर्म्या पादानम् एकः अनन्वयः, उपमेयैकदेशस्य तथैव उपमानताकल्पनम् अपरः । उपमेयस्यैव प्रतिविम्बत्वादिना भेदेन अवसितस्य तावकल्पनं तृतीयः इत्यनन्वयः त्रिविधः इति रत्नाकरेण उक्तम् ।

तन्न । उपमानान्तरविरहमात्रादेव अनन्वयत्वे 'स्तनाभोगे पतन्भाति' इत्यत्र उपदर्शितायाः कल्पिमतोपमाया अपि तथात्वापत्तेः; यद्यर्थातिशयोक्तौ अति-प्रसक्तेश्च । तादृशप्रतीतिफलकैकोपमानोपमेयकसादृश्यस्य तावे पुनः कथं नाम वामार्धदक्षिणार्धयोः भिन्नयोः सादृश्ये तद्भेदत्वोपन्यासः । न च स तदेकदेशः तत्प्रतिबिम्बश्च इत्येतदन्यतमप्रतियोगिकसादृश्यम् अनन्वयः इति क्वाव्याप्ति—रतिव्याप्तिः वेति वाच्यम् । नास्त्यन्वयोऽस्येति योगार्थविरहेण तदेकदेशसादृश्यस्य अनन्वयपदार्थत्वा,—सम्भवात् । अपि च अनन्वये 'गगनं गगनाकारम् इत्यादौ उपमेयस्यैव उपमानत्वेन उपन्यासाद् उपमेयाति-रिक्तोपमानविरहप्रतीतिद्वारा निरुपमत्वम् उपमेयगतं सिद्धयति । अत्र च वामार्धस्य उपमेयस्य दक्षिणार्ध—

---

१—अलङ्काररत्नाकरः पृ० १०
२—रसगङ्गाधरेः अनन्वयप्रकरणम्

रूपोपमानकथनेन निरूपमत्वं विरुद्धमेव कान्तागत—निरुपमत्वप्रत्ययस्तु न अनन्वयस्य फलं भवितु मर्हति, तस्या अनुपमेयत्वात् ।" इति ।

रूपकम् सर्वस्वकारपर्यन्तं सर्वैरप्याचार्यैः सादृश्यमूलक आरोपः एव रूपकतया स्वीक्रियते परंतु शोभाकर१मित्रेण सादृश्येतरमूलक आरोपोऽपि रूपकत्वेन प्रतिपादितः । पण्डितराजजगन्नाथः रत्नाकरकारस्य मतं खण्डयति । तद्यथाः—

**रसगङ्गाधरकारः** यतु २ "सादृश्यप्रयुक्तः सम्बन्धान्तरप्रयुक्तो वा यावान् भिन्नयोः सामानाधिकरण्य—निर्देशः स सर्वोऽपि रूपकम् । सारोपलक्षणामूलकत्वस्य तुल्यत्वेन सादृश्यप्रयुक्तस्य तादात्म्यस्येव सम्बन्धान्तरप्रयुक्तस्यापि तादात्म्यस्य संग्रहीतुम् औचित्यात्, तस्माद् दुराग्रह एवायं प्राचाम्—उपमानोपमेययो अभेदो रूपकम् । न तु कार्यकारणयोः इति रत्नाकरेण उक्तम्, तन्न । अपह्नुत्यादौ भिन्नयोः सामानाधिकरण्यस्य सत्वात् तत्रातिव्याप्तेः । किञ्च सादृश्यमूलकं स्मरणं स्मरणालङ्कारः न तु चिन्तादिमूलम् इति भवतैव पूर्वमुद्रितम् । तत्र यदि सादृश्यामूलकस्यापि कार्यकारणादिकयोः कल्पितस्य ताद्रूप्यस्य रूपकत्वमभ्युपेयते तदा सादृश्यामूलकस्य चिन्तादिमूलस्य स्मरणस्यापि अलङ्कारत्वम् अभ्युपेयताम् । न च स्मरणस्य भावत्वम् उच्यमानं निर्विषयं स्याद् इति वाच्यम्, तस्य व्यज्यमानविषयत्वेन उपपत्तेः ।"

१—सादृश्यसम्बन्धनिबन्धनायाः अलंकृतित्वं यदि लक्षणायाः ।
साम्येऽपि सर्वस्य परस्यहेतोः सम्बन्धभेदेऽपि तथैव युक्ता ॥
अलङ्काररत्नाकर । पृ० ३३ पू० सं० १९४२
२—रसगङ्गाधरः रूपकप्रकरणम् पृ० ४८७ चौ० सं० १९६६

**रसगङ्गाधरे रत्नाकरप्रभावः**

जगन्नाथेन असमोदाहरणालङ्कारौ रत्नाकराद् एव गृहीतौ । अनयोः अलङ्कारयोः सर्वप्रथमं रत्नाकरकारेण एव उद्भावना कृता । तद् यथा—

**असमः**

**रत्नाकरकारः**—(सू०) तद्विरहोऽसमः । (वृत्तिः) उपमानस्य विरहोऽसम्भवः तत्प्रतिपादनम असमाख्योऽलङ्कारः ।

अलङ्काररत्नाकरः पृ० ६
रसगंगाधरः उपमा प्रकरणम् पृ० २३६ द्वितीयो भागः
अलङ्काररत्नाकरः पृ० ११

**यथा—**

भ्रमर ! भ्रमता दिगन्तराणि क्वचिदासादितमीक्षितं श्रुतं वा ।
वद सत्यमपास्य पक्षपातं यदि जातीकुसुमानुकारि पुष्पम् ॥

अत्र च सामर्थ्यात् तथाविधं नास्तीति प्रतीयते ।

**जगन्नाथः**

( सू० ) सर्वथैव उपमानिषेधोऽसमाख्योऽलङ्कारः ।

**उदाहरणं यथाः—**

**भुवनत्रितयेऽपि मानवैः परिपूर्णे विबुधैश्च दानवैः**

न भविष्यति नास्ति नाभवन् नृपः । यस्ते भजते तुलापदम् । राजस्तुत्यत्कर्षक-त्वाद् अत्र असमालङ्कारः ।

उदाहरणम्

**शोभाकरमित्रः**

( सू० ) सामान्योद्दिष्टानाम् एकस्य निदर्शनम् उदाहरणम् ।

( वृत्तिः ) सामान्येन अभिहितानाम् एकस्येवाद्युपादान मुखेन प्रतीतिविशदी-करणार्थं निदर्शनम् उदाहरणालङ्कारः ।

**उदारणं यथा—**

अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ।

**जगन्नाथः**

( सू० ) सामान्येन निरूपितस्यार्थस्य सुखप्रतिपत्तये तदेकदेशं निरूप्य तयोर-वयवावयविभाव उच्यमान उदाहरणम् ।

**उदाहरणं यथा—**

**अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति**
**निखिलरसायनराजो गन्धेनोग्रेण लशुन इव ।**

---

रसगंगाधरः द्वितीयो भागः पृ० ४३३ अलंकाररत्नाकरः पृ० १२

इत्यत्र हिमकर्तृकसौभाग्याविलोपनरूपस्य विशेषस्य गुणसन्निपाते दोषनि-मज्जनं सामान्येन समर्थकतयाभिहितम् ।

**अत्रामितगुणपदार्थसामान्यं प्रागुपवर्णितम्, ततस्तदेकदेशो विशेषभूतो।
लशुनो निरूपितस्तयोश्चावयवावयवीभाव 'इव शब्देन बोधितः।**

रसगङ्गाधरस्य द्वितीये भागे पृ० ४४३

**एवं प्रकारेण ७**

**त्वत्पादनखरत्नानां यदलक्तकमार्जनम्।
इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः॥**

इति सर्वस्वकारेण निदर्शनाप्रसङ्गे उदाहृतायां कारिकायां निदर्शनां खण्डयित्वा वाक्यार्थरूपकं साधितं पण्डितराजेन सः सर्वोऽपि रत्नाकरकारस्य एव प्रभावः।

रसगङ्गाधरकारेण असमोदाहरण ७ नामकौ अलङ्कारौ रत्नाकराद् एव गृहीतौ। एवं रसगंगाधरस्य विभिन्नेषु स्थलेषु रत्नाकरस्य उल्लेखः उपलभ्यते।

—:*:—

७—रसगङ्गाधरः निदर्शना प्रकरणम् पृ० १३६
८—रसगङ्गाधरः पृ० ४३३ द्वितीयो भागः
९—रसगङ्गाधरः पृ० ४४३ द्वितीयो भागः

# कालिदासस्योपमा विम्बश्च

संस्कृत-साहित्यस्य शीर्षस्थकेव: कालिदासस्योपमा—प्रयोगनैपुण्यं काव्य-जगति विशेषेण प्रसिद्धमस्ति । अत एव प्रायश: सर्व एव काव्यानुशीलिनो विद्वान्स 'उपमा कालिदासस्ये' त्युक्तिमाश्रित्य यत्किञ्चित्परम्परीणमैधषत । तस्यामेव सरण्यामहमप्यत्र पुनर्लेखनं चिकीर्षन्नप्याधुनिके सन्दर्भे कवेरुपमानां नवीनमूल्याङ्कने कृतप्रयत्नोस्मि ।

कवि: स्वानुभूतिप्रकाशने कलात्मकतामाश्रयते । अस्मात्कलासन्निवेशाभिनिवेशत्वादेवालंकाराणां विकास: समजनि । एवमलंकाराभावाभिव्यक्तेः प्रमुखसाधनं, काव्यसौन्दर्याधानस्य प्रमुखमुपकरणञ्चेति । किन्तु नेदं विस्मर्त्तव्यं यत्सायासमलंकार-विधानं काव्यसौन्दर्यं विकरोति । वस्तुत: 'कविप्रतिभानुग्रहवशादलंकाराणां स्वत: प्रस्फुरणमेव' काव्यस्य नैजं वस्तु । तेष्वलंकारभेदबहुलेषु सादृश्यमूलकस्योप-मालंकारस्य वैंशिष्टयं समेषां काव्यरसज्ञानां विदितमेवास्ति । अप्पयदीक्षितस्तु 'उपमैषा शैलूषी सम्प्राप्ता चित्रभूमिकाभेदात् । रञ्जपति काव्यङ्गे नृत्यन्ती तद्विदां चेत:' इति कथनेनास्या माहात्म्यं प्राकाशयत् । काव्यशास्त्रिणोऽनयोक्त्या न केवलमुपमालंकारस्य महत्त्वं प्रतिपाद्यते, अपितु अस्य परिधे: परिमाणमपि भवति । रूपकोत्प्रेक्षादृष्टान्ताद्यलंकाराणां मुख्यो हेतुरुपमावत्साधर्म्यमेवातस्तेषामप्यन्तर्भाव इहोपमायामेव भवितुमर्हति । इत्थमुपमालंकारेणात्र सादृश्यमूलका: समस्ता अपि अलंकारा बोधव्या न तु उपमात्रम् । तदर्थमपेक्षितेषु चतुर्षूपादानेषूपमेयोपमान-वाचकसाधारणधर्मेषूपमानमेवातिशयमहत्त्वपूर्णमस्ति । उपमानमेवोपमेत्युक्तौ नातिरंजना स्यात् । सन्दर्भानुसार्यनुरूपोपमानचयनं कविकल्पनाप्रावीण्यं द्योतयति । महाकवि: कालिदास: अस्मिन् कलाविधौ महान् कुशला इति निबन्धोऽयं प्रकाशयति ।

कवेरुपमानविवेचनात्पूर्वमत्राधुनिकपाश्चात्यसाहित्यासिद्धान्तस्य प्रमुखस्वीकृति-बिम्बस्यानुशीलनमपिप्रक्रतोपयोगि स्यात् । भारतीयकाव्यशास्त्रे बिम्बविषयको विचार: स्वतन्त्रतया नोपलभ्यते । काव्यशास्त्रस्य कस्यां विधायमस्यान्तर्भावो भवितुमर्हति, पृथक्त्वेन वा स्थिति रिति तु स्वतंत्रमीमांसाविषय: परमेतत्तु निश्चितमेवयत्बिम्ब: कविकर्मण: साधनमेव, नतु काव्यस्यात्मकत्वम् । यथाह डॉ०

नगेन्द्रोपि—'बिम्ब काव्य का अत्यन्त प्रभावी माध्यम है, और इसलिए काव्य के सन्दर्भ में उसका मूल्य असंदिग्ध है; परन्तु वह स्वतंत्र नहीं है. माध्यम ही है, प्राणतत्त्व नहीं है; काव्य का सहकारी मूल्य अवश्य है, प्राथमिक मूल्य नहीं है।'
—'काव्य-बिम्ब; पृ ६२।

अधिकस्पष्टरूपेण बिम्बस्य स्वरूपाधिगमने साम्यसाम्यदृष्टया तस्याध्ययनमुपमानेन सहावश्यकमस्ति। अतः, पूर्वं तल्लक्षणं ज्ञातव्यम्। सी० एफ्० स्पर्जियन-महोदया 'Shakespeare's imaginary and what it tells to us' इति ग्रन्थेबिम्बमित्थं परिभाषयति—'A description or an idea which by Comparison or anology; Stated or under stood, with Something else; transmits to us through the emotions and associations it arouses, someth- ing of the 'wholeness' the depth and richness of the the writers viewes, conceives or has felt what he is telling us. अर्थात् एकं वर्णनं भावो वा यत्तुलनयोपमया वा प्रस्तूयते वावगम्यते भावनात्मकतया सन्दर्भेण चान्वितं स्यात्, समग्रतां परिचापयेत्, तथा लेखकस्य गाम्भीर्यं समृद्धि वावबोधयेत् प्रकाशयेच्च तस्याशयं यत्स किं कथयितुमीहत इव्यनेन स्पष्टं प्रतीयते यत्साद‍ृश्यधिया बिम्बस्योपमानेन सह किंचित्सामीप्यमस्ति। काव्यस्य वाह्यपक्षीयत्वाच्छर्जनप्रक्रियया द्वयोः सम्बन्धः सुतरां सिद्धः। उभेप्यरूपभावान् रूपयतः। तथाप्यनयोर्भेदः। यतस्सर्वदाऽऽप्रस्तुतमेवोपमानं प्रयुज्यते। बिम्वस्तूभयत्र प्रस्तूताऽऽप्रस्तुतेपि संभाव्यते। प्रेषणीयताविरहेप्युपमानं काव्यालंकरणे सहायकत्वं भजते। किन्तु बिम्वेभावोत्तेजकत्वमपरिहार्यम्। चित्रात्मकत्वमैन्द्रियत्व–संवेदनशीलत्वौचित्यादिकश्च बिम्बस्य मुख्यो गुणः। यथावोचत् आई० ए० रिचर्ड्स् महानुभावोपि—'Too much importance has always been attached to the sensory qualities of images, what gives an image efficacy is less its vividness as an image than its character as a mental event peculiarly connected with sensation;—Rene wellek इतिलेखकस्यtheoy of literature' इतिपुस्तके १६१ पृष्ठे। उद्धृतम्।

वस्तुताश्चित्रात्मकतया स्पष्टप्रतिभासमानत्वन्तु बिम्बस्य प्रकृतिरेव, संवेदनशीलत्वं भावोत्तेजकत्वं वा तस्यप्राधान्यं वैशिष्टचम्।

सम्प्रत्यप्रस्तुतविधानस्य प्रकृतिमवलम्ब्येह महाकवेरुपमाविवेचनं प्रस्तुवीमहे। प्रायेणाप्रस्तुतविधानस्य चत्वारो भेदा दृश्यन्ते। तद्यथा—अमूर्तप्रस्तुताय मूर्तोपमान विधानं, अमूर्तप्रस्तुतायामूर्त्तोपमानविधानं, मूर्तप्रस्तुतायामूर्तोपमानविधानं मूर्तप्रस्तुताय मूर्तोपमानविधानञ्चेति तत्क्रमेणोदाहरणपुरःसरं निरूप्यते।

**अमूर्तप्रस्तुताय मूर्तोपमानविधानम्—**

> **कृत्ययोर्भिन्नदेशत्वाद् द्वैधी भवति मे मनः।**
> **पुरः प्रतिहतं शैलैः स्रोतः स्रोतोवहां यथा॥** शा० २।१८।

राज्ञो दुष्यन्तस्य पुरतो युगपदेव कार्यद्वयमुपस्थितमस्ति। एकत्रस्थितेन तेन द्वयोः सम्पादनं न संभाव्यते। स मातुराज्ञां परिपालयितुं हस्तिनापुरं प्रतिनिवर्तेद्वा तत्रस्थितस्सन्नाश्रमं राक्षसोपद्रवाद्रक्षेदित्यस्य मनो द्विविधया ग्रस्तमस्ति। अत्र राज्ञोऽमूर्तं मन एवोपमेयं प्रस्तुतं वा। तदर्थं शैलैः प्रतिहतं सरितो द्विधा विभक्तं पृथग्दिग्गामि स्रोतो मूर्तमुपानपदम्। राज्ञो मनसोऽस्थिरत्वमुद्विग्नत्वं दोलायमानत्वादिकञ्चेतिसूक्ष्मभावं विभक्तसरित्प्रवाह-रूपमप्रस्तुतमेव सम्यक् प्रेषणीयतामापादायितुं शक्येत। इह सामान्यतया प्रवहन्त्याः सरितो विम्बः, अग्रतः शिलासंघातप्रतिहतायाः प्रवाहद्वयात्मिकायाः सरितो बिम्बश्च सहजमेव सचेतसश्चेतसि प्रतिबिम्बितौ भवतः।

कविरिदमेवोपमानं विक्रमोर्वशीये किंचित्परि-वर्तनेन सह प्रयुनक्ति। यथा—

> **नद्या इव प्रवाहो विषमशिलासङ्कटस्खलितवेगः।**
> **विघ्नितसमागमसुखो मनसिशयः शतगुणो भवति॥** ३।८

उर्वशीं प्रत्यासक्तः पुरूरवास्तन्मिलनहेतावतितरामातुरोप्यन्तरायत्वात्तत्समागमसुखमनुभवितुं न शक्नोति। अतोऽत्यधिकमेधमानस्तस्यामूर्तकाम एवात्र प्रस्तुतमस्ति। तत्कृते 'नद्याः प्रवाह' इति मूर्त मुपमानपदम्। निम्नोन्नतशिलासंघातव्यवहितो नद्याः प्रवाहोऽतिशयवेगगामी भवतीति सर्वविदितिमेवास्ति। 'रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णामिति' मेघदूते नर्मदाया वर्णन मप्यनुसन्धेयम्। प्रकृतोदाहरणे कामाभिभूतस्य पुरुरवासो मनसिजवेगं विषमशिलावत्यो नद्या गतिशीलप्रवाहरूपो बिम्बः सुस्थमुद्भासयति।

मनसो विविधसूक्ष्मसंवेदनानां मनोवैज्ञानिक-विश्लेषणेऽद्वितीयोऽयं महाकविः। अस्मिन्नेव प्रसङ्गे मनोवैज्ञानिकनिरूपण साम्यत्वादुक्तवर्गीकृतसीम्न्यसमाहितोप्ययं श्लोकः प्रस्तूयते—

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि—
निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥

—कु० ५।८५

कपटिनो वाचालस्य ब्रह्मचारिणः परुषवाक्प्रहारेण भृशमुद्विग्ना, विक्षुब्धा कुपिता च पार्वती यावदेव ततश्चलितुमचेष्टिष्ट, तावद्भूम्यामुत्थितपदस्थापनात्पूर्वमेव तस्य तत्क्षणपरिवर्तितं महेश्वरस्य प्रियरूपमवलोक्य जातसात्विकभावतया स्वेदबिन्दुभिः स्विन्नदेहा वेपमाना च सा, प्रवाहमार्गेऽकस्मात्समापतितपर्वतावरोधव्याकुला सरिदिव, नाग्रतो गन्तुं नापि स्थातुंशशाक । पुरतो वर्तमानस्य शिवस्य समक्षमुद्धृतं पदमुद्वहन्त्याः लज्जित-पार्वत्याः, उत्तुंगशिखरैर्मण्डितस्य लम्बायमानस्य विशालपर्वतस्य, तद्व्यवधानजन्यावरोधेनाकुलितनद्याश्चेह बिम्बत्रयं युगपदेव कविनानिरमायि । सत्यमेवोक्तं श्री बलदेव उपाध्यायेन—'ये मानव-हृदय की विभिन्न परिस्थितियों में उदीयमान वृत्तियों का चित्रण लोकव्यवहार के साथ, पूर्ण सामंजस्य से करते हैं' । —सं० सा० का इतिहास, पृ० १७२ ।

उक्तेषु त्रिष्वप्युदाहरणेषु पात्राणां मनःस्थिते-रुद्घाटनमभूत् । मनसोऽरूपभावना मूर्तोपमानयोजनयैवात्राधिकसंवेद्यास्संजाताः । प्रतिभावतो महाकवेः कौशलमिह 'शैलविषमशिला-अचल' पदसन्निवेशे साधु मुखरितमस्ति । यत्किंचित्परिवर्तनेन सह विविधमनोभावानुन्मीलयितुं प्रयुक्तेष्वेतेषुशब्देषु यत्रैकतो विविधता वरीवर्ति, तत्रैपापरतो नवीनतापि प्रस्फुरत्येव । उदाहरणत्रयेपि पृथक्त्वेन स्वतंत्रबिम्बसृष्टिरपि भवति ।

**गच्छति पुरः शरीरं धावतिपश्चादसंस्थितं चेतः ।**
**चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥**

शा० १।३६

अत्रामूर्तचित्तस्य चाञ्चल्यं मूर्तश्चीनांशुक एव सम्यगभिव्यक्तिमादधाति । स्थूलशरीरस्याकारसाम्यताप्यनु-पात्तकेतुदण्डेनानुमानगम्यास्ति । चीनांशुकशब्दस्तु राज्ञो मनस उत्कृष्टतामभिव्यंजयति अनुरूपाप्रस्तुतविधानमेवानुक्तोपमालंकरणमिह चारितार्थ्यमुपैति । भाषायाश्चित्रधर्मत्वेन प्रतिवातप्रतिहतगतिकेतोश्चिमिहोजृम्भते ।

वृद्धव्यक्तेर्बुद्धौ स्मरणशक्तेर्ह्रासो जायते। एकस्मिन् क्षणे कस्यचिद्वस्तुनो ज्ञानस्य संस्कार उद्बुध्यते त्वपरास्मिन्नेव क्षणे लीयते एकतानताऽऽभावे स्थितेर्नैरन्तर्यमुच्छिद्यते। महाकविर्बुद्धेरिमामस्थिरतां रूपयितुं निर्वास्यमाणप्रदीपस्य शिखामुपमानरूपेणाचैषीत्। तद्यथा—

**क्षणात् प्रबोधमायाति लङ्घ्यते तमसा पुनः।**
**निर्वास्यतः प्रदीपस्य शिखेव जातो मतिः॥** शा० ५।२

अत्रोपमायाः सौन्दर्येण सह 'निर्वास्यमाणप्रदीपस्य चंचलशिखाया अचंचलो विम्बश्चित्तं चमत्करोति। मतिरत्रोपमेयाऽऽमूर्तमेव। प्रदीपशिखोपमानन्तु मूर्तम्।

साम्प्रतं दृश्यतां दुःखात्मकामूर्तभावाभिव्यक्तौ महाकवेः कलाचातुरी। इन्दुमत्या मृत्योरनन्तरं कुलगुरोर्वशिष्ठस्य शान्तिवचो निशम्य, पुत्रदशरथस्याज्ञत्वात्, कथमिवाजो महाराजच्छोकसंविग्नमनसा निनाय कालस्याष्टसंवत्सराणि। किन्तु, इन्दुमतिवियोगजन्यशोकशङ्कुस्तद्धृदयं तथैव व्यदारयत्, यथा प्लक्षवृक्षस्य प्ररोहः कालान्तरे, शनैः स्वमूलानि दूरतो विस्तीर्य, उन्नतप्रासादतलं भिनत्ति। तद्यथा—

**तस्य प्रसह्य हृदयं किल शोकशङ्कुः**
**प्लक्षप्ररोह इव सौधतलं बिभेद।**
**प्राणान्तहेतुमपि तं भिषजामसाध्यं**
**लाभं प्रियानुगमन त्वरया स मेने॥**
रघु० ८।९३।

अमूर्तशोकशङ्कुः प्रस्तुतमत्र। तत्कृते मूर्तमप्रस्तुतं 'प्लक्षप्ररोह' इति। इह सन्दर्भानुकूला यथार्थता वर्तत अत एव संवेदनाया रमणीयाभिव्यंजनाऽभूत्। प्लक्षप्ररोहस्योपमानविधानं नितान्तमौचित्त्यंमितमस्ति। अन्यथैतदतिरिक्त-मन्यक्तिमुपमानपदमिन्दुमत्याः मृत्योरनु तद्दीर्घमन्तरालं, शोकप्रसरपरिपाकं तस्य शोकशङ्कोः तीव्रतमां प्रचण्डताञ्चाभिव्यंजितुं क्षमेत? अजस्य धीरताभिव्यंजने सौधतलमेव शक्यम्। अत्र परिव्याप्तजटासमूहस्योन्नतप्लक्षवृक्षस्य तत्समीपमेव भिन्नान्तस्तलस्याप्युच्चैः स्थितसौधशृंगस्य च संश्लिष्टो बिम्बः।

**अमूर्तप्रस्तुतायामूर्तोपमानविधानम्—**

बिम्बसर्जने दृश्यता मुख्यं वस्तु। तदभावे बिम्बसृष्टिर्न संभवति। अमूर्तं प्रस्तुतयोजनायां भाषायाश्चिधर्मस्यकृते नावकाशः। चित्रात्मकत्वाभावे कुतो बिम्बविधानम्? अत एव महाकवेः कालिदासस्य काव्येश्वमूर्ताप्रस्तुतविधानं प्रायेणाव्याल्पमेवोपलभ्यते। यतो महाकवेर्वैशिष्ट्यन्तूत्कृष्ट बिम्बरचनायामेव। बिम्बविरहेपि उपमाया अनूपमो विलासस्तु विलसत्येव। तद्यथा—

**वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥** रघु० १।१

अत्र प्रस्तुतपार्वतीपरमेश्वरयोर्न किंचिद्वास्तविकं रूपं जगत्थां दरीदृश्यते। अप्रस्तुतौ शब्दार्थावप्यमूर्त्तनेव। एवंविधयोपमया न किमपि चित्रं संसृज्यते। कल्पनाचमत्कारस्त्वत्र शास्त्रीयज्ञानसंवलिते बुद्धिवैभवे आसत्तिमादत्ते।

एतदमूर्ताप्रस्तुतविधानदृष्ट्या भवभूतेरुत्तररामचरितमधिकसमृद्धमस्ति।

**प्रसाद इव मूर्तस्ते स्पर्शः स्नेहार्द्रशीतलः।**
**अद्याप्यानन्दयति मां, त्वं पुनः क्वासि नन्दिनि॥** उ० ३।१४

अत्र प्रस्तुत-स्पर्शरूपामूर्तभावाय प्रसाद—अनुग्रहरूपामूर्तभाव एवोपमानत्वेन प्रयुक्तः। सीतया विहितो रामस्य स्पर्शः तस्मै मूर्तितः प्रसादो यथा प्रतीयते। इत्यमेव १/३०, १/३५, २/२६ इत्यादिस्थलेपि उदाहरणान्युपलभ्यन्ते।

**मूर्तप्रस्तुतायाममूर्तोपमानविधानम्—**

**गत्वा चोर्ध्वं दशमुखभुजोच्छासितप्रस्थसन्धेः**
**कैलाशस्य त्रिदशयनितादर्पणस्यातिथिः स्याः।**
**शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं**
**राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः॥** पू० मे० ५८

अलकापुरीं गन्तुकामाय मेघाय यक्षः कैलाशपर्वतस्य परिचयं ददाति। तत्सन्दर्भे स कैलाशस्यातिशयश्वेतिमानं निर्मलतां वाभिव्यक्तमितुमिच्छति। अतः स्वाभिप्रायसिद्धये सः तत्कृते क्रमेण 'दर्पणकुमुदेवदयोरप्रस्तुतयोजनां विदधाति। परमेतेनापि तुष्टिमलभमानच्छिवस्य राशीभूताट्टहासस्योत्प्रेक्षां कुरुते।

अत्र कैलाशे मूर्तमुपमेयम्। अट्टहासस्त्वमूर्तोपमानम्। दृश्यताया अभावेपि कल्पनाप्रवणत्वेन सहृदयस्यबिम्बबोधच्छक्येत। परं तत्प्रतीतये भारतीयकवि-समयसिद्धान्तस्याध्यात्मिकधारणायाः पौराणिकगाथादिकस्य च परिचयभावश्यकं

प्रतिभाति । एतेन स्पष्टमेव यद्यत्र तत्र बिम्बावगमे संस्काराणां पार्थक्यं जटिलता-मुत्पादयति ।

**तस्याः खुरण्यासपवित्रपांशु-**
**मपांसुलानां धुरि कीर्तनीया ।**
**मार्गं मनुष्येश्वरधर्मपत्नी**
**श्रुतेरिवार्थंस्मृतिरन्वगच्छत् ॥ रघु० २।१**

अत्रोपमेयौ सुदक्षिणामार्गौ मूर्तौ स्तः । ताभ्यां क्रमेण प्रयुक्ते स्मृतिश्रुत्यर्थो-पमानेऽमूर्ते । एतादृक्ष्वप्युपमानस्थलेषु सुस्पष्टमांसलबिम्बस्य सृष्टिर्न संभवति । मनुष्येश्वरधर्मपत्न्या सुदक्षिणाया मार्गस्यानुसरणं यावदेव सहजबोधगम्यमस्ति, स्मृत्या श्रुत्यर्थस्यानुसरणं, शास्त्रीयज्ञानसापेक्ष्यत्वात्तावदेव दुर्बोधं प्रतीयते । अतः, उपमाया उत्कृष्टतायां नास्ति मनागपि सन्देहावसरः, किन्तु बिम्बस्य काल्पनिक-सर्वग्राह्यतायां तु अस्त्येव संशयावकाशः ।

**मूर्तप्रस्तुताय मूर्तोपमानविधानम्**

मूर्तप्रस्तुताय मूर्ताप्रस्तुतविधानं प्रायेण बिम्बात्मकं भवति । ऐन्द्रियत्व-मिहार्दिकमुद्भासते । अत एव बिम्बनिर्मितिरप्यनायाससाध्या भवति । प्रयोऽत्र प्रस्तुताप्रस्तुते द्वेपि बिम्बनिर्माणे सामर्थ्यमु पेतः तद्यथा—

**पुरस्कृता वर्त्मनि पार्थिवेन**
**प्रत्युद्गता पार्थिवधर्मपत्न्या ।**
**तदन्तरे सा विरराज धेनु--**
**दिनक्षपामध्यगतेव सन्ध्या ॥ रघु० २।२०**

सायंकाले चारणोपरान्तं धेनुमग्रतः कृत्वा महाराजो दिलीप आश्रमं प्रति प्रतस्थे । इतो राज्ञी सुदक्षिणापि तत्प्रत्युद्गमनार्थं चचाल । मार्गे त्रयाणां सम्मेलने सुदक्षिण दिलीपयोर्मध्ये धेनुस्तथैव शुशुभे, यथा दिनरात्र्योर्मध्ये सन्ध्या शोभते अत्रोयमेयं धेनुपदं मूर्तमस्ति । तदर्थं प्रयुक्तमुपमानं सन्ध्यापि मूर्तमेव । इत्थमेव दिनक्षपयोरप्युपमानयोजना क्रमेण दिलीप-सुदाक्षिणयोः कृते मूर्तमेव । गुणप्रभावसाम्यदृष्ट्या विहितोऽस्मिन्नुपमानविधानेऽनासमेवात्र सफलबिम्बस्य रमणीयाप्रतिच्छविस्सहजसंवेद्यास्ति । दिनपदं राज्ञस्तेजस्वितां, कर्मठतां, एकात पत्रतां, परोपकारपरायणतादिगुणं व्यंजयति । 'क्षपा' सुदक्षिणायाः विश्राम-दायिसेवापरायणशान्तप्रकृतिमुद्बोधयति । सन्ध्यापदेनात्र कामधेनोः पावित्र्यं

सर्वोत्कृष्टत्वं, रक्ताभसौन्दर्यञ्चध्वन्यन्तो। महाकविरत्र प्रस्तुताप्रस्तुतयोरुभयो-लिङ्गसाम्येपि दत्तावधानोऽस्ति। अतः, अनुक्तमेयमुपमा। तथा, प्रकाशवता सूर्येण समन्वितदिनस्य, चन्द्रेण नक्षत्रैश्चालंकृताया रात्रेः, स्निग्धसिन्धुरायित-संध्यायाश्च पवित्रं प्राकृतिकं त्रिम्बत्रयामिह युगपदेव सचेतसां चेतांस्याह्लादयति।

महाकविकालिदासस्यकाव्येषु प्रकृतिविषयकं बिम्बबाहुल्यमस्ति। प्रकृतेः, सन्दर्भानुरूपाप्रस्तुतचयनेन महाकवेः तद्विषयकोऽनुरागो व्यजते। यथाह श्रीबलदेव उपाध्यायः—"बिम्ब-ग्रहण वहीं होता है, जहाँ कवि अपने सूक्ष्म निरीक्षण द्वारा वस्तुओं के अंग, प्रत्यंग, वर्ण, आकृति तथा उसके आस-पास की परि-स्थिति का परस्पर संश्लिष्ट वर्णन देता है। यह तभी संभव है, जब कवि के हृदय में प्रकृति के लिए सच्चा अनुराग हो।—

सं० सा० का इतिहास, छठवाँ संस्करण, पृ० १५४।

लेखकस्येमांमुक्ति प्रस्तुतोयं श्लोकोपि पुष्णाति—

**तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुकूलां**
**न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारित्।**
**या वः काले वहति सलिलोगारमुच्चैविमाना**
**मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम्** ॥ पू० मे० ६३।

अत्र, अलका-कैलाश-गङ्गाव-अभ्र-सलिलेति मूर्तपदपञ्चकं प्रस्तुतम्। तदर्थं क्रमशः, कामिनी-प्रणयी-दुकूल-अलक-मुक्ताजलिति मूर्ताप्रस्तुतपदयोजना। अतः, विधृतोग्दिरश्वजप्रवाहमेघकदम्बकस्योन्नतसौधशृंगान्वितालकावस्थानस्य गंङ्गा-प्रभवस्य कैलाशस्यैको बिम्बः, स्रस्तशुभ्रवस्त्राया मौलिकसरग्रथितकेशविन्यासायाः प्रियोत्सङ्गस्थिताया रमण्याश्चापरो बिम्बः, द्वयोः संश्लिष्टात्मको बिम्बश्चेति। अलकामुपवर्णयन्निह कविस्तत्पार्श्वपरिस्थितिमपि संश्लिष्टत्वेनोपनिबध्नाति। अत एव तस्या मानसी छविः पूर्णरूपेण चित्रात्मकतामाकलयति।

तपोवनकन्यका पतिगृहं याति। अतस्तत्तपोवनपरित्यागकातराद्य न केवलं शकुन्तलैवापितु तया वियुक्तस्य तत्तपोवनस्यापि कीदृशी दशा? यत्राचेतना अपि सचेतना इव व्यथामनुभवन्ति, किमुत चेतनाः? समस्तं तपोवनमेव वियुक्तमिव प्रतिभाति। वियुक्ता हरिणी कुशग्रासमप्युद्गिरति, नृत्यं परित्यज्य विमनायमानेव तिष्ठति मयूरी, लताश्चापूजीव पाण्डुपत्राणि पातयन्ति। तद्यथा—

उद्गीर्णदर्भकवला मृगी परित्यक्तनर्तना मयूरी।
अपसृतपाण्डुपत्रा मुञ्चन्ति अश्रु इव लताः॥ शा० ४।१४

उपमानरूपेण प्रयुक्तमश्रु इति पदमिहमूर्तम्। उपमेयं पाण्डुपत्रन्तुमूर्तमेव। इह वातान्दोलितानां पाण्डुपत्रपातिनीनां लतानां खण्डितो बिम्बः। एतदतिरिक्त प्रकृतेः स्वतन्त्रवर्णने शोकोद्विग्नमृगमयूर्योर्बिम्बद्वयमपि शकुन्तलाविरहजन्यदुःखातिशयनिमग्नस्य सर्वस्यापि तदाश्रमपदस्य चित्रमातनोति। त्रय एवात्र खण्डित बिम्बाः पृथक्त्वेन, समेत्य वा कवेः प्रयोजनं साधयन्ति।

कालिदासीयकाव्येषु प्रायः प्रकृतेर्वर्णनं पात्राणां मनःस्थित्यनुसारं, कथानकस्य मानवीयपरिस्थित्यनुकूलं भावसामञ्जस्यानुरूपञ्च कृतमुपलभ्यते। यादृशं वस्तुनो घटनाचक्रं वातावरणं वा तादृशमेव प्रकृते रूपमपि दृश्यते। कथानकस्य भावानुरूप-वातावरण-निर्माणेऽनुपमोयं महाकविः। अत एवात्र दुःखात्मकपरिस्थितौ प्रकृतिरप्युन्मनायते।

भाविघटनार्थसाधनपरं बिम्बात्मकं स्वतन्त्रप्रकृतिचित्रणमपि दृश्यतानेस्मिन्नेव प्रसङ्गे--

यात्येकतोऽस्तशिखरं पतिरोषधीनाम्
आविष्कृतोऽरुणपुरःसर एकतोऽर्कः।
तेजोद्वयस्य युगपद् व्यसनोदयाभ्यां
लोको नियम्यत इवैष दशान्तरेषु॥ शा॥ ४।२

चन्द्रार्कौमूर्तप्रस्ताविह। मूर्तो लोकश्चाप्रस्तुतः। प्रभातवर्णनापदेशाच्चन्द्रस्यास्ताचलगमनेनार्कस्योदयवर्णनेन चेश्वरीयविधानंसूचितम्। ह्रासोल्लासौ, क्षयोदयौ, विपत्सम्पदौ वा न कस्यापि व्यवस्थितविषयौस्तः। 'कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा, नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण' इत्यपादमेवोद्घोषयति। अतः प्रकृतिपरवशा शकुन्तलापि पतिप्रत्याख्यानकातरा सती विपदुदधिदशाविपर्यये पतितेति कवेर्लक्ष्यम्। सर्व एव प्रतिभावन्तो महाकवय एवमेय भाविघटनार्थव्यंजकं बिम्बसर्जनं प्रकृतेरेव कुर्वते। तुलनात्मकाध्ययनधिया विचार्यतामिह शैक्यसपियरमहाकवेरपि प्रकृतिकोऽयं बिम्बः—

"Light thickens and the crow
Makes wing to the rockey wood
Good things of day begin to drop and drowse."

मैकबैथ

अर्थात् ज्योतिर्मलीमसतामादधाति
काकाश्च यान्ति त्वरितं स्वकुलायदिक्षु
सर्वं दिनस्य सुभगं मलतामुपैति ।'

डंकननामकपात्रस्य बधात्पूर्वं कृतमिदं प्रकृतेर्वर्णनं भाविवधरूपमनर्थं सूचयति । तज्जघन्यकुकृत्यात् प्रागेव प्रकृतिर्म्लायमाना दृश्यते । आलोचको रेनेवेलेकमहोदयो बिम्बमिमं व्याकुर्वाणो निर्दिशति—'In these last lines, Shakespeare gives us a "metaphorical setting for crime.'—पृ० २०६, 'theory of literature.'

उपर्युक्त विवेचनेन सुतरां स्पष्टमिदं यत् क्वचिदुपमालंकारेण सह बिम्बस्य मनोहारिणी छटा क्वचिच्चोपमालंकारमात्रमेव काव्यमलङ्कुरुते । सम्प्रत्युपमा-विरहेपि बिम्बस्य स्थितिरवेक्षणीया—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयान्भूयसा पूर्वकायम् ।
शष्पैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ।। शा० १।७

कविरत्रशरसंपातभीत्या कामं पलायमानं मृगमुपवर्णयति । स्वभावोक्ता-विहोच्चैरुत्प्लुत्योत्प्लुत्याशु प्लवमानस्य मध्ये-मध्ये पश्चात्परावृत्य रथमन्वीक्ष-माणस्य च भीतमृगस्यैको बिम्बः, उद्घातभूमौ स्खलितगतेः मृगानुधाविनो रथस्यापरो बिम्बः, धावतो मृगस्य श्रमविवृतमुखात् पतितार्द्धावलीढैस्तृण-समूहैराकीर्णमार्गस्य च तृतीयो बिम्ब एकसार्द्धमेव पठतां शृण्वतां च काव्यास्वादन-पराणां हृदयवतां चित्तेषूत्पद्यन्ते । कस्यचिदपि वस्तुनो याथा-तथ्यवर्णनकलायामभूत-पूर्वोयं महाकविः । कथ्यं वस्तु सम्यक् प्रकाशयितुं बिम्बविधानमाश्रयते । अत एवास्य काव्यमधिकं-सम्प्रेषणीयमस्ति । यथाह पं० रामदहिनमिश्रः—

'कविता तब हमें अधिक भाव-प्रवण कर देती है, जबकि वह स्वाभाविक रूपों और व्यापारों की योजना करती है, वर्णनीय विषय को गोचर रूप में लाने के लिए पूर्ण चित्र खड़ा कर देती है'—

—काव्य में अप्रस्तुत-योजना, पृ० ५२ ।

उपर्युक्तोदाहरणैरिदं स्पष्टमेव जातं यन्महाकवेः कालिदासस्योपमानानि न केवलं बाह्याकारगतसाम्याश्रितानि अपितु तेषु प्रभावसाम्यतापि वरीवर्ति। रम्यता–औचित्य–यथार्थता–पूर्णतादयस्तु तेषां मुख्यं वैशिष्ट्यम्। एतदतिरिक्तं तस्याप्रस्तुतेषु कल्पनायाः विशालत्वमपि प्रभूतेनोपलभ्यते। तद्यथा—

**उदयगूढशशाङ्कमरीचिभिः—**
**स्तमसि दूरतरं प्रतिसारिते।**
**अलकसंयमनादिव लोचने**
**हरति मे हरिवाहनदिङ्मुखम्॥** वि० ।३।६।

चन्द्रबिम्बं पूर्णतो बहिर्न निर्गतमस्ति। तदुदयगूढमिन्दुमण्डलमेव पूर्वदिग्वध्वाः भास्वरमुखमिवोत्प्रेक्षितम्। अन्धकार समूह एव तस्या कुन्तलभरः। गूढेन्दुकरनिकरैस्तिमिरापसरणन्तु तस्या अलकसंयमनम्। अतः शनैः शनैः अन्धकारराशिं विनाशयता उदीयमान चन्द्रेण प्रकाशितायाः पूर्वदिशो बिम्बः, अलकसंयमनेन सज्जितायाः दीप्ताननायाः रमण्या बिम्बश्चेहं युगपत् प्रस्फुरतः। अनुभवसिद्धमिदं यत् विराटकल्पनाश्रितसाम्यविधानानुरूपमेव हृत्स्वपि विराट्भावना अभ्युदेति। महाकवेः कालिदासस्यान्तर्दृष्टिः निखिलचराचरमध्यस्थसूक्ष्मसम्बन्धसूत्राणि आकलयितुं पूर्णसमर्था आसीत्। तस्य दिव्यकल्पना स्वविराडौपम्ययोजनया मानव-प्रकृत्योर्मध्ये मधुरसम्बन्धस्थापने अद्वितीयेव प्रतिभाति। सुष्ठु भाषते आचार्यो रामचन्द्रशुक्लः—"साम्य का आरोप भी निस्सन्देह एक बड़ा विशाल सिद्धान्त काव्य मे लेकर चला है। वह जगत् के अनन्तरूपों या व्यापारों के वीच फैले हुए उन मोटे-महीन सम्बन्ध-सूत्रों की झलक-सी दिखाकर नीरसता के सूनेपन का भाव दूर करता है, अखिल सत्ता के एकत्व की आनन्दमयी भावना जगाकर हमारे हृदय का बन्धन खोल देता है।"

कार्यमिदं कतिपयसमर्थविराट्कल्पनावद्भिरेव कविभिः शक्यसम्पाद्यम्। कविर्माघ इममेव चन्द्रोदयविषयमन्यथैवोपस्थापयति—

**विशदप्रभापरिगतं विबभावुदयाचलव्यवहितेन्दुवपुः।**
**मुखमप्रकाशदशनं शनकैः सविलासहासमिव शक्रदिशः॥**

—शिशु० ९।२६

अत्र 'विशदप्रभापरिगतम्' अपि पूर्वदिशः स्मितमिन्द्वाननं विगतप्रभमिव प्रतीयते। किन्तु तत्र उदयगूढभ्' अपि शशाङ्कमुखं सद्य एव प्रमातॄणामन्तराह्लादयति। क्व 'हरिवाहनदिङ्मुखस्य अलकसंयमनं' क्व च 'शक्रदिशः अप्रकाशदशनं सविलासहासम्'? महाकवेः प्रतिभा-वैलक्षण्यमत्र विदग्धैस्सुतरां निर्ग्राह्यमस्ति।

कालिदासस्य काव्येषु न केवलमुपमान-वैविध्यमपितु नूतनोपमानबाहुल्यमपि विद्यते । अद्यतनाः कवयस्समालोचका वा प्रायः इदमाक्षिपन्ति यत्परम्पराप्रयुक्तेषूपमानेषु प्रभविष्णुता नावशिष्यते । अनयैव भावनया प्रेरिताः आधुनिक-हिन्दी-कवयः नवीनोपमानप्रयोगस्पर्धायामपरिचिताप्रस्तुतविधाने कृतप्रयत्ना दृश्यन्ते । एतेन न केवलं काव्यचारुताहानिः, सहजबोधगम्यताऽभावोपि भवति । प्रवृत्तिरेषा कालिदासोत्तरसंस्कृत-काव्येष्वपि परिलक्ष्यते । नवप्रयोगलोभी श्रीहर्षस्तु उपमेयं 'तारागणम्' पक्वदाडिमफलस्य निष्ठ्यूतबीजमिव ( २२।१४ नैष० ), घुणव्रजद्वारमिव ( २२।२५ नैस० ) अस्थिभूषामिव ( २२।१२६ नैष० ) चोत्प्रेक्षते ।

कालिदासोत्तरसंस्कृतकवीनां कल्पना सादृश्य-सुनियोजने औचित्यमार्गमुपेक्ष्य-माणैव दृश्यते । अतोऽमीषां भावोपकारविरहे, सन्दर्भाऽसंस्पृष्टे, अयथार्थोपमान-विधाने न तादृशी निसर्गरम्यता न वा संवेदनशीलबिम्बशिल्पनमेवोपलभ्यते । भवतु नाम बुद्धि-वैभव-विलासो हृदयतोषस्तु दुर्लभ एव । किन्तु कविकुलगुरोर्नूतनोपमानविधानन्तु 'क्षणे-क्षणे यन्नवतामुपैति' इत्युक्तिं चरितार्थयति ।

**तद्यथा—**

**एषा मनो मे प्रसभं शरीरात् ।**
**पितुः पदं मध्यममुत्पतन्ती ।**
**सुराङ्गना कर्षति खण्डिताग्रात्**
**सूत्रं मृणालादिव राजहंसी ।।** वि० १।१८ ।।

उर्वशी स्वर्गं प्रत्युत्पतति । पुरुरवसो मनस्तु तस्यामासक्तमस्ति । अतस्तच्छरीरान्मन उद्धृत्येव गगने उत्पततीति प्रस्तुतं व्याकर्तुं राजहंस्या खण्डितमृणालात् विसकर्षणमित्यप्रस्तुतमायोजितम् । 'खण्डित' पदेनात्र वियोग स्यासह्यत्वं मनोहरत्वामनसो बलान्नयनं वा, 'सूत्र' मित्यनेनच पुरुरवसो मनस उच्चत्वं सूक्ष्मत्वं नपावित्र्यादिकं वा 'राजहंसीति' पदेन च उर्वश्याः सामान्याङ्गनापेक्षयोत्कृष्टत्वमपि ध्वन्यते । इत्थमेतत्त्रितयोपमानयोजनेनेह 'खण्डितमृणालात् सूत्रमाकृष्योत्पतन्त्या कस्याश्चिद्राजहंस्या रमणीयस्सुबोधश्च बिम्बः' कस्य मनो नाह्लादयेत् ?

एवमुपर्युक्तकतिपयोदाहरणैः कालिदासस्य बिम्बोपमयोश्च न केवलं वैशिष्ट्यं सिद्धयति, अपितु तस्य महाकेवः कल्पना-सामर्थ्यमपि अनुमीयते ।

—:*:—

## प्राध्यापकानां प्रकाशिताः कृतयः

डा० रामजी उपाध्यायेन विरचिताः सम्पादिताश्च कृतयः

१. प्राचीन भारतीय साहित्य की सांस्कृतिक भूमिका
२. भारतस्य सांस्कृतिकनिधिः
३. द्वासुपर्णा ( संस्कृतोपन्यासः )
४. संस्कृत-साहित्य का आलोचलनात्मक इतिहास
५. Sanskrit and Prakrit Māhā kauyas
६. धन्मपदं
७. आधुनिक-संस्कृतसाहित्यानुशीलनम्
८. संस्कृतनिबन्धावली
९. सागरिका त्रैमासिकी शोधपत्रिका ( वर्ष १ से १० )

### डा० वनमाला भवालकर विरचिताः

१०. महाभारत में नारी
११. पाददण्डम् ( संस्कृतरूपकम् )
१२. रामवनगमनम् ( संस्कृत-संगीतिका )
१३. पार्वतीपरमेश्वरीयम्

## विभागे समापन्नाः शोधप्रबन्धाः

### डी० लिट् उपाधेः

| निबन्ध विषयः | शोधकर्ता |
| --- | --- |
| १. प्राचीन भारतीय साहित्य की सांस्कृतिक भूमिक्रा | डा० रामजी उपाध्याय |

### पी० यच् डी० उपाधेः

| | |
| --- | --- |
| २. रामायण का एक अध्ययन | डा० अैलेय कराडिकर |
| ३. जैन अङ्गशास्त्र के अनुसार मानवव्यक्तित्व का विकास | डा० हरीन्द्र भूषण जैन |
| ४. गुप्त कालीन नाटकों के नारी पात्रों का अध्ययन | डा० कृष्णा सिन्हा |
| ५. पतंजलि कालीन भारत | डा० प्रभुदयाल अग्निहोत्री |

निबन्ध विषयः — शोधकर्ता

६. ऋग्वैदिक आचार — डा० विष्णुदेव शर्मा
७ महाभारत में नारी — डा० वनमाला भवालकर
८. श्री हर्ष के नाटकों का आचलोनात्मक अध्ययन — डा० गोकुल प्रसाद त्रिपाठी
९. उत्सवों का आध्ययन — डा० पद्मा भार्गव
१०. महाभारत में शिक्षण-पद्धति — डा० इन्द्रजीत उप्पल
११. महाभारतीय शिष्टाचार — डा० प्रेमदत्त पंचोली
१२. महाभारतीय धार्मिक प्रवृत्तियाँ — डा० शशिबाला श्रीवास्तव
१३. आचाराङ्ग सूत्र का समीक्षात्मक अध्ययन — डा० परमेष्ठीदास जैन
१४. पण्डिता क्षमाराव एक अध्ययन — डा० कृष्णकान्त शर्मा
१५. महाभारत में लोककल्याण की राजकीय योजनाएँ — डा० कमलेश्वरनाथ मिश्र
१६. कथासरित्सागर में सांस्कृतिक प्रवृत्तियाँ—ओंमप्रकाश हर्ष
१७. बीसवीं शती में संस्कृत–पत्रकारिता का विकास–डा० रामगोपाल मिश्र
१८. श्री महेशचन्द्र तर्कचूडामणि—एक अध्ययन–डा० जगदीशप्रसाद मिश्र
१९. रामावतारशर्मा—एक अनुशीलन—डा० अच्युतानन्द झा
२०. बीसवों शताब्दी में मध्यप्रदेश में संस्कृताध्ययन का विकास — डा० कन्हैयालाल द्विवेदी
२१. सायण भाष्य तथा ऋग्वेद के द्वितीय मण्डल के विभिन्न मन्त्रों का आलोचनात्मक तथा तुलनात्मक अध्ययन—डा० सिद्धनाथ शुक्ल
२२. पारिजातहरण कथा का विकास—डा० गौतमप्रसाद मिश्र
२३. वैष्णव पुराणों में आचार समीक्षा—डा० प्रेमनारायण द्विवेदी
२४. अप्पाशास्त्री राशिवडेकर-व्यक्तित्व और कृतित्व–डा० हीरालाल शुक्ल
२५. अमरकोष में भारतीय संस्कृति—डा० गोमतीप्रसाद शुक्ल
२६. संस्कृत में टीकासाहित्य का विकास—डा० कृष्णहरि शर्मा
२७. महालिंग शास्त्री—व्यक्तित्व और कृतित्व —डा० सुदर्शन त्रिपाठी
२८. स्वातन्त्र्योत्तरकाल में संस्कृत साहित्य का विकास—डा० निर्मला उपाध्याय
२९. प्रमुख उपनिषदों में सांस्कृतिक प्रवृत्तियाँ—डा० साधना गुप्त

| निबन्धः विषय | शोधकर्ता |
|---|---|
| ३०. सत्रहवीं शती में संस्कृत रूपकों का विकास | डा० शङ्करलाल स्वर्णकार |
| ३१. उन्नीसवीं शती में संस्कृत रूपकों का विकास | डा० शिवदर्शन तिवारी |
| ३२. आचार्य मेधाव्रत शास्त्री—व्यक्तित्व और कृतित्व | डा० मायापरमहंस |
| ३३. संस्कृतसाहित्य में गान्धीवाद का प्रभाव | डा० रामप्रसाद वाजपेयी |
| ३४. श्रीमद्भागवत–सांस्कृतिक अध्ययन | डा० किशोरी शरण |
| ३५. यतीन्द्र विमल चौधुरी–व्यक्तित्व तथा कृतित्व | डा० मनोरमा |

# लेखानुक्रमणिका

## प्रथमवर्षतो दशमवर्षपर्यन्तम्

### प्रथमं वर्षम्—अङ्कः प्रथमः

| निबन्धः | लेखकः |
|---|---|
| गौरो हरिः | श्रीमती वनमाला भवालकर |
| अभिनवं पुस्तकालयशास्त्रम् | श्री विश्वनाथशास्त्री |
| संस्कृतपत्रकारिता | ,, रामगोपाल मिश्रः |
| संस्कृतवृत्तम् | ,, विश्वनाय भट्टाचार्य |
| **अङ्कः द्वितीयः** | |
| राजेन्द्रप्रसादचरितम् | श्री रामजी उपाध्यायः |
| परमपादराजेन्द्रगौरवाष्टकम् | डा० वि० काणे |
| तस्माद् युध्यस्व भारत | श्री रामजी उपाध्यायः |
| गङ्गावतरणम् | श्री विष्णुदत्त शुक्लः |
| महाभारतीयं तपः | कु० शशिबाला श्रीवास्तवः |
| लीलामयलीली | श्री महावीर प्रसाद जोशी |
| शाक्तदृष्ट्या सृष्टितत्त्वविमर्शः | ,, गोपीनाथ कविराजः |
| विश्वशान्तेरुपायः | ,, योगेशः |
| मन्दमारुतपञ्चकम् | ,, मां० कृष्ण नम्पूतिरिपादः |
| स्फोटसमाम्नायः | ,, रसिकविहारी जोशी |
| नाटकीयमितिवृत्तम् | ,, विश्वनाथ भट्टाचार्यः |
| सागरिका संवर्धनम् | ,, वटुकनाथशास्त्री खिस्ते |
| संस्कृतपत्रकारिता | ,, रामगोपाल मिश्रः |
| महाभारते नारी | श्रीमती वनताला भवालकरः |
| वलिपुष्टविलसितम् | ,, के० राजन्न शास्त्री |
| कथासरित्सागरे विज्ञानस्वरूपम् | ,, ओमप्रकाश हर्षः |
| गीतामञ्जरी | भेषराज सापकोट शास्त्री |
| संस्कृतशोधकर्मपरिचयः-ग्रन्थसमालोचनम् | |
| संस्कृतवृत्तम् | विश्वनाथ भट्टाचार्यः |
| **वर्षं द्वितीयम्** | |
| **प्रथमाङ्कः** | |
| आधुनिक शिक्षानीतिः | डा० रामजी उपाध्यायः |
| राजेन्द्रस्या युद्धोद्योगः | श्री भोजराजः |
| सांख्यानां साक्षी | ,, शिवचन्द्र भट्टाचार्यः |
| गीतम् | दिनेशः |

| निबन्धः | लेखकः |
|---|---|
| **चतुर्थाङ्कः** | डा० विश्वनाथ भट्टाचार्यः |
| नायकविमर्शः | खरे लक्ष्मण शर्मा |
| परमसत्यम् | श्री गुलालचन्द्र जेनः |
| महाकवेर्हरिदासस्यैतिहासिकनाटकानि | डा० रामजी उपाध्यायः |
| भवभूतिर्विशिष्यते | श्री रामगोपालमिश्रः |
| संस्कृतपत्रकारिता | श्री अच्युतानन्द झाः |
| निबन्धको रामावतार शर्मा | डा० गौतम प्रसाद मिश्रः |
| संस्कृतसाहित्ये पारिजातहरण कथा | डा० वनमाला भवालकरः |
| महाभारते नारीशिक्षा | श्री शिवचन्द्रभट्टाचार्यः |
| शब्दादर्थसम्प्रत्ययः | डा० विश्वनाथ भट्टाचार्यः |
| **वर्षं तृतीयम् प्रथमाङ्कः** | |
| भारतदैवतो जवाहरलालः सुसंहतभारतम् | पुल्लेल श्रीरामचन्द्रु डु |
| **द्वितीयाङ्कः** | |
| सर्वतन्त्रस्वतन्त्रकवितार्किकचक्रवर्ती | डा० राममूर्ति त्रिपाठी |
| संस्कृतपत्रकारिता | डा० रामगोपाल मिश्रः |
| संस्कृतपत्रकारिता | डा० रामगोपाल मिश्रः |
| शोकाञ्जलिः | श्री गुण्डेराव हर्करे |
| कालिदासः | स्व० म० म० रामावतार शर्मा |
| भवभूतेर्नाटकेषु कालप्रियनाथः | म० म० डा वा० वि० मिराशी |
| रघुवंशसंजीवनी | श्री रेवाप्रसाद द्विवेदी |
| साहित्यरत्नाकरस्थ पद्यविमर्शः | पं० के० राजन्न शास्त्री |
| निबन्धको रामावतार शर्मा | झा अच्युतानन्द शर्मा |
| सप्तदशशतकस्य कतिपयरूपकाणि | श्री शंकरलाल स्वर्णकारः |
| श्रीराम० व० वेलणकरः | श्री आर० डी० लड्डू |
| खजुराहो मन्दिरेष्वप्सरो मूर्तयः | श्री बिहारीलालः नागार्चः |
| सागरविश्वविद्यालये संस्कृतशोधकर्म | श्री भूपति भट्टः |
| **तृतीयाङ्कः** | |
| राजतरंगिणी | डा० रामजी उपाध्यायः |
| कुन्तकस्य वक्रोक्तिप्रस्थानं व्यञ्जना च | डा० रविशंकर नागरः |
| कारणत्वं स्वभाववादश्च | श्री शिवचन्द्र भट्टाचार्यः |

| निबन्धः | लेखकः |
| --- | --- |
| संस्कृतशिक्षणस्य कतिपय-समस्याः | डा० रामजी उपाध्यायः |
| मेघदूते रामायणस्य प्रभावः | डा० हरीन्द्रभूषणो जैन. |
| शृङ्गारलहरी तत्कर्त्ता च | डा० प्रभाकरः शास्त्री |
| लक्षणायां व्यञ्जनाया अन्तर्भावयितॄणां मतं तत्खण्डनं च | डा० रविशंकरो नागरः |
| शृंगारवापिका-नाटिका | श्री शङ्करलालः स्वर्णकारः |
| ऊनविंशशतकीयानि कतिपयनाटकानि | पं० शिवदर्शनः तिवारी |
| महाकवेर्दीक्षितस्यैतिहासिकरूपकाणि | श्री गुलाबचन्द्रो जैनः |
| **अङ्कस्तृतीयः** | |
| काम्बुजदेशे भारतीय-संस्कृतिः | डा० रसिकविहारी जोशी |
| नथमल-ब्रह्मचारिणआगमग्रन्थो मुखभाखा च | डा० रामजी उपाध्यायः |
| काव्येऽलोकसामान्यत्वम् | डा० राममूर्तिः त्रिपाठी |
| संस्कृत-पत्रकारिता | डा० रामगोपालो मिश्रः |
| सत्कार्य-क्षणभंगवादयोर्मूलम् | आचार्य शिवचन्द्र भट्टाचार्यः |
| चेतसिंह-विलास-महाकाव्यम् | डा० गौतमप्रसादो मिश्रः |
| श्री रामकृष्ण-परमहंसानां सूक्तयः | पुल्लेल श्रीरामचन्द्रुडुः |
| **अङ्कश्चतुर्थः** | |
| ब्रह्माद्वैत-विज्ञानवादयोः साम्यवैषम्यम् | आचार्यो जगन्नाथ उपाध्यायः |
| भारतस्यैतिह्यम्, अभ्युदयः, संस्कृतविद्या च | डा० विश्वनाथो भट्टाचार्यः |
| मेघदूतस्यैकं पद्यम् | डा० रेवाप्रसादो द्विवेदी |
| व्यञ्जनाविषये भट्टनायकमतसमीक्षा | डा० रविशङ्करो नागरः |
| अभिनवराघव-नाटकम् | पं० शिवदर्शन तिवारी |
| गंगासागरीयम् | श्रीमती निर्मला उपाध्यायः |
| यतीन्द्रविमल-चतुर्धुरीणस्य कृतित्वम् | सुश्री मनोरमा सक्सेना |
| **वर्षः पञ्चमम्, प्रथमाङ्कः** | |
| वैदिककालीनं शिल्पम् | डा० रामजी उपाध्यायः |
| कालिदासीयं नाट्यजगत् | डा० विश्वनाथ भट्टाचार्यः |
| मदालसाचम्पूकर्ता त्रिविक्रमभट्टः | म० म० डा० वा० वि० मिराशी |
| ऋग्वैदिकचरित्रनिर्माणम् | डा० रामजी उपाध्यायः |

| निबन्धः | लेखक |
|---|---|
| कालिदास भारती | डा० रेवाप्रसाद द्विवेदी |
| अलङ्कारप्राधान्यवादिनां ध्वनिविरोधस्तत्खण्डनश्च | डा० रविशंकर नागरः |
| स्वातन्त्र्योत्तरकाले संस्कृतसाहित्यम् | श्रीमती निर्मलोपाध्यायः |
| धर्मविजय-नाटकम् | शंकरलालस्वर्णकारः |
| अष्टादशशतकस्य प्रहसनद्वयम् | बिहारीलालनागार्चः |
| ऊनविंशशतकस्य गीतकाव्यम् | कु० कृष्णा खरे |
| गीतकाव्यम्-कण्टकाञ्जलिः | कु० माया तिवारी |
| **द्वितीयाङ्कः** | |
| राजशेखरस्यावन्तिप्राकृतम् | डा० भास्कराचार्यत्रिपाठी |
| व्यञ्जनायाः स्वरूपं विकासश्च | डा रविशंकर नागरः |
| कविकलानिधिः श्रीकृष्णभट्टः तस्य सुन्दरीस्तवराजश्च | डा० प्रभाकर शास्त्री |
| आदर्शदम्पती उपन्यासिका | पुष्करदत्त शर्मा |
| ऊनविंशशताब्द्या एकाङ्करूपकाणि | शिवदर्शन तिवारी |
| मेलनतीर्थ-भारतम् | कु० मनोरमा सक्सेना |
| भारतीयसंस्कृतिदर्शनम् | डा० रामजी उपाध्यायः |
| **तृतीयाङ्कः** | |
| कालिदास भारती | डा० रेवाप्रसाद द्विवेदी |
| अष्टादशशतकस्य तिस्रो वीथ्यः | बिहारीलालनागार्च |
| ऊनविंशशतकस्य रूपकाष्टकम् | शिवदर्शन तिवारी |
| रणेन्द्रनाथगुप्तस्य हरिश्चन्द्रचरितम् | गुलाबचन्द्र जैनः |
| अमरमीरम् | कु० मनोरमा सक्सेना |
| राजवैद्य श्रीकृष्णरामभट्टः तस्य कृतयश्च | डा० प्रभाकर शास्त्री |
| वसुमती चित्रसेनीयम् | शंकरलाल स्वर्णकारः |
| जागरणम् | श्रीमती माया पाठकः |
| कामस्य रसरूपेण प्रथमः समुल्लासः | रमाशंकर जैतली |
| तैत्तिरीयसंहिता ५।६।१।१-२ मन्त्रस्य विनियोगः | डा० कृष्णलालः |

| निबन्धः | लेखकः |
|---|---|
| **तृतीयाङ्कः** | |
| अनूपसिंहस्तस्य संस्कृतसंवर्धनञ्च | डॉ॰ रामजी उपाध्यायः |
| कालिदास - भारती | डॉ॰ रेवाप्रसाद द्विवेदी |
| उद्दाण्डिकवेर्मल्लिकामारजम् | डा॰ वा॰ वि॰ मिराशी |
| काव्यगौरवे कालिदासकाव्यम् | डा॰ विश्वनाथ भट्टाचार्यः |
| जयपुरीय-शतक-काव्य-परम्परा | डा॰ प्रभाकर शास्त्री |
| अष्टादशशतकीय केरलप्रदेशीय नाटकत्रयम् | श्री बिहारीलाल नागार्चः |
| **चतुर्थाङ्कः** | |
| कालिदासकाव्येषु कलायाः प्रकृतिप्रभावौ | डा॰ कु॰ मिनति चक्रवर्ती |
| कर्णपूरः तस्य चैतन्यचन्द्रोदयं नाटकञ्च | श्री गणेशप्रसाद मिश्रः |
| मुक्तकप्रबन्धगतरसचर्वणयोस्तरमस्ति वा न वा | डा॰ राममूर्ति त्रिपाठी |
| सभेदार्या सप्तशती | डा॰ प्रभाकर शास्त्री |
| गाङ्गेट्टश्शोरिकृष्णनम्पूतिरिपादः | |
| संस्कृतसाहित्ये श्लेषमूलकपरिसंख्या | श्री महेन्द्रप्रताप थापरः |
| यक्षगानम्-संस्कृतभाषायां तेलुगु-नाट्यप्रयोगः | डा॰ सीताराम दांतरे |
| पण्डितराज-पद्यपूर्ति-संशोधनम् | डा॰ रेवाप्रसादद्विवेदी |
| उत्तररामचरिते हास्यरसः | श्री दिव्याक्षकुमार पण्ड्या |
| परस्मैपदविधायकसूत्रेषु कश्चन विचारः | श्री शिवनारायण शास्त्री |
| रसाचार्यो; रुद्रटः | श्री कृष्णकुमार लालः |
| मेघदूतस्य रूपान्तराणि | श्री प्रह्लादकुमारः |
| अथर्ववेदेऽग्नितत्त्वम् | श्री नन्हेप्रसाद द्विवेदी |
| **वर्षं सप्तमम् प्रथमाङ्कः** | |
| सीताचरित महाकाव्यम् | डा॰ रेवाप्रसाद द्विवेदी |
| **द्वितीयाङ्कः** | |
| रसस्य शाब्दत्वम् | डा॰ रेवाप्रसाद द्विवेदी |
| महर्षि वाल्मीकेराश्रमस्य स्थानम् | डा॰ वा. वि. मिराशी |
| चित्रबन्धसाहित्ये कमलबन्धाः | डा॰ रुद्रदेवत्रिपाठी |
| शरभनृपः तस्य कुमारसम्भवचम्पूश्च | डा. सीताराम दांतरे |
| अर्थविज्ञानम् | सत्यव्रतः |
| महामहोपाध्याय शंकरलाल शास्त्री तस्य रूपकाणि च | डा. शिवदर्शनः तिवारी |

| निबन्धः | लेखकः |
|---|---|
| जगद्विजयछन्दस्याधिकरणम् | डा. रामजी उपाध्यायः |
| संस्कृतायतिः | डा. भास्कराचार्यः |
| रसादिध्वनेरसंलक्ष्यक्रमता विचारः | डा. पुल्लेल श्रीरामचन्द्रुडुः |
| वैदिकी वर्णव्यवस्था | श्री राधावल्लभत्रिपाठी |
| महाभारतानुसारमुपायदर्शनम् | श्री गोपीकृष्ण द्विवेदी |
| **तृतीयाङ्कः** | |
| कुमारसम्भवे कालिदासोद्भटाचार्ययोः संवादः | डा. रेवाप्रसादद्विवेदी |
| राजशेखरवृत्तम् | डा. भास्कराचार्यत्रिपाठी |
| रामनारायण तर्करत्नस्य दक्षयज्ञमहाकाव्यम् | डा. रामजी उपाध्यायः |
| जैनबौद्धयोः कतिपय पारिभाषिक—शब्दानां तुलनात्मक विवेचनम् | डा. हरीन्द्र भूषण जैनः |
| संन्यासः कर्मयोगश्च | श्री राधावल्लभत्रिपाठी |
| रसस्य शाब्दत्वमीमांसा | श्री विश्वनाथमिश्रः |
| **चतुर्थाङ्कः** | |
| जयरथमते काव्यस्यार्थक्त्वम् | डा. रेवाप्रसाद द्विवेदी |
| बाणभट्टनिर्दिष्टाः कतिपय—उत्कृष्टकाव्यधर्माः | श्री अमरनाथपाण्डेयः |
| ध्वनिलक्षणसमन्वयः | डा. रविशङ्कर नागरः |
| कुमारसंभवस्योपजोव्यानुसन्धानम् | डा. रामजी उपाध्यायः |
| ऋग्वेदव्याख्याया उद्भवो विकासश्च | डा. सिद्धनाथ शुक्लः |
| काव्यविवेचने ध्वनिसिद्धान्तः | डा. विश्वनाथ भट्टाचार्यः |
| श्र्यंक महाकाव्यम् | श्री कन्हैया पाण्डेयः |
| पर्यायविवेकः | श्री सत्यव्रतः |
| ऋग्वेदेग्ने राष्ट्रियं स्वरूपम् | श्री नन्हेप्रसाद द्विवेदी |
| भावोत्कर्षे हृष्टचभिनयः | श्री राजमूर्तिपाण्डेयः |
| **वर्षमष्टमम्—अङ्कः प्रथमः** | |
| रसार्णवसुधाकरः | शिङ्गभूपालः |
| **द्वितीयाङ्कः** | |
| रसार्णवसुधाकरः | शिङ्गभूपालः |

| निबन्धः | लेखकः |
|---|---|
| गुणविधेर्मत्वर्थलक्षणाभावविमर्शः | डा० रामशरणशास्त्री |
| वर्णविषयिणी व्याकरणशास्त्रीया मान्यता | डा० गङ्गाराम पाण्डेयः |
| कुमारसंभवरघुवंशयोः पौर्वापर्यम् | डा० रामजी उपाध्यायः |
| गुमानिकवेः काव्यसाधना | श्री जनार्दनशास्त्री पाण्डेयः |
| महाकविर्मालवीयः तत्काव्यं च | श्री रहसबिहारी द्विवेदी |
| पाणिनिप्रयुक्ता इच्छार्थकाः केचन शब्दाः | डा० जानकीप्रसादद्विवेदी |
| **द्वितीयाङ्कः** | |
| स्वप्नवासवदत्तावेणीसंहारयोरङ्गिरसविमर्शः | डा० रामजी उपाध्यायः |
| व्यञ्जनाविषये महिमभट्टमतसमीक्षा | डा० रविशंकरनागरः |
| काशिकासिद्धान्तकौमुद्योर्वेदवचनानि | श्री महेशदत्त शर्मा |
| प्रत्यक्षतत्त्वविमर्शः | श्री कीर्त्यानन्द झा |
| पण्डितराजकृता उत्प्रेक्षाभेदाः | डा० रेवाप्रसाद द्विवेदी |
| बाणभट्टस्य केचन दोषाः | डा० अमरनाथपाण्डेयः |
| सीताचरिते कालिदासप्रतिच्छविः | श्री रहसविहारी द्विवेदी |
| श्रीदत्तदीनेशचन्द्रस्य जीवनं कृतित्वं च | श्री राधावल्लभ त्रिपाठी |
| भाषा-विवेचनम् | डा० गजानन शास्त्री |
| कुमारसम्भवनायिकाविमर्शः | डा० कृष्णा दासः |
| शोभाकरमित्रस्य नवीना अलङ्काराः | श्री विहारीलाल शर्मा |
| शाकुन्तले कालिदासस्य व्यक्तित्वम् | डा० ब्रह्ममित्रः अवस्थी |
| आख्यातपदलक्षणम् | श्री जगदीश चतुर्वेदी |
| श्रवणमनननिदिध्यासनानां विधिविमर्शः | ,, केशवप्रसाद पाठकः |
| नञर्थविमर्शः | ,, हरिश्चन्द्रमणित्रिपाठी |
| रामायणे असामञ्जस्यम् | ,, राधावल्लभ त्रिपाठी |
| **तृतीयोऽङ्कः** | |
| पुराणवाङ्मये गुरुः | श्री महेशचन्द्र जोशी |
| श्रुतिहृदयम् | डा० गजानन शास्त्री |
| संस्कृतवर्णमालयाः स्वरूपमायामाश्च | डा० गङ्गाराम पाण्डेयः |
| रघुनाथाभ्युदयकाव्यम् | डा० सीतार म दांतरे |
| संशयविषये न्यायभाष्यवार्तिकविचाराः | डा० श्रीनारायणमिश्रः |
| जीवपरिमाणविचारः | श्री उमेशचन्द्र पाण्डेयः |

———